# PARĀŚARA-SMṚTI

## PARĀŚARA MĀDHAVA

VOLUMES II AND III

PRĀYAŚCHITTAKĀṆḌA AND VAVYAHĀRAKĀṆḌA

*With the Gloss By*

MADHAVACHARYYA

*Edited with Notes By*

MAHĀMAHOPĀDHYAYA CHANDRAKĀNTA TARKĀLAṄKĀRA




THE ASIATIC SOCIETY

1973

# पराशर-स्मृतिः

श्रीमन्माधवाचार्य्यकृतव्याख्या साहिता

प्रायश्चित्तकाण्ड-व्यवहारकाण्डरूप

द्वितीय–तृतीयभागात्मिका

महामहोपाध्याय श्रीचन्द्रकान्त तर्कालङ्कार परिशोधिता









दि एशियाटिक सोसाइटि
१९७३

# PREFACE

THE Parāśara-Mādhava or the Parāśara-Smṛti with the gloss of Mādhavāchārya, the celebrated scholar of the Southern school in the fourteenth century, was edited by Pandit Chandrakanta Tarkālaṅkāra and published by the Asiatic Society in three volumes between the years 1890 and 1892.

Mādhavācharya, also known as Vidyāraṇya was the *kulaguru* (adviser in temporal and spiritual matters) to the first three kings of Vijayanagara, viz., Harihara I, Bukka I and Harihara II. It was at the instance of Bukka I that Mādhavāchārya undertook to compose fresh commentaries on Dharmaśāstra texts and re-interpret the old social and religious laws in accordance with the spirit of the age. During his long career of scholastic activities (century 1300-1380 A. D.), Mādhava produced numerous treatises on varied subjects including *Kāvya* and *Darśana,* besides *Smṛti,* and *Jyotiṣa,* of which the Parāśara-Mādhava is the most outstanding work.

In spite of the wide currency of the Manusmṛti, the well known theory *"Kalau Pārāśarah Smṛtah"* and the spirit of accomodation with the changing times, without sacrificing traditional values, running through the text, might have encouraged Mādhava to choose the Parāśara-Smṛti as the basis for his exposition. But, not content with explaining the scope and significance of laws as laid down by Parāśara, Mādhavāchārya in his commentary dwelt extensively on the principles of administration of justice (vyavahāra) in regard to civil disputes as well as transgression of the limits of law, on which the extant text had but little.

Naturally therefore, the Digest of Civil and religious law of Mādhava came to be held as an authority on Hindu Law in Southern and Western India for a long time. Scholars on Dharmaśāstra in other regions including Bengal, evinced keen

interest on Mādhavāchārya's methodology. It is interesting to note that still to date the text is held in high esteem among scholars, and it continues to be studied as a basic text book for the *smṛti* courses of study in different *chatuṣpāṭhīs* in the country. But the Society's edition, published in the last decade of the 19th century, went out of print long ago, and the library copies, wherever available, have also been extremely worn out and almost unusable. Hence this reprint edition by photo-offset process in two volumes (the second and third of the original edition being combined in the second volume), which we hope will remove a long-felt want of the scholars.

In this connection we respectfully remember that at the suggestion of the late Mahāmahopādhyāya Kalipada Tarkāchārya the Council of the Society decided upon bringing out the current edition of this important treatise. Our thanks are also due to Dr. R. K. Sharma of the Ministry of Education and Culture, Government of India, for taking interest in the project and providing the Society with 50% of the cost of production by way of advance.

The Second Volume, consisting of the *Prāyaśchitta Kāṇḍa* and the *Vyavahāra Kaṇḍa*, is released earlier than the First Volume, as some portions of the latter could not be brought under photo process, and are being composed for printing. In any case it will also come out soon.

The Asiatic Society
Calcutta, July 1973

S. K. Mitra
*General Secretary*

## पराशरमाधवः ।

# प्रायश्चित्तकाण्डम् ।

## चतुर्थोऽध्यायः ।

ॐ नमोगणेशाय नमः ।

वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।
यं नत्वा क्वतक्वत्याः स्युस्तं नमामि गजाननम् ॥
सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परम्
मज्जन् सज्जन-तीर्थ-सङ्गनिपुणः सद्वृत्ततीर्थं श्रयन् ।
लब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो-
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ॥
सत्यैकव्रतपालकोद्विगुणधीस्त्वार्थी चतुर्व्वेदिता
पञ्चस्कन्धक्वती षडन्वयदृढः सप्ताङ्गसर्व्वंसहः ।
अष्टव्यक्तिकलाधरोनवनिधिः पुष्यद्दशप्रत्ययः
स्मार्त्ताच्छायधुरन्धरोविजयतां श्रीवुक्कणक्ष्मापतिः ॥
इन्द्रस्याङ्गिरसोनलस्य सुमतिः शैव्यस्य मेधातिथि-
र्धौम्योधर्मसुतस्य वैण्यनृपतेः स्वौजानिमेर्गौतमिः ।

सत्यस्मृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो-
यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः॥
प्रज्ञामूलमही विवेकसलिलैः सिक्ता बलोपघ्निका
मन्त्रैः पल्लविता विशालविटपा सन्ध्यादिभिः षड्गुणैः।
शक्त्या कोरकिता यशःसुरभिता सिद्ध्या समुद्यत्फला
सम्प्राप्ता भुवि भाति नीतिलतिका सर्व्वोत्तरं माधवम्॥
श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ*॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी।
भारद्वाजं कुलं यस्य सर्व्वज्ञः स हि माधवः*॥
स माधवः सकलपुराणसंहिता-
प्रवर्त्तकः स्मृतिसुषमा† पराशरः।
पराशरस्मृतिजगदीप्सिताप्तये
पराशरस्मृतिविवृतौ प्रवर्त्तते॥

श्रीपराशरेणाचारकाण्डरूपेणातीतेनाध्यायत्रयेण विधिनिषेधौ दर्शितौ। अथेदानीं तदुल्लङ्घननिमित्तप्रत्यवायपरिहारोपायप्रतिपादकं प्रायश्चित्तकाण्डमारभ्यते। प्रायश्चित्तशब्दस्य रूढ्या योगेन च पापनिवर्त्तनक्षमं धर्मविशेषमाचष्टे। प्रायश्चित्तशब्दोऽयं पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढः,—इत्याहुः समस्तार्थविदो-निबन्धनकारादयः‡। योगश्चाङ्गिरसा दर्शितः,—

---

* श्लोकाविमौ व्यत्यासेन वर्त्तेते मु॰ पुस्तके।

† स्मृतिसुषमा। ‡ निबन्धनकाराः,—इति मु॰ पुस्तके पाठः।

"प्रायोनाम तपः प्रोक्तं चित्तं निश्चयउच्यते ।
तपोनिश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते ॥
प्रायशस्य समं चित्तं चारयित्वा प्रदीयते ।
परिषदा कार्य्यते यत्तत् प्रायश्चित्तमिति स्मृतम्"—इति ॥

अनुष्ठितेन द्वादशवार्षिकव्रतादिनाऽवश्यं पापं निवर्त्तते,—इति विश्वासोनिश्चयः। तेन संयुक्तं व्रतानुष्ठानलक्षणं तपः प्रायश्चित्तम्। पापिनोऽनुतापिनश्चित्तं व्याकुलं सदिषमं भवति, तच्च परिषदा येन व्रतानुष्ठानेन प्रायशोऽवश्यं समं कार्य्यते, तद्व्रतं प्रायश्चित्तम्। चित्तसमीकरणोपपादनं चारयित्वा प्रदीयते,—इति, व्रतं चारयित्वा चित्तवैषम्यनिमित्तं पापं प्रदीयते खण्ड्यते विनाश्यते,—इत्यर्थः। यद्वा, परिषदुपविष्टानां सर्व्वेषां चित्तं यथा समं भवति, तथा चारयित्वैकमत्येन विचार्य्य प्रदीयते विधीयते कार्य्यते अनुष्ठाप्यते,—इत्यर्थः ।

अत्रेदं चिन्त्यते। किमिदं प्रायश्चित्तं नित्यं, उत नैमित्तिकं, अथवा काम्यम्? इति। अत्र केचिदाहुः। "प्रायश्चित्तैरपैत्येनः"—इत्यादिस्मृतिषु पापक्षयस्य फलत्वेनावगमात् कामस्याधिकारात्* काम्यं, यथा वृष्ट्यादिफलकामस्य कारीर्य्यादि। अन्ये मन्यन्ते। पापं निमित्तीकृत्य विधानान्नैमित्तिकम्। यथा गृहदाहं निमित्तीकृत्य प्रवृत्ता क्षामवतीष्टिः। अपरे त्वाहुः। अकरणे प्रत्यवायदर्शनान्नित्यं, यथा सन्ध्यावन्दनादि। अकरणे प्रत्यवायश्च मनुना दर्शितः,—

"चरितव्यमतोनित्यं प्रायश्चित्तं विशुद्धये ।

---

* फलकामस्याधिकारात्,—इति पाठोभवितुं युक्तः ।

निन्द्यैश्च लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः"—इति।

याज्ञवल्क्येनापि,—

"प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान्॥
तामिस्रं लोहशङ्कुञ्च महानिरय-शाल्मली।
रौरवं कुड्मलं पूतिमृत्तिकां कालसूत्रकम्॥
सङ्घातं लोहितोदञ्च सविषं सम्प्रतापनम्*।
महानरककाकोलं सञ्जीवनमहापथम्॥
अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च।
असिपत्रवनं चैव तापनं चैकविंशकम्॥
महापातकजैर्घोरैरुपपातकजैस्तथा।
अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः—इति।

अत्रोच्यते। नैमित्तिकमेवेदं भवितुमर्हति। निमित्तमेव प्राधान्येनोपजीव्य सर्व्वप्रायश्चित्तविधानात्। तदुपजीवनं च, "ब्रह्महा द्वादशाब्दानि"—इत्यादिषु स्मृतिषु विस्पष्टम्। यत्तु फलश्रवणं, तज्जातेष्टिन्यायेन नैमित्तिकत्वेऽप्यविरुद्धम्(१)। तस्यापि† फलस्य

* सम्प्रपातनम्,—इति मु॰ पुस्तके पाठः।

† तथाहि,—इति मु॰ पुस्तके पाठः।

(१) यथा हि "वैश्वानरं द्वादशकपालं निर्व्वपेत् पुत्रे जाते"—इति पुत्रजन्म निमित्तीकृत्य विहितायाजातेष्टेर्नैमित्तिकत्वेऽपि, "यस्मिन् जाते एतामिष्टिं निर्व्वपति पूत एव स तेजस्वी अन्नाद इन्द्रियावी

नियोज्यविशेषणत्वेनाश्रवणात् न काम्यत्वम्। न हि, "ब्रह्महा द्वादशाब्दानि" इत्यादिषु फलं नियोज्यविशेषणतया श्रुतम्। अतोन प्रायश्चित्तस्य कारीर्य्यादिभिः साम्यम्, नाप्येतन्नित्यम्। तल्लक्षणाभावात्। न ह्युदाहृतानि वचनानि प्रायश्चित्ताकरणे नूतनं किञ्चिद्दुरितापूर्व्वं जन्यते इति ब्रुवते; किन्तर्हि, प्रायश्चित्तमकुर्व्वतोऽवश्यं निषिद्धाचरणेषु प्रवृत्तिर्भवतीति एतावन्मात्रं प्रतिपादयन्ति। एतच्च, "पापेषु निरतानराः"—इत्यत्र विस्पष्टमवगम्यते।

ननु, नैमित्तिकानामप्यकरणे प्रत्यवायोऽस्ति। तथा, महाभारतम्,—

"सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्व्वाणस्तु तत् श्राद्धं पङ्के गौरिव सीदति"—इति।

वृद्धवशिष्ठोऽपि,—

"ग्रहणे संक्रमे वाऽपि न स्नायाद्यदि मानवः।
सप्तजन्मनि कुष्ठी स्याद्दुःखभागी च जायते"—इति।

एवं तर्हि, यत्र जीवनमधिकारिविशेषणं तन्नित्यम्। यथा, "यावज्जीवमग्निहोत्रं जुहुयात्"—इति। प्रायश्चित्ते तु न जीवनमधिकारिविशेषणम्, अपि त्वन्यदेव विहिताकरणादिनिमित्तमधिकारि-

---

पशुमान् भवति"—इत्यर्थवादावगतफलसंबन्धस्तत्राविरुद्धः। तथा प्रकृतेऽपि पापं निमित्तीकृत्य विहितस्य प्रायश्चित्तस्य नैमित्तिकत्वेऽपि अर्थवादावगतपापक्षयरूपफलसंबन्धस्तत्राविरुद्धः। जातेष्टिन्यायश्च, मीमांसादर्शनस्य चतुर्थाध्यायस्य तृतीयपादे प्रदर्शितः। तच्च तच्च सप्तदशाधिकरणम्।

विशेषणम्। तस्मात् नैमित्तिकं प्रायश्चित्तम्। तथा च बृहस्पतिः प्रायश्चित्तप्रकरणस्योपक्रमोपसंहारयोः नैमित्तिकत्वं दर्शयति,—

"नैमित्तिकं धर्मजातं गदतोमे निबोधत।

विहितस्याननुष्ठानात् निन्दितस्य* निषेवनात्॥

प्रायश्चित्तं यत् क्रियते तत् नैमित्तिकमुच्यते"—

इत्युपक्रमः,

"नैमित्तिकं समाख्यातं प्रायश्चित्तं समासतः"—

इत्युपसंहारश्च। तत्र निमित्तं दुरितापूर्व्वं, तदुत्पत्तिकारणं याज्ञवल्क्येन दर्शितम्,—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।

अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति"—इति।

मनुनाऽपि,—

"अकुर्व्वन् विहितं कर्म निन्दितञ्च समाचरन्।

प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः"—इति।

ननु, निन्दितसेवनाद्भावरूपाद्दुरितोत्पत्तावपि विहिताकरणादभावात् कथं दुरितोत्पत्तिः, न ह्यभावाद्भावउत्पद्यमानः क्वचिद्दृष्टः(१)। अत्र केचिदाहुः। सन्ध्यावन्दनादिविहिताननुष्ठान-

* प्रतिषिद्ध,—इति स० ग्रा० सो० पुस्तकेषु पाठः।

(१) "कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेत"—इति श्रुत्या ( छा० उ० ६ प्र० ) अभावाद्भावोत्पत्तिर्निराकृता,—इत्यपि सर्त्तव्यम्।

मग्निहोत्राद्यनधिकाररूपाशुचित्वद्योतकम्। अयमेवार्थः, 'अकुर्व्वन् प्रत्यवैति'—इत्यनेनाभिधीयते। न त्वनुष्ठानाभावाद्भावरूपस्य दुरितस्योत्पत्तिरभिधीयते। स चानधिकारः प्रायश्चित्तेन निवर्त्तनीयः,—इति। अपरे पुनराहुः। 'अकुर्व्वन्'—इति लक्षणार्थे शतृप्रत्ययः। यदेतद्विहिताकरणं तदेतत् प्राग्भवीयनिषिद्धाचरणजन्यदुरितापूर्व्वसद्भावस्य लिङ्गं(१), तदेव दुरितं प्रायश्चित्तेन निवर्त्तते,—इति। अन्ये त्वेवं समादधते। अभावाद्भावोनोत्पद्यते,—इति नायमेकान्तः, तार्किकमते प्रागभावस्य कारणत्वात्। मीमांसकमते, भाट्टैस्ताव-दभावाद्भावोत्पत्तिरभ्युपगता, योग्यानुपलब्धिलक्षणादभावात् प्रमाणाद्घटाद्यभावविषयप्रमितेर्भावरूपाया जननात्। प्राभाकरैस्त्वभाव एव नाभ्युपगम्यते,

"भावान्तरमभावोहि कयाचित्तु व्यपेक्षया"—

इत्युदीरणात्। तथा च सति, विहिताकरणमपि भावान्तरमेवेति कृत्वा तस्मात् प्रत्यवायउत्पद्यतां का तव हानिः। अथोच्येत, प्रत्यवायोनाम दुरितापूर्व्वं, तच्च कृतिसाध्यत्वे सति कृत्युद्देश्यं, तथा च विहिताकरणस्य कृतिरूपत्वाभावादपूर्व्वजनकत्वं नास्तीति। नायं दोषः। तस्य लक्षणस्य विहितप्रतिषिद्धकर्मजन्यापूर्व्वविषयत्वेन सङ्को-

---

(१) तथाच "लक्षणहेत्वोः क्रियायाः"—इति व्याकरणस्मृत्या लक्षणार्थेऽपि शतुरनुशासनादत्र शतुर्लक्षणार्थत्वमेव न हेत्वर्थत्वमिति भावः। यच्चैतदुक्तम्। "नित्यानामक्रिया यस्माल्लक्षयत्यतिसत्वरा। प्रत्यवायक्रियां तस्माल्लक्षणार्थे शता भवेत्",—इति।

चनीयत्वात्। अन्यथोपेक्षाऽऽलस्याभ्यामक्षतिरूपाभ्यां दुरितापूर्व्वानुत्पादप्रसङ्गात्। उपेक्षाजन्यं च दुरितापूर्व्वं स्कन्दपुराणे दर्शितम्,—

"नाभिरक्षन्ति ये शक्तादीनं चातुरमाश्रितम्।
आर्त्तं न चानुकम्पन्ते ते वै निरयगामिनः"—इति।

आलस्यजन्यं चापमृत्युनिमित्तं दुरितापूर्व्वं मनुना प्रदर्शितम्,—

"अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति"—इति।

अथ, कथञ्चित्तत्र क्षतिः सम्पाद्येत, तर्ह्यत्रापि विहितोल्लङ्घनलक्षणा क्षतिरस्तु। एवञ्च सति बहूनि स्मृतिवचनान्यकरणे प्रत्यवायपराणि स्वारस्येनार्थवन्ति भविष्यन्ति। ईश्वरवादिनान्तु विहिताकरणस्याज्ञोल्लङ्घनरूपत्वात् क्षतिरूपत्वं विस्पष्टम्। अतएव स्मर्य्यते,—

"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते।
आज्ञाच्छेदी मम द्वेषी न स भक्तोन वैष्णवः*"—इति।

सर्व्वथा विहितमकुर्व्वतः प्रायश्चित्तनिमित्तं दुरितापूर्व्वमस्त्येव। निन्दितसेवने त्वविवादं दुरितापूर्व्वम्। ननु, 'अनिग्रहाच्चेन्द्रियाणाम्',—इति पृथगुपादानमयुक्तं, विहिताकरणान्निन्दितसेवनाच्चान्यस्य तृतीयस्य दुरितहेतोरभावात्। मैवम्। अस्योभयात्मकत्वेन तृतीयत्वोपपत्तेः। तथाहि,—

"इन्द्रियार्थेषु सर्व्वेषु न प्रसज्येत कामतः"—इति

इन्द्रियप्रसक्तेर्निन्दितत्वं शाब्दं, स्नातकव्रतप्रकरणमध्ये पाठात्

---

* स मे वध्यतमोमतः,—इति मु० पुस्तके पाठः।

प्रसक्तिप्रतिषेधसङ्कल्पस्य तत्र विधेयत्वेनावगमात् विहितत्वमार्थिकम्[१] तथा च, अनिग्रहस्योभयोः सङ्कल्पत्वात् तृतीयनिमित्तत्वेन पृथगुपादानम्। तदेवं विहिताकरणादिनिमित्तवन्तं प्रति चोदनान्नैमित्तिकं प्रायश्चित्तम्।

ननु, गौतमस्मृतावस्य काम्यत्वं प्रतीयते, फलभावाभावावुपजीव्य पूर्व्वोत्तरपक्षाभ्यां तस्य कर्त्तव्यत्वनिर्णयात्। तद्वचनं च, "उक्तो-वर्णधर्मश्चाश्रमधर्मश्च। अथ खल्वयं पुरुषो याप्येन कर्मणा लिप्यते, यथै-तदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया निषिद्धसेवनमिति। तत्र प्रायश्चित्तं कुर्य्यात् न कुर्य्यात् इति मीमांसन्ते। न कुर्य्यादित्याहुः। न हि कर्म क्षीयते,—इति। कुर्य्यादित्यपरे। पुन-स्तोमेनेष्ट्वा पुनः सवनमायान्तीति विज्ञायते, व्रात्यस्तोमेनेष्ट्वा तरति सर्व्वं पाप्मानन्तरति ब्रह्महत्यां योऽश्वमेधेन यजते"—इति। अयमर्थः। याप्यं गर्हितमयाज्ययाजनादि, तत्कृतस्य पापस्य निवर्त्तयितुमशक्य-त्वात् तन्निवृत्तये प्रायश्चित्तं न कर्त्तव्यम्। न हि कृतं कर्म भोग-मन्तरेण क्षपयितुं शक्यते। अतएव स्मृत्यन्तरम्,—

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।
अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्"—इति।

---

(१) यथा प्रजापतिव्रते "नोद्यन्तमादित्यमीक्षेत नास्तं यान्तम्"—इत्य-त्रानीक्षणसङ्कल्पोलक्ष्यते "तस्य व्रतम्"—इति व्रतत्वेन कीर्त्तनात्। तथा प्रकृतेऽपि स्नातकव्रतत्वेन कीर्त्तनात् प्रसक्तिप्रतिषेधसङ्कल्पो लक्ष्यते,—इति भावः। एतच्च, मीमांसादर्शनस्य चतुर्थाध्यायस्य प्रथमपादे तृतीयाधिकरणे भाष्यादौ व्यक्तम्।

शङ्खोऽपि,—

"यथा पृथिव्यां वीजानि रत्नानि निधयोयथा ।
एवमात्मनि कर्माणि तिष्ठन्ति प्रभवन्ति च"—इति ।

यद्यन्तरेणापि भोगं दुरितलेपः चीयेत, तदा सुकृतलेपोऽपि चीयेतेत्यतिप्रसङ्गः । तस्मात् प्रायश्चित्तं न कर्त्तव्यमिति पूर्व्वपचिण आहुः ।

कुर्य्यादेव प्रायश्चित्तमिति प्रामाणिकानां दर्शनम् । ते हि श्रुतिमुदाहरन्ति, 'पुनस्तोनेनेष्ट्वा पुनः सवनमायान्ति'—इति । अयाज्ययाजनादिभिर्नित्यकर्म्माधिकाराद्भ्रष्टा ऐकाहिकेनेष्ट्वा सवनत्रयसाध्यं कर्म्म पुनः प्राप्नुवन्ति तत्राधिक्रियन्त इति यावत् । 'नाभुक्तं चीयते कर्म'—इत्यकृतप्रायश्चित्तविषयं सुकृतविषयञ्च । तथाच स्मृत्यन्तरम्,—

"कदाचित् सुकृतं कर्म कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावत्तस्माद्विमुच्यते"—इति ।

यदि, 'नाभुक्तम्' इति शास्त्रमसङ्कोचेन निरङ्कुशं प्रवर्त्तेत, तदा पापक्षयप्रतिपादिकाः सर्व्वाः श्रुतयः स्मृतयश्च कुप्येरन् । तस्मात्, पापक्षयाय प्रायश्चित्तं कर्त्तव्यमिति सिद्धान्ताभिधानात् प्रायश्चित्तं काम्यं, न तु नैमित्तिकम्,—इति । नैष दोषः । आतेष्टिदृष्टान्तेन दत्तोत्तरत्वात् । अन्यथा, पूर्व्वोदाहृतबृहस्पतिवचनविरोधात् ।

ननु, नैमित्तिकत्वे ग्रहणस्नानस्येव प्रायश्चित्तस्याकरणे दुरितान्तरमुत्पद्येत, ततस्तस्यापि प्रायश्चित्तान्तरं, तस्याप्यकरणे दुरितान्तरं प्रायश्चित्तान्तरमित्येवमनवस्था दुरवस्था स्यात् ।

अत्र केचिदाहुः । प्रायश्चित्तानि न केवलं नैमित्तिकानि,

किन्तु दुरितक्षयार्थान्यपि । अतएवापस्तम्बः,—प्रायश्चित्तानि प्रक्रम्य, "दोषनिर्घातार्थानि* भवन्ति," । अनन्तरं, "दोषात् कर्त्तव्यानि"— इत्याह । एवञ्च सति, प्रायश्चित्ताकरणे दोषनिर्घाताभावेन पूर्व्व-सिद्धदोषसद्भावः,—इत्येतावन्मात्रं, न तु दोषान्तरमुत्पद्यते,—इति । यद्वा, ग्रहणस्नानाद्यकरणमिव प्रायश्चित्ताकरणं निमित्तीकृत्य प्रायश्चित्तान्तरविधानस्यादर्शनात् तन्निमित्तदुरितान्तरं† न कल्प-यितुं शक्यम् । तस्मात्, नैमित्तिकत्वेऽपि नानवस्था ।

ननु, दोषनिर्घातोऽपि नैकान्तिकः । तथाहि, द्विविधं पापं कामकृतमकामकृतं च । तथा च बृहस्पतिः,—

"कामाकामकृतं तेषां महापापं द्विधा स्मृतम्"—इति ।

तयोरकामकृतस्य प्रायश्चित्तेन निर्घातेऽपि न कामकृतस्य सो-ऽस्ति । तथा च मनुः,—

"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते"—इति ।

बौधायनोऽपि,—

"अमत्या ब्राह्मणं हत्वा दुष्टोभवति धर्मतः ।
ऋषयोनिष्कृतिं तस्य वदन्त्यमतिपूर्व्वके ॥
मतिपूर्व्वं हते तस्मिन् निष्कृतिर्नोपलभ्यते"—इति ।

नायं दोषः । द्वादशाब्दादिना निष्कृत्यभावेऽपि भृगुपतना-दिना तत्सम्भवात् । तथा च स्मर्य्यते‡,—

---

* 'निर्घात'—इत्यत्र 'निर्यात'—इति पाठो वङ्गीयपुस्तकेषु प्रायः ।
† तन्निवर्त्त्यदुरितान्तरं,—इति मु० ।
‡ स्मृत्यन्तरं,—इति मु० ।

"यः कामतोनरः कुर्य्यान्महापापं कथञ्चन।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते"—इति।

शातातपोऽपि,—"अकामकृते प्रायश्चित्तं, कामकारकृते त्वात्मानमवसादयेत्"—इति। अतः प्रायश्चित्तेन दोषनिर्घातोनानैकान्तिकः*। तस्मान्निर्हन्तव्यदोषाख्यनिमित्तवानत्र प्रायश्चित्तेऽधिक्रियते,—इति सिद्धम्।

ते च दोषाअनेकविधाः। तत्र विष्णुः। "अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति। तेनायं समाक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषु प्रवर्त्तते, जातिभ्रंशकरेषु संकरीकरणेषु अपात्रीकरणेषु मलावहेषु प्रकीर्णेषु च†। मातृगमनं दुहितृगमनं स्नुषागमनम्‡,—इत्यतिपातकानि। ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनम्,—इति महापातकानि; तत्संयोगश्च। यागस्थस्य क्षत्रियस्य वैश्यस्य च वधो रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाः§ अविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानि। कूटसाक्ष्यं सुहृद्वधः,—इत्येतौ सुरापानसमौ। ब्राह्मणभूम्यपहरणं सुवर्णस्तेयसमम्। पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसदृशं; पितृष्वसृमातृष्वसृगमनं च, श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं च, स्वसुः सख्याः सगोत्रा-

* नानैकान्तिकः,—इति पाठान्तरम्।

† अवकीर्णकरणेषु,—इत्यधिकं शा० पु०।

‡ श्वश्रूगमनं स्नुषागमनं,—इति मु०।

§ मोघजाया,—इति मु०।

यावुत्तमवर्णायाः कुमार्य्यारजस्वलायाः शरणागतायाः प्रव्रजिता-यानिक्षिप्तायाश्च ।

"अनुपातकिनस्त्वेते महापापातकिनोयथा"—इति ।

मनुरपि,—

"गोवधोऽयाज्यसंयाज्यं पारदार्य्यात्मविक्रयः ।
गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च* ॥
परिवित्तिताऽनुजेन परिवेदनमेवच ।
तयोर्दानञ्च कन्यायास्तयोरेवच याजनम् ॥
कन्यायादूषणं चैव वार्धुषित्वं व्रतच्युतिः ।
तटाकारामदाराणामपत्यस्य च विक्रयः ॥
व्रात्यता वान्धवत्यागोभृत्याऽध्यापनमेवच ।
भृताच्चाध्ययनादानमपण्यानाञ्च विक्रयः ॥
सर्व्वाकारेष्वधीकारोमहायन्त्रप्रवर्त्तनम् ।
हिंसौषधीनां स्त्र्याजीवोऽभिचारोमूलकर्म च ॥
इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् ।
आत्मार्थञ्च क्रियाऽऽरम्भोनिन्दितान्नादनं तथा ॥
अनाहिताग्निता स्तैन्यमृणानां चानपक्रिया ।
असच्छास्त्राधिगमनं कौशीलव्यस्य च क्रिया ॥
धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् ।
स्त्रीशूद्रविट्क्षत्रवधोनास्तिक्यञ्चोपपातकम् ॥

---

* अुतस्यच,—इति मु० ।

ब्राह्मणस्य रुजः कृत्या* घ्रातिरघ्रेयमद्ययोः।
जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम्॥
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च॥
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्॥
कृमिकीटवयोहत्या मद्यानुगतभोजनम्।
फलैधःकुसुमस्तेयमधैर्य्यं च मलावहम्"—इति।

जातुकर्ण्योऽपि,—

"स्कन्दितं व्रतिना रेतो येन स्यात् ब्रह्मचारिणा।
कामतोऽकामतः प्राहुरवकीर्णीति तं बुधाः"—इति।

अवशिष्टं सर्वं प्रकीर्णकशब्दवाच्यम्। तथा च विष्णुः। "यदनुक्तं तत्प्रकीर्णकम्"—इति। तत्रायमाचार्य्य इदं प्रायश्चित्तकाण्डं प्रकीर्णकैरुपक्रम्य महापातकातिपातकैरुपसञ्जिहीर्षति। पूर्वाध्यायावसाने आशौचप्रसङ्गेन हीनवर्णशवानुगमनं प्रकीर्णकरूपमनूद्य प्रायश्चित्तोपवर्णनेन प्रकीर्णकस्यैव बुद्धिस्थत्वात्। अत्रोद्बन्धनमृतानुगमनाग्निदानादेस्तत्प्रसक्तं प्रायश्चित्तं विधित्सुस्तदनुगमनादिकं निन्दितुमादावुद्बन्धनमरणस्यातिकष्टत्वं प्रतिजानीते,—

**अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात्।**
**उद्बध्नीयात् स्त्री पुमान् वा गतिरेषा विधीयते॥१॥**

---

* हत्वा,—इत्यादर्शपुस्तकेषु।

मातृभार्य्याद्यधिवेपादिजन्या मानहानिरतिमानः । पुत्रमित्रादिष्वीषत्प्रतिकूलेषु सत्स्वपराधात्यल्पमपरात्मस्य क्रियमाणो वेगाविष्टोमहान् कोपोऽतिक्रोधः । स्नेहभययोरप्यतिशब्दोऽनुषञ्जनीयः*। अन्यथा मुमूर्षाऽनुपपत्तेः । अतिस्नेहस्य मुमूर्षाहेतुत्वं द्रोणाचार्य्यदशरथादौ प्रसिद्धम्, अतिभयस्य चापराधिनि भृत्यादौ । निमित्तवैषम्येऽपि दुर्मरणत्वं समम्,—इति दर्शयितुमनेकनिमित्तोपन्यासः । किञ्चित् स्त्रियं प्रत्येव निषिध्यते । तद्यथा । धर्मेऽस्वातन्त्र्यम् । "अस्वतन्त्रा धर्मे स्त्री"—इति गोतमस्मरणात् । किञ्चित् पुरुषं प्रत्येव निषिध्यते । तद्यथा ।

"योऽनधीत्य द्विजोवेदान् अन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः"—इति ।

उद्बन्धनन्तु द्वयोस्तुल्यम्,—इति विवक्षया, स्त्री पुमान् वा,—इत्युक्तम् । गतिरिति नरकप्राप्तिः । एषा समनन्तरश्लोकेन वक्ष्यमाणा विधीयते आप्यते । प्रतिज्ञातां गतिं दर्शयति,—

**पूयशोणितसम्पूर्णे त्वन्धे तमसि मज्जति ।**
**षष्टीर्वर्षसहस्राणि† नरकं प्रतिपद्यते ॥ २ ॥**

अन्धं तमस्तीव्रनरकविशेषः । 'तामिस्रमन्धतामिस्रम्'—इति ह्युदाहरन्ति । तीव्रत्वाभिव्यक्तये षष्टीरित्यत्यन्तसंयोगे द्वितीया । अस्त्वेवमतिकष्टत्वमुद्बन्धनमरणस्य, किन्ततः? इत्याशङ्क्य फलितं दर्शयन्

---

* प्रतिज्ञा,—इत्यधिकं मु० ।

† षष्टिं वर्षसहस्राणि,—इति वङ्गीयपुस्तकेषु प्रायः ।

विधित्सितस्य प्रायश्चित्तस्य निमित्तस्य सम्भावयन्नाशौचादीन् प्रति-षेधति,—

## नाशौचं नोदकं नाग्निं नाश्रुपातं च कारयेत्।

उदकमुदकदानं, अग्निमग्निदानम्। अश्रुपातं चेति चकारेण शववहनादिकं समुच्चिनोति। कारयेत् कुर्य्यादित्यर्थः। ब्रह्मपुराणेऽपि,—"शस्त्रमुद्बन्धनं जलम्"—इत्याद्यनुक्रम्य, "पतितास्ते प्रकीर्त्तिताः"—इत्यभिधायानन्तरमिदमुक्तम्,—

"पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः।
न चाश्रुपातः पिण्डोवा कार्य्यं श्राद्धादिकं क्वचित्"—इति।

शातातपोऽपि,—

"वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनादिभिः॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत्"—इति।

*[अत्र याज्ञवल्क्यः,—

"पाषण्डनाश्रिताः स्तेनाभर्तृघ्न्यः कामगादिकाः।
सुराप्यआत्मत्यागिन्योनाशौचोदकभाजनाः"—इति।

ब्रह्मपुराणे,—

"शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रिया जलैः।

---

* [ ] एतच्चिह्नान्तर्गतोग्रन्थोमुद्रितातिरिक्तपुस्तकेषु नास्ति। भाष्यतीव सङ्गतः। अन्यत्र ब्रह्मपुराणवचनतात्पर्य्यस्य पूर्व्वमेव दर्शितत्वात् इह पुनस्तदुपन्यासस्यानावश्यकत्वात्।

सुदूरात् परिहर्त्तव्यः कुर्व्वन् क्रीड़ां मृतस्तु यः ।
नागानां विप्रियं कुर्व्वन् दग्धश्चाप्यथ विद्युता ॥
निगृहीतश्च योराज्ञा चोरदोषेण कुत्रचित् ।
परदारान् हरन्तश्च रोषात्तत्पतिभिर्हताः ॥
असमानैश्च सङ्कीर्णैश्चण्डालाद्यैश्च विग्रहम् ।
कृत्वा तैर्निहतास्तद्वच्चण्डालादीन् समाश्रिताः ॥
क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ।
गिरिवृक्षप्रपातञ्च ये कुर्व्वन्ति नराधमाः ॥
कुसीदजीविनोयेऽपि ये चालङ्कारवर्ज्जिताः ।
मुखेभगाश्च ये केचित् क्लीवप्रायानपुंसकाः ॥
ब्रह्मदण्डहता ये च ये चैव ब्राह्मणैर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः ॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातः पिण्डोवा कार्य्यं श्राद्धादिकं क्वचित् ॥
एतानि पतितानान्तु यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा" ॥

विष्णुपुराणे,—

"भार्य्यापुत्रविहीनाश्च ह्यग्निसंस्कारवर्ज्जिताः ॥
पक्षिणः प्रेतरूपेण ह्यन्तरिक्षे प्रलम्बिताः ।
अग्निना भृगुपातेन ह्युद्बन्धेन जलेन वा ॥
दन्तिभिः शृङ्गिभिर्व्वाऽपि विषेण गरलेन वा ।
चोरान्त्यजातिचण्डालैरणे वाऽपि हताश्च ये ॥

श्राद्धकर्म्मविहीनाश्च लुप्तपिण्डोदकक्रियाः।
तेषामुद्धरणार्थाय प्रायश्चित्तं विधीयते"—इति ॥

अपरार्के,—

"मृगभचैरणे चैव दावाग्नौ प्रहृतं यदि।
शूलेऽप्यद्ध्वं कवन्धस्य मरणं पापकर्म्मणाम् ॥
वृक्षच्छेदं समादाय पुनः संस्कारमाचरेत्।
विद्युदग्निपयःपन्थाचण्डालब्राह्मणैर्हतः ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मणाम्।
आत्मानं घातयेद्यस्तु विषाग्निजलबन्धनैः ॥
तस्य पापविशुद्ध्यर्थं प्राजापत्यत्रयं चरेत्।
एकद्वित्रिचतुःपञ्चषड़ब्दं पर्य्यवस्यति ॥
एतत्संवत्सरादूर्द्धं प्रायश्चित्तं विधीयते।
षण्मासात् द्विगुणं प्रोक्तं त्रिमासात् त्रिगुणं भवेत् ॥
चतुर्गुणं त्रिपचे तु सद्यः पञ्चगुणं भवेत्।
चण्डालादुदकात् सर्पाद्ब्राह्मणाद्वैद्युतादपि ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मणाम्।
उदकं पिण्डदानञ्च प्रेतेभ्योयत् प्रदीयते ॥
नोपतिष्ठति तत् सर्व्वमन्तरिचे विनश्यति।
ब्राह्मणेन बधे पापे चण्डालस्य करेण वा ॥
आत्मनाग्नः सनिघाते शूद्रवद्दाहयेत् द्विजम्।
भस्मास्थीनि गृहीत्वा तु विप्राणामनुशासनात् ॥
चीरप्रचालनं कृत्वा पुनः संस्कारमाचरेत्।

यदि कश्चित् प्रमादेन म्रियेताग्न्युदकादिभिः ॥
तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया ।
चण्डालाशनिशस्त्राहिदंष्ट्रिशृङ्ग्यम्बुरज्जुभिः ॥
वृक्षाश्मविषविप्रैश्च मृतानामात्मघातिनाम् ।
नारायणबलिः कार्य्यो दुर्मरणेन मृतस्य च ॥
जीवतोयद्व्रतं प्रोक्तं मृते तद्द्विगुणं भवेत् ।
अस्थिनि त्रिगुणं प्रोक्तं पालाशे तु चतुर्गुणम्"—इति ।]

इदानीं दुर्म्मृतानां वहनादौ प्रायश्चित्तं विदधाति,—

**वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा ॥३॥**
**तप्तकृच्छ्रेण शुध्यन्तीत्येवमाह प्रजापतिः ।**

तथाशब्देनाशौचोदकदानादिकं समुच्चिनोति । तप्तकृच्छ्रलक्षणं वक्ष्यते । यत्तु ब्रह्मपुराणेऽभिहितम्,—

"एतानि पतितानान्तु यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा"—इति ।

एतानि दाहादीनि, तेषां तत्र प्रकृतत्वात् । तत्कामकारविषयम् ।

"विहितं यदकामानां कामात्तु द्विगुणं भवेत्"—इति स्मरणात् । यच्च वृहस्पतिनोक्तम्,—

"विषोद्बन्धनशस्त्रेण* यस्त्वात्मानं प्रमापयेत् ।
मृतोमेध्येन लेप्तव्योनान्यं† संस्कारमर्हति ॥

---

* शस्त्राद्यैः,—इति मु० ।
† नायं,—इति मु० ।

पाशच्छेत्ता तु यस्तस्य वोढा वाऽग्निप्रदस्तथा।

सोऽतिकृच्छ्रेण शुद्ध्येत् तु पिण्डदो वा नराधमः"—इति।

यच्च यमेनोक्तम्,—

"गोब्राह्मणहतं दग्ध्वा मृतमुद्बन्धनेन च।

पाशांश्छित्वा तथा तस्य कृच्छ्रं सान्तपनं चरेत्"—इति।

तदुभयमशक्तविषयम्. देशकालवयःशक्त्यादीनां प्रायश्चित्ततारतम्यहेतुत्वात्। तथाच व्यासः,—

"देशं कालं वयः शक्तिं ज्ञानं बुद्धिकृतं तथा।

अबुद्धिकृतमभ्यासं ज्ञात्वा निष्कृयणं वदेत्"—इति।

शक्त्यादितारतम्यवन्निमित्ततारतम्यमपि प्रायश्चित्ततारतम्यकारणम्। अतएव प्रजापतिः, स्पर्शाद्यल्पनिमित्ते स्वल्पं प्रायश्चित्तमाह,—

"तच्छवं* केवलं स्पृष्ट्वा पातयित्वाऽश्रु वा तथा।

एकरात्रं तु नाश्नीयात् त्रिरात्रं बुद्धिपूर्व्वके†"—इति।

एवं निमित्तभूयस्त्वे प्रायश्चित्तभूयस्त्वम्। अतएवाशेषाः प्रेतक्रियाः कुर्व्वतोऽधिकं प्रायश्चित्तमाह वशिष्ठः,—

"य आत्मत्यागिनां कुर्य्यात् स्नेहात् प्रेतक्रियां द्विजः।

स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणं व्रतम्"—इति।

प्रजापतिवचनगतश्रुत्यार्थं बुद्धिदार्ढ्यार्थम्। ततोविरोधिवचनानां विषयव्यवस्था द्रष्टव्येत्युक्तं भवति। सा चास्माभिः प्रदर्शिता। उद्बन्धनन्यायं गोहतादिष्वतिदिशति,

---

* तच्छैव,—इति स० शा०।

† बुद्धिपूर्व्वकम्,—इति शा०।

गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ॥ ४ ॥
संस्पृशन्ति तु ये विप्रा वोढारश्चाग्निदाश्च ये* ।
अन्येऽपि[†] वाऽनुगन्तारः पाशच्छेदकराश्च ये ॥ ५ ॥
तप्तकृच्छ्रेण शुद्धास्ते कुर्य्युर्ब्राह्मणभोजनम् ।
अनडुत्सहितां गां च दद्युर्विप्राय दक्षिणाम् ॥ ६ ॥

अनाततायितया गोभिः क्रीडन् यदि हतस्तदानीमेतद्द्रष्टव्यं, प्रामादिकमरणे पातित्याभावात् । एतच्चाशौचप्रकरणेऽस्माभिरुपवर्णितम् । पूर्व्वमोद्बन्धनविषये तप्तकृच्छ्रमात्रमुक्तं, इह तु ब्राह्मणभोजनादिकमधिकमुच्यते,—इति नाशङ्कनीयं, परकर्त्तृकोद्बन्धनस्यात्र विवक्षितत्वात् । गोहतब्राह्मणहतयोर्मध्ये पाठात् । न च परकर्त्तृकोद्बन्धने प्रायश्चित्ताश्रुत्वमिति वाच्यं परकर्त्तृकोद्बन्धनप्रसक्तिं ज्ञात्वा प्रवृत्तस्याततायिनोऽत्र विवक्षितत्वात् । गोमिथुनदक्षिणां च्यवनोऽप्याह । "आत्मघातुकस्याग्निदहनवहनेषु तप्तकृच्छ्रं चरेत् । वृषगावौ दक्षिणा ब्राह्मणेषु"—इति । तप्तकृच्छ्रस्वरूपमाहाऽत्रिः,—

"त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं पिबेत् सर्पिर्वायुभक्षो दिनत्रयम् ॥
षट्पलं तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत् ।
पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्रं विधीयते"—इति ।

वायुभक्षणमुपवासः । तप्तशब्देन शीतकृच्छ्रोऽप्यावर्त्त्यते । तत्स्वरूपञ्च यमेनोक्तम्,—

---

* वोढारश्चाग्निदाश्च ये,—इति मु० ।
† अन्ये ये,—इति मु० ।

"अहमुष्णं पिबेदम्भः अहमुष्णं घृतं पिबेत् ।
अहमुष्णं पयः पीत्वा वायुभक्षः परं अहम् ॥
तप्तकृच्छ्रं विजानीयात् शीतैः शीतमुदाहृतम्"—इति ।

यत्तु याज्ञवल्क्येनोक्तम्,—

"तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः"—इति ।

तत् तप्तकृच्छ्रस्यावान्तरभेदविवक्षयोपपद्यते । यथा, सान्तपनं महासान्तपनं,—इति द्वैविध्यं, तथा तप्तकृच्छ्रं महातप्तकृच्छ्रमिति द्वैविध्यं द्रष्टव्यम् । पलशब्देन सुवर्णचतुष्टयमुच्यते । "पलं सुवर्णाश्चत्वारः"—इति याज्ञवल्क्यवचनात् । उक्तं च,—

"पञ्चगुञ्जाऽऽत्मको माषो निष्को माषाष्टनिर्मितः ।
दशनिष्कात्मकं प्रोक्तं पलमानं बुधैः सदा"—इति ।

एतादृशैः पलैः षड्भिः सम्मितमम्भः पिबेत्। पतितसंसर्गप्रायश्चित्तं विधातुं तत्संसर्गस्य निन्दितत्वं दर्शयति,

**यो वै समाचरेद्विप्रः* पतितादिष्वकामतः ।**
**पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥७॥**
**मासार्द्धं मासमेकं वा मासद्वयमथापि वा ।**
**अब्दार्द्धमब्दमेकं वा तदूर्द्ध्वं चैव तत्समः ॥८॥**

अत्र, विप्रग्रहणं क्षत्रियादेरुपलक्षणं, मनुष्यमात्रस्य† तत्संसर्गस्य निन्दितत्वात्। तथाच मनुः,—

---

* योवै सहाचरेद्विप्रः,—इति पाठान्तरम् । संसर्गमाचरेद्विप्रः,--इति मु०।
† मनुष्यमात्रे,—इति मु० ।

"यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्य्यात् तत्संसर्गविशुद्धये"—इति ।

समाचरणं* सह यानासनादि† । तथा च कण्वः,—

"आसनाच्छयनाद्यानात् संलापात् सहभोजनात् ।
संक्रमन्तीह पापानि तैलविन्दुरिवाम्भसि ॥
संवत्सरेण पतति पतितेन सहाचरन् ।
यानासनादिभि‡ र्नित्यमित्याह्रब्रह्मवादिनः"—इति ।

याजनादौ तु सद्यः पतति । तथाच बौधायनः,—

"संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनात्§ सद्योन शयनादिभिः"—इति ।

बृहस्पतिरपि बहुविधं समाचरणं निषेधति,—

"एकशय्याऽऽसनं पङ्क्ति भाण्डं पक्वान्नमिश्रणम् ।
याजनाध्यापने योनिस्तथाच सह भोजनम् ॥
नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह"—इति ।

देवलोऽपि,—

"संलापस्पर्शनिश्वासात् सह शय्याऽऽसनाशनात् ।
याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम्"—इति ॥

---

* सहाचरणं,—इति मु० ।

† यानासनानावादि,—इति मु० ।

‡ यानाशनाशनै,—इति मु० ।

§ याजनाध्यापनाद्यैस्तु,—इति मु० । अध्यापनस्थाने सर्व्वत्राध्ययनपाठः, आ० पु० ।

एतच्च पूर्वस्मिन् युगे, अत्र तु मूलवचनोक्तं द्रष्टव्यम्। याजनादेर्वक्ष्य-माणत्वात् संसर्गश्चात्र याजनादिर्ग्राह्यः*। पतितादिभिरित्यादिशब्देन तत्पुत्रादयो गृह्यन्ते। "पतितोत्पन्नः पतितो भवति"—इति वसिष्ठेन तन्निन्दनात्। विधित्सितस्य प्रायश्चित्तस्याल्पत्वं ज्ञापयितुमकामत-इत्युक्तम्। कामतः संसर्गे तु विशेषः स्मृत्यन्तरेऽभिहितः,—

"पक्षाहे तु चरेत्कृच्छ्रं दशाहे तप्तकृच्छ्रकम्।
पराकस्त्वर्द्धमासे स्यान्मासे चान्द्रायणं चरेत्॥
मासत्रये तु कुर्वीत कृच्छ्रं चान्द्रायणोत्तरम्।
षाण्मासिके तु संसर्गे कृच्छ्रं त्वब्दार्द्धमाचरेत्।
संसर्गे चाब्दिके कुर्यादब्दं चान्द्रायणोत्तरम्"—इति।

पृथक्पृथग्व्यवस्थितप्रायश्चित्तविधित्सया पक्षाद्यनेकपक्षोपन्या-सः। तदूर्द्ध्वञ्चैव तत्समः,—इत्यभिधानात् पूर्व्वंच तत्साम्याभावेऽपि ततोऽर्व्वाचीनं पापं कालतारतम्येन भवति,—इत्यवगम्यते। यः समाचरेत्, स पापी भवति,—इत्यध्याहृत्य निन्दा योजनीया। इदानीं कालतारतम्येन पूर्व्वोक्तेष्वष्टसु पक्षेषु यथाक्रमं प्रायश्चित्तं विदधाति,

त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत्।
तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत्॥९॥
चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे मतः।
कुर्य्याच्चान्द्रायणं षष्ठे सप्तमे त्वैन्दवद्वयम्॥१०॥

---

* 'एतच्च'—इत्यारभ्य, 'ग्राह्यः'—इत्येतदन्तं न दृश्यते वङ्गीयपुस्तकेषु प्रायः।

शुद्ध्यर्थमष्टमे चैव षण्मासान् कृच्छ्रमाचरेत् ।
पक्षसङ्ख्याप्रमाणेन सुवर्णान्यपि दक्षिणा ॥ ११ ॥

प्रथमः पक्षः पञ्चाहसंसर्गः, तत्र त्रिरात्रसंज्ञकं कृच्छ्रमाचरेत् । त्रिरात्रकृच्छ्रोनाम त्रिरात्रोपवासः । तथाच विष्णुः । "अथ कृच्छ्राणि भवन्ति त्र्यहं नाश्नीयात्"—इति । द्वितीयपक्षोदशाहसंसर्गः, तत्र प्राजापत्यमाचरेत् । न च मूलवचने प्राजापत्याख्यः कृच्छ्रविशेषोन श्रूयते,—इति शङ्कनीयम् । स्मृतिशास्त्रेषु निरुपपदस्य कृच्छ्रशब्दस्य प्राजापत्यएव प्राचुर्य्येण प्रयोगात् । "कृच्छ्रमिति प्राजापत्यम्"—इति देवलस्मरणाच्च । प्राजापत्यस्वरूपं मनुराह,—

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परन्तु नाश्नीयात् प्राजापत्यं चरन् द्विजः" *—इति ।

तृतीयपक्षोद्वादशाहसंसर्गः, तत्र सान्तपनं कृच्छ्रमाचरेत् । सान्तपनं चतुर्व्विधं, द्विरात्रं सप्तरात्रं पञ्चदशरात्रमेकविंशतिरात्रं चेति । तत्र द्विरात्रसप्तरात्रयोः स्वरूपमाह याज्ञवल्क्यः,—

"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥
पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः" †—इति ।

यमेन पञ्चदशाहसाध्यो महासान्तपनोऽभिहितः,—

---

* तदुच्यते,—इति मु० ।

† महासान्तपनं स्मृतम्,—इति शा० ।

"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः ॥
महाशान्तपनं ह्येतत् सर्वपापप्रणाशनम्"—इति ॥

जावालेन* त्वेकविंशतिरात्रनिर्वर्त्त्यो महाशान्तपनोऽभिहितः,—

"षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत् ।
त्र्यहं चोपवसेदन्ते महाशान्तपनं विदुः"—इति ।

एतेषां मध्ये न तावदत्र द्विरात्रं ग्रहीतुं शक्यं, तस्य द्वितीयपक्षोक्तात् प्राजापत्यात् न्यूनत्वात्। नापि पञ्चदशरात्रैकविंशतिरात्रयोर्ग्रहणं, तयोस्तुर्थपक्षोक्तदशरात्रोपवासादधिकत्वात्। तस्मात्, सप्तरात्रं परिशिष्यते। न च तस्य द्वादशाहसाध्यात् प्राजापत्यादर्वाचीनत्वं शङ्कनीयं, प्राजापत्ये हि त्रिष्वेव दिनेष्वशनवर्जनमत्र तु सप्तस्वपि दिनेष्वशनवर्जनम्, अतोऽधिकत्वात्। एवमेव तृतीयपक्षे प्रायश्चित्तम्। अर्द्धमाससंसर्गः चतुर्थपक्षः। तत्र दशरात्रोपवासमाचरेत्। यद्यप्यत्रोपवसेदिति न श्रुतं, तथापि वक्ष्यमाणपराककृच्छ्रसाहचर्य्यात्तल्लभ्यते। माससंसर्गः पञ्चमपक्षः। तत्र पराकः कृच्छ्रः कर्त्तव्यत्वेन स्मृतः। पराकस्वरूपं दर्शयति मनुः,—

"यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराकोनाम कृच्छ्रोऽयं सर्व्वपापप्रणाशनः"—इति ॥

मासद्वयसंसर्गः षष्ठपक्षः। तत्र चान्द्रायणं कुर्य्यात्। चान्द्रायणलक्षणं स्वयमेवोत्तरत्र वक्ष्यति। षण्मासंसर्गः सप्तमपक्षः। तत्रैन्द्र-

---

* जावालिना,—इति मु० ।

वद्वयं कुर्य्यात्। ऐन्दवं चान्द्रायणं, इन्दुवृद्धिह्रासोपेतत्वात्। किञ्चिदूनसंवत्सरसंसर्गेऽष्टमपक्षः। यद्यपि किञ्चिदूनत्वं न श्रुतं, तथापि सम्पूर्णसंवत्सरसंसर्गस्य पातित्यहेतुत्वात् किञ्चिदूनत्वं कल्प्यते। तच्च पातित्यहेतुत्वं याज्ञवल्क्येन दर्शितम्,—

"संवत्सरेण पतति पतितेन समाचरन्"—इति।

तत्राष्टमे पक्षे षण्मासान् कृच्छ्रमाचरेत्। षण्मासानित्यत्यन्तसंयोगे द्वितीयया कृच्छ्रनैरन्तर्य्यं विवक्षितम्। तथा च सति षट्सु मासेषु प्राजापत्यकृच्छ्राः पञ्चदश सम्पद्यन्ते। शुद्ध्यर्थमिति सर्व्वेषु वाक्येष्वनुषज्यते। सर्व्वेष्वेतेषु पक्षेषु यथोक्तं प्रायश्चित्तमनुष्ठाय तदङ्गत्वेन दक्षिणा दातव्या। तत्र, पञ्चरात्रसंसर्गे प्रथमपक्षे सुवर्णमेकं, दशरात्रसंसर्गे द्वितीयपक्षे सुवर्णद्वयं, एवमितरेष्वपि पक्षेष्ववगन्तव्यम्।

इत्थं पतितसंसर्गे प्रकीर्णके निमित्तानुसारेण प्रायश्चित्ततारतम्यं व्युत्पादितम्। इदानीमनयैव दिशा निमित्तानुसारेण प्रायश्चित्तमुन्नेतुं शक्यमिति हृदि निधाय ऋतुस्नातेत्यारभ्य यस्तु धर्मपराङ्मुखः,—इत्यन्तेन प्रायश्चित्तनिमित्तान्येवोपन्यस्यति,—

ऋतुस्नाता तु या नारी भर्त्तारं नोपसर्पति।
सा मृता नरकं याति विधवा च* पुनः पुनः॥१२॥
ऋतुस्नातान्तु योभार्य्यां सन्निधौ नोपगच्छति।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥१३॥

---

* वैधव्यं च—इति मु०।

दरिद्रं व्याधितं धूर्त्तं* भर्त्तारं याऽवमन्यते ।
सा शुनी जायते मृत्वा शूकरी† च पुनः पुनः ॥ १४ ॥
पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् ।
आयुष्यं हरते भर्त्तुः सा नारी नरकं व्रजेत् ॥ १५ ॥
अपृष्ट्वा चैव भर्त्तारं या नारी कुरुते व्रतम् ।
सर्व्वं तद्राक्षसान् गच्छेदित्येवं मनुरब्रवीत् ॥ १६ ॥
बान्धवानां सजातीनां दुर्व्वृत्तं कुरुते तु या ।
गर्भपातञ्च या कुर्य्यान्न तां सम्भाषयेत् क्वचित् ॥ १७ ॥
यत् पापं ब्रह्महत्यायां द्विगुणं गर्भपातने ।
प्रायश्चित्तं न तस्याः स्यात्‡ तस्यास्त्यागोविधीयते ॥१८॥
न कार्य्यमावसथ्येन नाग्निहोत्रेण वा पुनः ॥
स भवेत् कर्मचण्डालोयस्तु धर्मपराङ्मुखः ॥१९॥ इति ।

रजोदर्शनमारभ्य षोड़शदिनान्यृतुः । तत्र चतुर्थदिवसे स्नाता नारी पुत्रोत्पादनार्थमाहूता सती यदि भर्त्तारं नोपसर्पति, तदा नरकमनुभूय पश्चादहुषु जन्मसु विधवा भवति । भर्त्राऽऽहूताया-अनुपसर्पणे दोषोनारदीयपुराणे दर्शितः,—

"आहूता या तु वै भर्त्रा न प्रयाति§ त्वरान्विता ।

---

* मूर्खं,—इति मु० ।

† शूकरी,—इति वङ्गीयपुस्तकेषु प्रायः ।

‡ न तस्यास्ति,—इति मु० ।

§ न याति स्त्री,—इति मु० ।

सा ध्वाङ्क्षी जायते मृत्वा दश जन्मानि पञ्च च"—इति ॥

यथा वध्वाः ऋतुकालातिक्रमे प्रत्यवायस्तथा पुरुषस्यापि ऋतुस्नातामनुपगच्छतः प्रत्यवायः । सन्निधिशब्दश्चारोग्यादेरुपलक्षकः । अतएव देवलः,—

"यस्त्वरोगामृतुस्नातां स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति प्रजां प्राप्तां विनाश्य सः"—इति ॥

अत्र चोन्नेयं यत् प्रायश्चित्तं, तद्बृहस्पतिर्दर्शयति,—

"ऋतौ न गच्छेद्योभार्य्यां सोऽपि कृच्छ्रार्द्धमाचरेत्"—इति ।

बौधायनोऽपि,—

"ऋतौ न गच्छेद्योभार्य्यां नियतां धर्मचारिणीम् ।
नियमातिक्रमात् तस्य प्राणायामशतं स्मृतम्"—इति ॥

न चात्र प्रायश्चित्तद्वयस्य समविकल्पः शङ्कनीयः, प्राणायामशतस्यार्द्धकृच्छ्रप्रत्याम्नायत्वेनानुकल्पत्वात्* । अतएव प्राणायामशतद्वयं कृच्छ्रप्रत्याम्नायत्वेन चतुर्विंशतिमते दर्शितम्,—

"कृच्छ्रोऽयुतं चैव प्राणायामशतद्वयम् ।
तिलहोम† सहस्रन्तु वेदाध्ययनमेवच"—इति ॥

पुरुषं प्रत्युक्तस्य प्रायश्चित्तस्यार्द्धं स्त्रियं प्रत्युन्नेयम् । तथाच भृगुः,—

"अशीतिर्यस्य वर्षाणि बालोवाप्यूनषोड़शः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियोव्याधितएवच"—इति ॥

---

* कल्पनीयत्वात्,—इति मु० ।

† तिलाहुति,—इति मु० ।

न केवलमुक्तव्यतिक्रमे स्त्रियाः प्रत्यवायः, किन्तु दारिद्र्यादिना येन केनापि निमित्तेन पत्युरवमानेऽपि महान् प्रत्यवायः । तथाच ब्रह्माण्डपुराणम्,—

"मानाद्रोषान्मत्सराद्वा भर्त्तारं याऽवमन्यते ।
सा सप्तजन्मकं यावत् नरके स्यान्न संशयः"—इति ॥

अवमानश्च पुरुषान्तरगमन-चित्तवचनादिः । एतदेवाभिप्रेत्य मनुराह,—

"अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तयेत् ।
सेह निन्दामवाप्नोति परलोकाच्च हीयते ॥
व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
शृगालयोनिं चाप्नोति पापरोगैश्च पीड्यते ॥
पतिं हित्वाऽपकृष्टं स्वमुत्कृष्टं योपसेवते ।
निन्द्यैव लोके भवति परपूर्वेति चोच्यते"—इति ॥

नारदीयेऽपि,—

"जीवितेन सुखार्थेन* भर्त्तारं वञ्चयेत्तु या ॥
कृमियोनिशतङ्गत्वा चाण्डाली जायते तु सा†"—इति ।

अथोक्तेयं प्रायश्चित्तमापस्तम्बो दर्शयति । "भर्त्तुर्व्यतिक्रमे कृच्छ्रम्"—इति । उशनाऽपि । "व्यभिचारिणीं भार्य्यां कुचेलपरिभूतां पिण्डमात्रेणोपजीविनीं‡ निवृत्ताधिकारां चान्द्रायणं प्राजा-

* जीवितेनाथ वित्तेन,—इति मु० ।
† पुंश्चली जायते ततः,—इति मु० ।
‡ कुचेलपिण्डपरिभूतां,—इति ग्रा० ।

पत्यं वा कारयेत्"—इति । अवमानाभावेऽपि पतिशुश्रूषामुपेक्ष्य व्रतोपवासादिपरायाः स्त्रियाः प्रत्यवायोऽस्ति । एतदेवाभिप्रेत्य व्रतोपवासादीनां स्त्रियं प्रति श्रेयोहेतुत्वं निषेधत्यत्रिः,—

"न व्रतैर्नोपवासेन धर्म्मेण विविधेन च ।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात्"—इति ॥

महाभारतेऽपि पतिशुश्रूषापरायाभार्य्यायाउत्तमां गतिमुक्त्वा व्रतादिपराया अन्यस्याभार्य्यायास्तदभावं ज्ञापयितुमिदमुदाहृतम्,—

"तां यमोलोकपालस्तु वभाषे पुष्कलं वचः ।
मा शुचस्त्वं निवर्त्तस्व न लोकाः सन्ति तेऽनघे ॥
स्वधर्मविमुखा नित्यं कान् लोकान् त्वं गमिष्यसि * ।
दैवतं हि पतिः स्त्रीणां स्थापितः सर्वदैवतैः ॥
मोहेन त्वं वरारोहे न जानीषे स्वदैवतम् ।
पतिमत्याः स्त्रियालोके धर्मः पत्यर्च्चनन्त्विति"—इति ।

यदा स्त्री पतिशुश्रूषाऽनुरोधेन व्रतादिकं चिकीर्षति, तदाऽपि पतिमपृष्ट्वाऽनुष्ठितं तद्व्रतं निष्फलं भवति । तदाह मार्कण्डेयः,—

"नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा ।
निष्फलन्तु भवेत्तस्या यत्करोति व्रतादिकम्"—इति ॥

अतएव मनुः सर्वत्र स्त्रियाः स्वातन्त्र्यं निषेधति,—

"बालया वा युवत्या वा वृद्धया वाऽपि योषिता ।
न स्वातन्त्र्येण कर्त्तव्यं कार्य्यं किञ्चिद्गृहेष्वपि"—इति ॥

---

* कथं लोकान् गमिष्यसि,—इति मु०

तथाच पुराणे,—

"पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।

पुत्रः स्थविरभावे तु न स्त्री स्वातन्त्र्यमर्हति"—इति* ॥

अपृष्ट्वेत्यभिधानादनुज्ञापुरःसरमनुष्ठितस्य व्रतादेः साफल्यमवगम्यते। तच्च शङ्खलिखिताभ्यां दर्शितम्। "न भर्त्तारं द्विष्याद्यद्यप्यश्लीलः स्यात् पतितोऽर्थहीनोव्याधितोवाऽपि पतिर्दैवतं स्त्रीणां, न व्रतोपवासनियमेज्यादानं† स्त्रीणामन्यत्र पतिशुश्रूषायाः, कामन्तु भर्त्तुरनुज्ञया व्रतोपवासनियमादीनामभ्यासः स्त्रीधर्मः"—इति। कात्यायनोऽपि,—

"भार्य्या भर्त्तुर्मतेनैव व्रतादीनाचरेदिति"।

या तु नारी बान्धवानामसपिण्डानां सजातीनां सपिण्डानां दुर्वृत्तं विद्वेषं कुरुते, या च गर्भं पातयेत्, ते उभे पातकवाक्यात्न सम्भाषणीये। एतदेवाभिप्रेत्य बन्धुद्वेषः शङ्खलिखिताभ्यां निषिद्धः। "न बन्धून् द्विष्यात्"—इति। अत्र च विद्वेषोविषप्रयोगाभिचारादिपर्य्यन्तोविवक्षितः। अन्यथा स्वल्पस्य द्वेषस्य गर्भपातासाम्येनासम्भाषणहेतुत्वासम्भवात्। यद्यपि बन्धुवध-गर्भपातनयोरसम्भाषणहेतुत्वं समानं, तथापि गर्भपाते पापद्वैगुण्येन प्रायश्चित्तं नास्ति, अतस्तत्याज्यागएव।

ननु, प्रायश्चित्ताभावोऽनुपपन्नः, मनुना ब्रह्महत्याव्रतस्य तत्रोपदिष्टत्वात्,

---

* तथाच इत्यारभ्य एतदन्तोग्रन्थोनास्ति वङ्गीयपुस्तकेषु।

† न व्रतोपवासादिकं,—इति मु०।

"हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत्"—इति ।

अविज्ञातं स्त्रीत्वपुंस्त्वाभ्यामनिश्चितम् । विज्ञाते तु गर्भे स्त्रीपुरुषवधयोर्यथाविहितं द्रष्टव्यम् । अतः कथमुच्यते प्रायश्चित्तं नास्तीति । नायं दोषः । पातनीयगर्भगतगुणागुणाभ्यां व्यवस्थोपपत्तेः । हननीयब्राह्मणगतगुणागुणाभ्यां प्रायश्चित्ततारतम्यस्य दर्शनात् । तथा च याज्ञवल्क्यः ब्रह्मघ्नव्रतमुक्त्वा दीक्षितघ्ने द्वैगुण्यमाह,—

"द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्"—इति ।

यद्यपि दीक्षितादीक्षितयोरिव गर्भयोर्गुणागुणौ नोपपद्येते*, तथापि पितृगतगुणागुणाभ्यान्तौ कल्पनीयौ । तस्मात् प्रायश्चित्तविषयाणि वचनानि गर्भमात्रवधविषयाणि, इदं प्रायश्चित्ताभाववचनं भव्याभावितगुणवद्गर्भविषयम् । यद्वा, पापद्वैगुण्येन प्रायश्चित्ताभावोक्तिस्तस्यास्त्यागविधिशेषार्थवाद इति न कश्चिद्विरोधः । तथाच, विशिष्टगर्भपातने पापद्वैगुण्याद्व्रतद्वैगुण्यमुन्नेयमिति भावः ।

यस्तु वेदविश्वासरहितोवेदोक्तधर्मपराङ्मुखस्तं नानुतिष्ठति, स जन्मना ब्राह्मणोऽपि कर्मणा चण्डालोभवेत् । तस्य धर्मपराङ्मुखत्वं तदीयोक्तिरूपेण पूर्व्वार्द्धेन द्योत्यते । आवसथ्यः पञ्चमोऽग्निः, तेन च गार्हपत्याद्यग्निपञ्चकमुपलक्ष्यते । न चाग्निपञ्चकेन वा तत्साध्येनाग्निहोत्रादिना वा किञ्चित् फलमस्ति । ऐहिकस्य फलस्यादर्शनात्, आमुष्मिकस्य फलस्य सन्दिग्धत्वात् । तथाच श्रूयते । "कोहि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वा"—इति ।

एवमेतेषु व्याख्यातेषु वचनेषु यानि निमित्तान्युपन्यस्तानि, तेषां

* गर्भपातयोर्गुणागुणौ नोपलभ्येते,—इति मु० ।

मध्ये स्त्रीकर्तृकस्य पुरुषकर्तृकस्य चलतिक्रमस्य पत्यवमानस्य च प्रायश्चित्तमुक्तीय प्रदर्शितम्। यत् पतिशुश्रूषामुल्लङ्घ्य तत्प्रतिकूलव्रताद्याचरणं, तत्र पतिं प्रसाद्य तदुक्तं प्रायश्चित्तमाचरेत्*। तथा च याज्ञवल्क्यः,—

"प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुद्ध्यति"—इति।

स्मृत्यन्तरेऽपि,—

"अथ वा यद्गुरुर्ब्रूयात् तत्कार्य्यमविशङ्कया।

निग्रहेऽनुग्रहे वाऽपि गुरुः सर्व्वत्र कारणम्"—इति॥

यत्रानुज्ञामन्तरेण व्रताचरणं, तत्र निष्फलप्रयासस्य दण्डरूपत्वात् तेनैव शुद्ध्यतीति न पृथक् प्रायश्चित्तापेक्षा।

दुर्वृत्ताचरणं च द्विविधं, वधावमानं प्रयत्नमात्रं चेति। तयोर्मध्ये वधावमानस्य पुरुषकर्तृकस्य दुर्वृत्ताचरणस्य प्रायश्चित्तमाचार्य्यो वक्ष्यति। प्रयत्नमात्रस्य तु प्रायश्चित्तं याज्ञवल्क्योऽतिदिशति,—

"चरेद्व्रतमहत्वाऽपि घातार्थं चेत् समागतः"—इति।

न च हननाहननयोर्व्रतसाम्यं शङ्कनीयं, अतिदिष्टस्योपदिष्टात् किञ्चिन्न्यूनत्वात्। योषितस्तु पुरुषकर्तृकप्रायश्चित्तार्द्धं द्रष्टव्यम्। गर्भपातने प्रायश्चित्तं गर्भभेदानेकधा भिद्यते। गर्भो द्विविधः पति-

---

* तत्र तदुक्तमित्यनेन पत्यै प्रायश्चित्तं धर्म्मज्ञश्चेत् स्वयमेवोपदिशेत्, धर्म्मशास्त्रं न जानाति चेत् धर्म्मशास्त्रज्ञस्य सकाशाद्बुद्ध्वा वा पतिरेवोपदिशेदित्यर्थः। इत्यधिकं मुद्रितपुस्तकेऽस्ति। परमयमंशोनास्ति वङ्गीयपुस्तकेषु। लिपिभङ्ग्यापि टिप्पणमेतदित्येव प्रतीयते।

अन्योजारजन्यश्च। जाराश्च सवर्णा असवर्णाश्च। तत्र सर्व्वत्र प्रायश्चित्तं चतुर्व्विंशतिमतेऽभिहितम्,—

"गर्भपाते समुद्दिष्टं यथावर्णविधि व्रतम् ।
जारगर्भे विशेषः स्यात् यथोक्तमृषिभिः पुरा ॥
ब्रह्मगर्भवधे कृच्छ्रमब्दं शान्तपनाधिकम्* ।
क्षत्रगर्भवधे चैव चरेच्चान्द्रायणद्वयम् ॥
वैश्यस्य चैन्दवं प्रोक्तं पराकः शूद्रघातने ।
प्रायश्चित्तमिदं प्रोक्तं गर्भपाते विशेषतः"—इति ॥

वेदविश्वासरहितस्य प्रायश्चित्तं वसिष्ठोदर्शयति। "नास्तिकः कृच्छ्रं द्वादशरात्रञ्च कृत्वा विरमेन्नास्तिक्यान्नास्तिकवृत्तिस्त्वतिकृच्छ्रम्"—इति। एतच्च सकृत्करणविषयम्। असकृत्करणे तु शङ्खेनोक्तम्। "नास्तिकोनास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याऽभिशंसीत्येते पञ्च संवत्सरं ब्राह्मणगृहे भैक्ष्यं चरेयुः" इति।

अथ वीजि-क्षेत्रिणोः पित्रोः प्रत्यवायप्रायश्चित्तसद्भावसूचनार्थमस्मिन् प्रायश्चित्तप्रसङ्गे, कुण्डगोलकौ पुत्रौ सदृष्टान्तमुपन्यस्यति,

**ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।**
**स क्षेत्री लभते बीजं न बीजी भागमर्हति† ॥२०॥**
**तद्वत् परस्त्रियाः पुत्रौ द्वौ सुतौ कुण्डगोलकौ ।**
**पत्यौ जीवति कुण्डः स्यात् मृते भर्त्तरि गोलकः ॥ २१॥**

---

* शान्तपनादिकम्,—इति मु०

† फलमर्हति,—इति शा०।

ओघोजलप्रवाहः, वातः प्रचण्डवायुः। तयोरन्यतरेणाहृतं परकीयं शाल्यादिबीजं यस्यान्यस्य क्षेत्रे प्ररोहति, स क्षेत्री बीजं बीजफलं लभते न तु बीजी। तदेतल्लोकप्रसिद्धम्। तेनैव न्यायेन क्षेत्रिणोभार्य्यायां बीजिनोत्पादितौ कुण्डगोलकौ क्षेत्रिणः पुत्रौ भवतः, न तु बीजिनः। तयोः पुत्रयोर्मध्ये क्षेत्रिण्यमृते जारजः कुण्डः, मृते तस्मिन् जारजोगोलकः।

"अमृते च मृते चैव जारजौ कुण्डगोलकौ"—इति

स्मृत्यन्तरात्। जारशब्देन देवरादयो व्यावर्त्त्यन्ते। न हि तेषां जारत्वमस्ति। तेषां गुर्व्वनुज्ञातत्वात्। अनुज्ञातत्वं च याज्ञवल्क्येनोक्तम्,—

"अपुत्रां गुर्व्वनुज्ञातो देवरः पुत्रकाम्यया।
सपिण्डो वा सगोत्रो वा घृताभ्यक्तः ऋतौ व्रजेत्"—इति॥

बीजिक्षेत्रिणोरत्र सूचितप्रत्यवायो महाभारते दर्शितः,—

"क्षेत्रिकश्चैव बीजी च द्वारेतौ नियमङ्गतौ।
न रक्षति च योदारान् परदारांश्च गच्छति।
गर्हितौ तौ नरौ नित्यं धर्म्माचारबहिःकृतौ"—इति।

जारस्य गर्भानुत्पादे यत् प्रायश्चित्तमभिहितं, तदेव बीजी द्विगुणमाचरेत्। जारप्रायश्चित्तं व्याघ्रेण दर्शितम्,—

"ब्राह्मणो ब्राह्मणीं गच्छेदकामां यदि कामतः।
कृच्छ्रचान्द्रायणे कुर्य्यादर्द्धमेव प्रमादतः॥
अर्द्धमेव सकामायां तप्तकृच्छ्रं सकृद्गतौ।
अर्द्धमर्द्धं नृपादीनां दारेषु ब्राह्मणश्चरेत्॥

एतद्व्रतं चरेच्छ्राद्धं श्रोत्रियस्य परिग्रहे ।

अश्रोत्रियस्येद्द्विगुणमगुप्तावर्द्धमेवच"—इति ॥

क्षेत्रिणः प्रायश्चित्तविशेषानादेशात् सामान्यप्रायश्चित्तं द्रष्टव्यम् । तच्च याज्ञवल्क्येन दर्शितम्,—

"प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये ।

उपपातकजातानामनादिष्टेषु चैव हि"—इति ।

न बीजी भागमर्हतीत्ययमर्थो मनुना दृष्टान्तैः प्रतिपादितः,

"यथा गोश्वोष्ट्रदासीषु महिषीष्वाविकासु* च ।

नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥

येऽक्षेत्रिणो बीजवन्तः परक्षेत्रे प्रवापिणः ।

ते वै शस्यस्य जातस्य न लभन्ते फलं क्वचित् ॥

यथाऽन्यगोषु वृषभोवत्सानां जनयेच्छतम् ।

गोमिनामेव ते वत्सामोघं स्कन्दितमार्षभम्"—इति ॥

येऽक्षेत्रिण इत्यत्र अक्षेत्रिण इति छेदः ।

इदानीं कुण्डगोलकप्रसङ्गेन वृद्धिस्थान् पुत्रभेदान् दर्शयति,—

**औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः । इति ।**

एतच्च द्वादशविधानां पुत्राणामुपलक्षणम् । ते च मनुना दर्शिताः,—

"औरसः क्षेत्रजश्चैव दत्तः कृत्रिमएवच ।

गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥

कानीनश्च सहोढ़श्च क्रीतः पौनर्भवस्तथा ।

स्वयंदत्तश्च शौद्रश्च षड्दायादबान्धवाः ॥

---

* महिष्यजाविकासु,—इति मु० ।

स्वे चेत्रे संस्कृतायान्तु स्वयमुत्पादितश्च यः* ।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ॥
यस्तल्पजः प्रमीतस्य क्लीवस्य पतितस्य वा ।
स्वधर्म्मेण नियुक्तायां स पुत्रः चेत्रजः स्मृतः ॥
माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयोदत्रिमः सुतः ॥
सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥
उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ़उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं विजानीयाद्वोढुः कन्यासमुद्भवम् ॥
या गर्भिणी संस्क्रियते ज्ञाताज्ञाततयाँ सती ।
वोढुः स गर्भोभवति सहोढ़इति चोच्यते ॥
क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपिवा ।
या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया‡ ॥

---

* स्वयमुत्पादयेद्धि यम्,—इति मु० ।
† ज्ञाताऽज्ञावाऽपि वा,—इति मु० ।
‡ विधवा चेच्छया पुनः,—इति शा० स० ।

उत्पादयेत् पुनर्भूत्वा स पौनर्भवउच्यते ।
मातापितृविहीनोयस्त्यक्तो वा स्यादकारणात् ॥
आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृतः ।
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम् ॥
स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः"—इति ॥

याज्ञवल्क्येनापि,—

"औरसः पुत्रिकापुत्रः क्षेत्रजो गूढजस्तथा ।
कानीनः पञ्चमः प्रोक्तः षष्ठः पौनर्भवः स्मृतः ॥
दत्तः क्रीतः कृत्रिमश्च स्वयंदत्तस्तथेरितः ।
सहोढजोऽपविद्धश्च पुत्रादादश कीर्त्तिताः ॥
औरसोधर्म्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्नउत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातोमातामहसुतोमतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।
दद्यान्माता पिता वा यं स पुत्रोदत्तकोभवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः ।
दत्तात्मा तु स्वयंदत्तोगर्भे विन्नः सहोढजः ॥
उत्सृष्टोगृह्यते यस्तु सोऽपविद्धो भवेत् सुतः ।
पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परः परः ।
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः"—इति* ।

---

* याज्ञवल्क्येनापि,—इत्यारभ्य एतदन्तोग्रन्थोनास्ति वङ्गीयपुस्तकेषु ।

अत्र द्वादशानां पुत्राणां यानि लक्षणानि मनुना दर्शितानि, तानि सर्व्वाण्युपलक्षयितुं दत्तस्य लक्षणमाह,

**दद्यान्माता पिता वाऽपि स पुत्रोदत्तकोभवेत् ॥२२॥**

अत्र दाने सदृशं प्रीतिसंयुक्तमद्भिरापदीति विशेषणचतुष्टयं द्रष्टव्यम् ।

प्रसक्तानुप्रसक्तं परिसमाप्य प्रकृतमेव प्रायश्चित्तमनुसरति परिवित्तिरित्यादिश्लोकद्वयेन,

**परिवित्तिः परिवेत्ता यया च परिविद्यते ।**
**सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥२३॥**
**द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्रएवच ।**
**कृच्छ्रातिकृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत् ॥२४॥**

यत्र ज्येष्ठो नोद्वहति कनिष्ठस्तूद्वहति, तत्र ज्येष्ठः परिवित्तिरित्युच्यते। कनिष्ठः परिवेत्ता, यया कन्यया कनिष्ठः परिविद्यते सा परिवेदनी, तस्याः पित्रादिर्दाता, याजकोविवाहहोमस्य कारयिता। तएते पञ्च नरकं यान्ति। तथाच हारीतः। "ज्येष्ठेऽनिविष्टे कनीयान्निविशन्* परिवेत्ता भवति, परिवित्तिर्ज्येष्ठः, परिवेदनी कन्या, परिदायी दाता, परियष्टा याजकस्ते सर्व्वे पतिताः"—इति। तत्र परिवित्तेर्द्वौ कृच्छ्रौ प्रायश्चित्तं, कन्याया एकः कृच्छ्रः, दातुः कृच्छ्रातिकृच्छ्रः। तस्य लक्षणं याज्ञवल्क्यआह,—

* ज्येष्ठे तिष्ठति कनीयानुद्वहति यदा तदा कनीयान्,— इति मु०।

"कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्"—इति।

याजकस्य चान्द्रायणम्। नचात्र परिवेत्तुः प्रायश्चित्तमनुक्तमिति शङ्कनीयं, परिवित्तिशब्देन तस्याप्युपलक्षितत्वात्। अतएव यमः परिवित्तिपरिवेत्त्रोर्द्वयोः समं प्रायश्चित्तमाह,—

"कृच्छ्रौ द्वौ परिवेत्तुः स्यात् कन्यायाः कृच्छ्रएवच ।
कृच्छ्रातिकृच्छ्रौ दातुस्तु* होता चान्द्रायणं चरेत्"—इति ।

यत्तु शङ्खलिखिताभ्यामुक्तम्। "परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्ष्यं चरेयाताम्"—इति । शङ्खेनापि,—

"परिवित्तिः परिवेत्ता च यया च परिविद्यते ।
व्रतं संवत्सरं कुर्य्युर्दातृयाजकपञ्चमाः"—इति ।

यदपि हारीतेनोक्तम्। "ते सर्व्वे पतिताः संवत्सरं प्राजापत्येन कृच्छ्रेण परिचरेयुः†"—इति। तत्र सर्व्वत्र चिरक्षिप्रज्ञाताज्ञातभेदेन प्रायश्चित्तगौरवलाघवव्यवस्था द्रष्टव्या। प्रायश्चित्तचरणानन्तरं परिवेत्तुः कर्त्तव्यमाह वशिष्ठः। "परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत् तां चैवोपयच्छेत्"—इति। तस्मै दत्त्वा ज्येष्ठाय निवेद्य पुनर्निविशेत् पुनरुद्वहेत्। कामित्यपेक्षायामाह तामेवोपयच्छेदिति । अयमर्थः। ज्येष्ठभ्रातर्य्यकृतदारपरिग्रहे कृतदारपरिग्रहः कनिष्ठः परिवेत्ता परिवेदन्या स्वगृहीतया कन्यया परिवित्तिना ज्येष्ठभ्रात्रा च सह उक्तं प्रायश्चित्तं निर्वर्त्त्य ज्येष्ठभ्रातरि कृतदारपरिग्रहे कनिष्ठः पूर्वं गृहीतां कन्यां ज्येष्ठभ्रात्रे निवेद्य तद्दत्तां

* अतिकृच्छ्रं चरेद्दाता,—इति शा०।

† पापं यापयेयुः,—इति मु० ।

स्वयमेव पुनरुद्वहेत्*। अयमेव न्यायो ज्येष्ठकनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चानुसन्धेयः। अतएव गौतमः। "परिवित्तिपरिवेत्तृपर्य्याहितपर्य्याधाताग्रेदिधिषु† दिधिषुपतीनां संवत्सरं प्राकृतं ब्रह्मचर्य्यम्"—इति। अग्रेदिधिषुपत्यादौ विशेषो वसिष्ठेनोक्तः। "अग्रेदिधिषुपतिः कृच्छ्रं द्वादशरात्रञ्चरित्वा निविशेत ताञ्चैवापयच्छेत दिधिषुपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्वा पुनर्निविशेत"—इति। अग्रेदिधिष्वादेर्लक्षणं देवलेनोक्तम्,—

"ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा।
सा चाग्रेदिधिषुर्ज्ञेया पूर्व्वा तु दिधिषुः स्मृता"—इति॥

तत्राग्रेदिधिषुपतिर्द्वादशरात्रं कृच्छ्रं प्राजापत्यं चरित्वा ज्येष्ठायां पश्चादन्येनोढायां तामेवोद्वहेत्। दिधिषुपतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा स्वोढां ज्येष्ठां तस्मै कनीयस्याः पूर्व्वोढ्रे दत्त्वाऽन्यामुद्वहेत्‡।

---

* स्वयमर्थः इत्यारभ्य एतदन्तो ग्रन्थो नास्ति वङ्गीयपुस्तकेषु प्रायः।

† पर्य्याहितपरिदात्रग्रेदिधिषु,—इति मु०।

‡ तद्युगान्तरविषयत्वात् कलौ कन्यायाः पुनरुद्वाहस्य निषिद्धत्वाच्च दिधिषुपतिः स्वोढां कनीयस्याः पूर्व्वोढ्रे निवेद्य तद्दत्तां पुनः स्वयमेवोद्वहेत्। नष्टादिनिमित्तेषु तु, नष्टे मृते इति वक्ष्यमाणं द्रष्टव्यम्। अग्रेदिधिषु-दिधिष्वोः कन्ययोः तत्पतिविहितप्रायश्चित्तार्द्धं प्रायश्चित्तं ज्ञातव्यम्। अग्रेदिधिषुपतिर्ज्येष्ठकन्यायाविवाहात् पूर्व्वमेव चेत् स्वोढया कनीयस्या सहोक्तं प्रायश्चित्तं निर्व्वर्त्त्य दिधिषुपतिविहितप्रायश्चित्ताचरणेन शुद्धां ज्येष्ठामपि स्वयमेवोद्वाह्य पुनः पूर्व्वोढां कनिष्ठामप्युद्वहेत् उभे उपयच्छेत। कनीयस्यां पूर्व्वमेवोढायामनूढा ज्येष्ठा कनिष्ठापतिनैवोद्वाह्या नान्येनेति शास्त्रार्थः। उद्वाहेऽपि अन्यः कृतप्रायश्चित्तः कृतप्रायश्चित्तां तां दिधिषुं तस्याः कनीयस्याः पूर्व्वोढ्रे दत्त्वा अन्यामुद्वहेदिति स्मृतेः,—इत्यधिकपाठः मु० पु०।

परिवेदने प्रत्यवायं प्रायश्चित्तं च प्रदर्श्येदानीं विषयविशेषे तदपवादं दर्शयति,

**कुब्जवामनषण्डेषु गद्गदेषु जड़ेषु च ।**
**जात्यन्धे बधिरे मूके न दोषः परिवेदने ॥२५॥**

कुब्जः पृष्ठभागे मांसादिविशेषेणात्यन्तविकृतदेहः । वामनोऽतिह्रस्वदेहः । षण्डोनपुंसकः । गद्गदोजिह्वादिदोषेण सहसा वक्तुमशक्तः । जड़ोऽक्षमः कार्य्येष्वप्रवृत्तः । जात्यन्धादयः प्रसिद्धाः । एवंविधस्य ज्येष्ठस्य विवाहाद्ययोग्यत्वात् कनिष्ठस्य विवाहे नास्ति परिवेदने दोषः । एतच्च ज्येष्ठस्य प्रव्रज्यादेशान्तरगमनादीनामप्युपलक्षणम् । अस्मिंश्च परिवेदनाभ्यनुज्ञाने संवादवचनानि पूर्वमेव श्राद्धप्रसङ्गादुदाहृतानि नात्र प्रपञ्च्यन्ते* ।

कुब्जत्वादिदोषरहितेष्वपि भिन्नोदरेषु परिवेदनमभ्यनुजानाति,—

**पितृव्यपुत्त्रः सापत्नः परनारीसुतस्तथा ।**
**दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥२६॥**

पितृव्यपुत्त्रसापत्न्यौ प्रसिद्धौ । परनारीसुतोदत्तक्रीतादिः । एतेषु ज्येष्ठेषु स्थितेषु कनिष्ठस्य विवाहाधानयोर्नास्ति प्रत्यवायः ।

कुब्जत्वादिदोषरहितेष्वेकोदरेषु पर्य्याधाने विशेषमाह,

**ज्येष्ठभ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।**
**अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा ॥२७॥**

---

* वक्ष्यन्ते,—इति मु० ।

कारयेत् कुर्य्यात्। अनुज्ञातः कनिष्ठोज्येष्ठात् पूर्व्वमाधानं कुर्य्यात्। ज्येष्ठभ्रात्रैव पित्राऽप्यनुज्ञातस्य पुत्त्रस्य पर्य्याधानप्राप्तौ चतुर्विंशति-मते तन्निषिध्यते,—

"ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्य्यादग्निपरिग्रहम्।

अनुज्ञातोऽपि सन् पित्रा नादध्यान्मनुरब्रवीत्"—इति।

यत्तु सुमन्तुनोक्तम्,—

"पितुर्यस्य तु नाधानं कथं पुत्त्रस्तु कारयेत्।

अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा"—इति।

उशनाऽपि,—

"पिता पितामहोयस्य अग्रजोवाऽथ कस्यचित्।

तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने"—इति।

तत्पित्रादीनां वैधुर्य्यादिना प्रतिबन्धे सति द्रष्टव्यम्।

परिवेदनपर्य्याधानयोरिव स्त्रीणां पुनरुद्वाहस्यापि प्रसङ्गात् क्वचित् अभ्यनुज्ञां दर्शयति,

**नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।**

**पञ्चस्वापत्सु नारीणां पतिरन्योविधीयते॥२८॥**

नष्टोदेशान्तरगमनेनापरिज्ञातवृत्तान्तः। अयञ्च पुनरुद्वाहो-युगान्तरविषयः। तथाचादिपुराणम्,—

"ऊढ़ायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।

कलौ पञ्च न कुर्व्वीत भ्रातृजायां कमण्डलुम्"—इति।*

---

* ऊढ़ाशब्देन विधिवदूढ़ा ग्राह्या, अन्यत्र पुनरुद्वाहस्यात्राप्यङ्गीकृत-त्वात्,—इत्यधिकः पाठः मु० पुस्तके।

पुनरुद्वाहमकृत्वा ब्रह्मचर्य्यव्रतानुष्ठाने श्रेयोऽतिशयं दर्शयति,

**मृते भर्त्तरि या नारी ब्रह्मचर्य्यव्रते स्थिता* ।**
**सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥२९॥**

मृतग्रहणं नष्टादीनामुपलक्षणम्। चतुर्थपादेन स्मृत्यन्तरप्रसिद्धा ब्रह्मचारिगतिर्दृष्टान्तिता। सा च मनुना दर्शिता,—

"अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्"—इति ।

उक्तब्रह्मचर्य्यादप्यधिकफलमनुगमने दर्शयति,

**तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानुषे ।**
**तावत्कालं वसेत् स्वर्गे भर्त्तारं याऽनुगच्छति ॥३०॥**

तावत्कालं तावत्सहस्रसंवत्सरम् तथाच हारीतः,—

"मृते भर्त्तरि या नारी धर्मशीला दृढ़व्रता ।
अनुगच्छति भर्त्तारं शृणु तस्यास्तु यत् फलम् ॥
तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानुषे ।
तावन्त्यब्दसहस्राणि स्वर्गलोके महीयते ॥
मातृकं पैतृकञ्चैव यत्र कन्या प्रदीयते ।
कुलत्रयं पुनात्येषा भर्त्तारं याऽनुगच्छति"—इति ।

शङ्खलिखितौ,—

"मृते भर्त्तरि या नारी समारोहेद्धुताशनम् ।
साऽरुन्धतीसमाचारा स्वर्गलोके महीयते"—इति ।

---

* ब्रह्मचर्य्ये व्यवस्थिता,—इति मु० ।

नन्विदमनुगमनं प्रत्यक्षश्रुतिविरुद्धम्*। "तस्मादु ह न पुरायुषः स्वर्गकामी प्रेयात्"—इति श्रुत्या आत्महत्याप्रतिषेधात्।

"असूर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः।
तांस्ते प्रत्याधिगच्छन्ति ये के चात्महनोजनाः"—इति

श्रुत्यन्तराच्च†। मैवम्। अनुगमनस्मृतेर्निरवकाशत्वेन प्राबल्यात्। आत्महत्यानिषेधश्रुतिस्तु स्वर्गकामियोषितोऽन्यत्र सावकाशा। ननु स्वर्गकामिन्याः पतिमनुगच्छन्त्याः अपि ब्राह्मण्या अनुगमनं स्मृत्यैव निषिद्धम्। तथाच पैठीनसिः,—

"मृतानुगमनं नास्ति ब्राह्मण्याब्रह्मशासनात्।
इतरेषान्तु वर्णानां स्त्रीधर्मोऽयं परः स्मृतः॥
‡उपकारं यथा भर्त्तुर्जीवन्ती न तथा मृता।
करोति ब्राह्मणी श्रेयोभर्त्तुः शोककरी चिरात्॥
अनुवर्त्तेत जीवन्तं नानुयायान्मृतं पतिम्।
जीवन्ती भर्त्तुर्हितं कुर्य्यात् मरणादात्मघातिनी"—इति।

अङ्गिरा अपि,—

"या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत्।
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत्"—इति।

व्याघ्रपादोऽपि,—

---

* नन्विदमनुपपन्नं प्रत्यक्षश्रुतिविरोधात् स्मृत्यन्तरविरोधाच्च। तथाहि,—इति मु०।

† स्मृत्यन्तरप्रतिषेधाच्च,—इति मु०।

‡ मनुः,—इत्यधिकं शा० पु०।

"न म्रियेत समं भर्त्रा ब्राह्मणी शोकमोहिता ।
प्रव्रज्यागतिमाप्नोति मरणादात्मघातिनी"—इति ।

प्रव्रज्या मैथुनादिभोगत्यागः* । नायं दोषः । अस्य निषेधस्य पृथक्चितिविषयत्वात् । अतएवोशना,—

"पृथक्चितिं समारुह्य न विप्रगन्तुमर्हति ।
अन्यासां चैव नारीणां स्त्रीधर्मोऽयं परः स्मृतः"—इति ।

एकचित्यां समारोहणं कल्पसूत्रकारेण दर्शितम् । "प्रेतस्योत्तरतः पत्न्या संवेशनमविशेषेण नित्यवत्"—इति ।

न केवलं स्वयमेवानुगमनेन स्वर्गे वसति, किन्तु स्वभर्त्तारं नरकादुद्धरतीत्याह,

**व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।**
**एवं स्त्री पतिमुद्धृत्य तेनैव सह मोदते ॥३१॥**

यद्यपि पापीयान् पतिः स्वपापफलभोगाय नरकमार्गायाभिमुखोभवेत्, तथापि योषित् स्वकीयेन प्रबलसुकृतेन तस्य पापफलभोगं प्रतिबध्य पतिमपि स्वेन सह गतिं नयति । अतएव व्यासः,—

"यदि प्रविष्टोनरकं बद्धः पाशैः सुदारुणैः ।
सम्प्राप्तोयातनास्थानं गृहीतो यमकिङ्करैः ॥
तिष्ठते विवशोदीनोवेष्ट्यमानः स्वकर्मभिः ।
व्यालग्राही यथा व्यालं बलादुद्धरतेऽशङ्कितः ॥

---

* प्रव्रज्या मैथुनगन्धपुष्पान्नवासोभूषणताम्बूलादिसर्व्वभोगत्यागः,—इति मु० ।

तद्वद्भर्त्तारमादाय दिवं याति च सा बलात्।
सा भर्तृपरमा नित्यं स्तूयमानाऽप्सरोगणैः॥
क्रीड़ते पतिना सार्द्धं यावदिन्द्राश्चतुर्द्दश।
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत् पतिः।
पुनात्यविधवा नारी तमादाय मृता तु या"—इति।

इदञ्चानुगमनं पतिव्रतयाऽनुष्ठितं सदुक्तरीत्या दम्पत्योरुभयोः श्रेयोहेतुः, पापीयस्याऽनुष्ठितञ्चेत् पापक्षयहेतुर्भवति। तथाच महाभारतम्,—

"अवमत्य तु याः पूर्व्वं पतिं दुष्टेन चेतसा।
वर्त्तन्ते याश्च सततं भर्तृणां प्रतिकूलतः॥
भर्त्राऽनुमरणं काले याः कुर्वन्ति तथाविधाः।
कामात् क्रोधाद्भयान्मोहात् सर्व्वाः पूता भवन्ति ताः॥
आदिप्रभृति या साध्वी पत्युः प्रियपरायणा।
ऊर्द्धं गच्छति सा तत्र भर्त्राऽनुमरणं गता"—इति।

एतच्चानुमरणं न सर्व्वासामपि स्त्रीणां सम्भवति।

"साध्वीनामेव नारीणामग्निप्रपतनादृते।
नान्योधर्मोऽस्ति विज्ञेयोमृतेभर्त्तरि कर्हिचित्॥
यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता।
तावन्न मुच्यते नारी स्त्रीशरीरात् कथञ्चन"।

इत्यङ्गिरसा सामान्येन पतिव्रतानां साध्वीनामधिकारस्य बोधनात्। अयञ्चाधिकारोरजआदिभिः प्रतिबध्यते। तथाच बृहस्पतिः,—

"बालसंवर्द्धनं त्यक्त्वा बालापत्या न गच्छति।

रजस्वला सूतिका च रक्षेद्गर्भं च गर्भिणी"—इति ।

अत्र बालसंवर्द्धनं त्यक्त्वेति वदन् संवर्द्धयितृजनान्तरविरम्भे बालापत्याया अप्यधिकारोऽस्तीति दर्शयन् रक्षेद्गर्भञ्च गर्भिणीति रक्षां दर्शयन् सम्भावितगर्भसन्देहाया अप्यधिकारं वारयति । तथाच नारदीये,—

"बालापत्याश्च गर्भिण्यः अदृष्टऋतवस्तथा ।
रजस्वला राजसुते, नारोहन्ति चितां शुभे"—इति ।

अदृष्टऋतवः ऋत्वदर्शनेन सम्भावितगर्भसन्देहाः* ।

श्रुतिविषयितं प्रायश्चित्तं प्रकीर्णकेषु यन्मतं
तन्नयविशेषयोर्भेदस्तल्लक्षणं परिवेदनम् ।
प्रथयति परं तुरीयाध्याये पराशरभाषिते
विवृतिमकरोत् ग्रन्था निर्णीयमानं माधवः† ॥०॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीर-बुक्कभूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां चतुर्थोऽध्यायः ॥०॥

---

* एतच्चानुमरणं,—इत्यारभ्य एतदन्तोयन्थोनास्ति वङ्गीयपुस्तकेषु ।
† अत्र छन्दोभङ्गोलक्ष्यते ।

## पञ्चमोऽध्यायः।

यत् समाश्रित्य वाल्मीकिप्रमुखाः पदं परं गताः।
तदाश्रयेऽङ्घ्रिकमलं रामचन्द्रस्य निर्म्मलम्* ॥



इत्थं चतुर्थाध्याये प्रकीर्णकपापानां प्रायश्चित्तमभिहितम्। तत्र, यद्यपि परिवेदनादिकं न प्रकीर्णकं उपपातकेषु पठितत्वात्, यद्यपि पुत्रभेदादिकथनं न प्रायश्चित्तरूपं, तथापि प्रकीर्णकप्रायश्चित्तस्य बाहुल्यादध्यायार्थत्वमविरुद्धम्। तत्राध्यायान्ते स्वर्गसाधनमनुगमनं वर्णितम्। तेन ब्रह्मलोकसाधनमाहिताग्निदहनं बुद्धिस्थम्। अतः पञ्चमाध्याये तद्विवक्षुः आदौ प्रायश्चित्तप्रकरणविच्छेदशङ्कामपनुदन् परिशिष्टं प्रकीर्णकप्रायश्चित्तं तावन्नवभिः श्लोकैराह,—

वृकश्वानशृगालाद्यैर्दष्टो यस्तु द्विजोत्तमः।
स्नात्वा जपेत् स गायत्रीं पवित्रां वेदमातरम् ॥१॥
गवां शृङ्गोदके स्नानं† महानद्यास्तु सङ्गमे।
समुद्रदर्शनाद्वाऽपि शुना दष्टः शुचिर्भवेत् ॥२॥
वेदविद्याव्रतस्नातः शुना दष्टो द्विजो यदि।
स हिरण्योदके स्नात्वा घृतं प्राश्य विशुध्यति ॥३॥

---

* मुद्रितपुस्तकातिरिक्तेषु नास्त्ययं श्लोकः।

† शृङ्गोदकस्नाने,—इति स० आ०।

सव्रतस्तु शुना दष्टो यस्त्रिरात्रमुपावसेत् ।
घृतक्कुशोदकं पीत्वा व्रतशेषं समापयेत् ॥४॥
अव्रतः सव्रतो वाऽपि शुना दष्टो भवेद्द्विजः ।
प्रणिपत्य* भवेत् पूतो विप्रैश्चक्षुर्निरीक्षितः ॥५॥
शुना घ्रातावलीढस्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनं प्रोक्तमग्निना भूरि तापितम्† ॥६॥
शुना तु ब्राह्मणी दष्टा जम्बुकेन वृकेण वा ।
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥७॥
कृष्णपक्षे यदा सोमो न दृश्येत कदाचन ।
यां दिशं व्रजते सोमस्तां दिशं वाऽवलोकयेत् ॥८॥
असद्ब्राह्मणके ग्रामे शुना दष्टो द्विजोत्तमः ।
वृषं प्रदक्षिणीकृत्य सद्यः स्नात्वा शुचिर्भवेत् ॥९॥ इति

वृकशुनोरारण्यकग्राम्यत्वाद् भेदः‡। शृगालो जम्बुकः । आदिशब्देन वराहादयो गृह्यन्ते । तैर्दष्टः प्रत्यवायपरिहाराय स्नात्वा गायत्रीं जपेत् । न चात्र विधिप्रतिषेधातिक्रमरहितस्य कथं प्रत्यवाय इति शङ्कनीयम् । श्ववराहादीनां दूरतः परिहर्त्तव्यत्वेन तत्समीपगमनक्रीडादेरतिक्रमरूपत्वेन प्रत्यवायहेतुत्वात् । वेदमात-

---

* प्रणिपातात्,—इति मु० ।
† चोपचूर्णनम्,—इति शा० ।
‡ ग्राम्यत्वे चान्यस्माद्भेदः,—इति मु० ।

रम्,—इत्यनेन मन्त्रान्तरेभ्योऽधिकं पवित्रत्वं दर्शयति। वेदमातृत्वञ्च, "गायत्री छन्दसां माता"—इति स्मृतेरध्यवसीयते। यद्वा, वेदामातरो यस्याः, सा वेदमाता। यद्यपि मन्त्रान्तराण्यपि वेदजन्यानि, तथापि वेदत्रयजन्यत्वमस्या विशेषः। अतएव मनुः,—

"त्रिभ्यएव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः साविव्याः परमेष्ठी प्रजापतिः"—इति॥

अत्र गायत्रीजपे सङ्ख्याविशेष उशनसा दर्शितः,—"दंशादिदष्टो गायत्र्यष्टशतं प्राणायामशतं वा"—इति। एतच्चासमर्थविषयम्। समर्थस्तु गोश्टङ्गोदकस्नानादिकमाचरेत् इति। तत्र, गोश्टङ्गोदकस्नानं नाम गोश्टङ्गपूरितेनोदकेन गायत्र्या शतवाराभिमन्त्रितेन सेचनम्। "गोश्टङ्गेन शतं स्नानं गायत्र्या"—इति हारीतस्मरणात्। गोश्टङ्गोदकस्नान-नदीसङ्गमस्नान-समुद्रदर्शनानामधममध्यमोत्तमाङ्गभेदेन वा दंशतारतम्येन वा व्यवस्था द्रष्टव्या। वेदाध्ययनं वा, प्राजापत्यसौम्याग्नेयवैश्वदेवादिव्रतानि वा, समाप्य स्नातो वेदविद्याव्रतस्नातः। स यदि शुना दष्टः, तदा हिरण्यमुदके निधाय तेनोदकेन स्नात्वा घृतं प्राश्य विशुध्यति। तत्रापि ब्राह्मणश्चेद्गायत्रीं शतकृत्वोजपेत्। तदाह बौधायनः,—

"वेदविद्याव्रतस्नातः शुना दष्टस्तु ब्राह्मणः।
शतपर्य्यायमावर्त्त्य गायत्रीं शुद्धिमाप्नुयात्"—इति॥

चान्द्रायणादिव्रतेन चरितः सव्रतः। स यदि शुना दष्टः, तदा त्रिरात्रमुपोष्य चतुर्थेऽहनि घृतं प्राश्य कुशोदकञ्च पीत्वा पश्चाद्व्रतशेषं समापयेत्। कुशोदकस्थाने यावकं वा पिबेत्। तदाह बौधायनः,—

"सव्रतस्तु शुना दष्टः त्रिरात्रमुपवासयेत् ।
सघृतं यावकं पीत्वा व्रतशेषं समापयेत्"—इति ॥

सव्रताव्रतावुभावपि विप्रान् प्रणिपत्य तैर्निरीक्षितौ* यथोक्तप्रायश्चित्ताचरणेन पूतौ भवतः । यस्तु शुना न दष्टः किन्तु नासिकया घ्रातः जिह्वया वाऽवलीढः नखैर्वा लिखितः, एतत्त्रयेऽपि तं प्रदेशं प्रक्षाल्य वह्निना सन्ताप्य शुद्धाः भवेयुः । यदा ब्राह्मणी श्वादिभिर्दष्टा भवति, तदा सा रात्रावुदितान् ग्रहान् सोमाङ्गारकादीन् नक्षत्राणि च कृत्तिकादीन्यवलोक्य शुद्धा भवति । कृष्णपक्षे मेघच्छन्ने सोमदर्शनासम्भवे शास्त्रदृष्ट्या तदवस्थानयोग्यां दिशं वा चक्षुषाऽवलोकयेत् । एतच्चावलोकनं पञ्चगव्यप्राशनस्योपलक्षणम् । अतएवाङ्गिराः,—

"ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
यदा न दृश्यते सोमः प्रायश्चित्तं कथं भवेत् ॥
यां दिशन्तु गतः सोमस्तां दिशञ्चावलोकयेत् ।
सोममार्गेण सा पूता पञ्चगव्येन शुध्यति"—इति ॥

या तु समुद्रतीरवासिनी तस्याः सोमदर्शनाभावे तद्दिगवलोकनवत् समुद्रदर्शनमपि विशुद्धिहेतुः । तदाह बौधायनः,—

"ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
समुद्रदर्शनाद्वाऽपि शुना दष्टा शुचिर्भवेत्"—इति ॥

यस्मिन् ग्रामे ब्राह्मणा न सन्ति तत्र ब्राह्मणप्रणिपातो निरी-

---

* तैर्निरीक्षितौ,—इति मु० ।

† प्रदक्षिणं,—इति ग्रा० ।

क्षणयोः स्थाने वृषप्रदक्षिणं द्रष्टव्यम्*। ननु स्मृत्यन्तरेष्वन्यथा प्रायश्चित्तानि दृश्यन्ते। तत्र मनुः,—

"श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेवच।
नराश्वोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यति"—इति॥

याज्ञवल्क्योऽपि,—

"पुंश्चलीवानरखरैर्दष्टः श्वोष्ट्रादिवायसैः।
प्राणायामत्रयं† कृत्वा घृतं प्राश्य विशुद्ध्यति"—इति॥

हारीतोऽपि,—

"श्वानो वा क्रौञ्चकोवापि नारी वा यदि वा नरः।
आखुर्नकुलमार्जारो वायसग्राम्यशूकराः॥
एतैर्दष्टे द्विजस्याङ्गे प्रायश्चित्तं कथं भवेत्।
स्नानं कुर्य्यात् सचेलन्तु विप्राणामनुशासनात्॥
प्रोक्षणीभिस्त्रिपूताद्भिः कारयेन्मार्जनं द्विजः।
प्राणायामत्रयं कुर्य्यात् दद्यात् गोभ्यस्तृणं नरः॥
सद्य द्विजैश्च भुक्तेन शुद्ध्यते नात्र संशयः"—इति।

वशिष्ठोऽपि,—

"ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम्।
प्राणायामशतङ्कृत्वा घृतं प्राश्य विशुद्ध्यति"—इति॥

शङ्खः,—

---

* प्रदक्षिणनिरीक्षणे द्रष्टव्ये,—इति शा०।
† प्राणायामं जले,—इति मु०।

"शृगालवृकगोविप्रशुना दष्टस्तथैव च ।
त्रिरात्रन्तु व्रतं कुर्य्यात् पुंश्चलीदशनक्षतः"—इति ॥

हारीतोऽपि,—

"शुना दष्टस्त्र्यहं यावाहारः समुद्रगां नदीम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य शुचिर्भवेत्"—इति ॥

अङ्गिराश्चापि*,—

"ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
गृहस्थस्तु द्विरात्रं वाऽप्येकाहं वाऽग्निहोत्रवान् ॥
नाभेरूर्द्धन्तु दृष्टस्य तदेव द्विगुणं भवेत् ।
स्यादेतत् त्रिगुणं वक्त्रे मस्तके च चतुर्गुणम् ॥
अव्रती सव्रती वाऽपि शुना दष्टस्तथा द्विजः ।
दृष्ट्वाऽग्निं हूयमानन्तु सद्यएव शुचिर्भवेत्"—इति ॥

पैठीनसिरपि । "शुना दष्टस्त्रिरात्रमुपवसेत् द्विजस्य ब्राह्मणस्तु शुनादष्टो गायत्र्यष्टसहस्राभिमन्त्रितं कृत्वोल्मुकेन दग्धेश्चतुर्भिः कलसैः स्नापनं कृत्वा ततः शुद्ध्यति, नदीसङ्गमे वाऽऽलस्यातुरस्य वा तत्र पिता मनसा ध्यायन् सर्व्वकार्य्याणि कुर्व्वीत पितुरभावे सत्याचार्य्यः" । पुलस्त्योऽपि,—

"रजस्वला यदा दष्टा शुना जम्बुकरासभैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥
ऊर्द्धन्तु द्विगुणं नाभेर्वक्त्रे तु द्विगुणं तथा ।

---

* आपस्तम्बोऽपि,—इति मु० ।

चतुर्गुणं स्मृतं मूर्द्धि तदन्यत्राशुचिर्भवेत्"—इति ॥

जातूकर्णोऽपि,—

"ब्राह्मणी क्षत्रिया वैश्या शुना च श्वापदैरपि।

दृष्टा सचेलमाप्लुत्य शुद्ध्यतीति न संशयः"—इति॥

एतेषु वचनेषु यत्र प्रायश्चित्तबाहुल्यं, तत्र तत्रोत्तमाङ्गविषयत्वं दंशतारतम्यविषयत्वं वोहनीयम्। ब्रह्मचारिगृहस्थाग्निहोत्रिषु उत्तरोत्तरं तपोबाहुल्यात् प्रायश्चित्तह्रासः।

अथ दुर्मृतस्याहिताग्नेर्दहने प्रायश्चित्तमाह,—

**चण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि।**

**आहिताग्निर्मृतो विप्रो विषेणात्महतो यदि॥१०॥**

**दहेत्तु ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम्।**

**स्पृष्ट्वा वोढ्वा च दग्ध्वा च सपिण्डेषु च सर्व्वथा॥११॥**

**प्राजापत्यं चरेत् पश्चात् विप्राणामनुशासनात्। इति।**

ब्राह्मण्यां शूद्राजातश्चण्डालः। तदाह याज्ञवल्क्यः,—

"ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद् वैदेहकस्तथा।

शूद्रजातस्तु चण्डालः सर्व्वकर्मबहिष्कृतः"—इति॥

क्षत्तुरुग्रायां जातः श्वपाकः। तथाच मनुः,—

"क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्तितः"—इति।

हतो दण्डशस्त्रादिना प्राणैर्वियुक्तः। आत्महतः स्वयमेव विषं पीत्वा मृतः। तमाहिताग्निं मृतं ब्राह्मणं सपिण्डेषु प्रत्यासन्नो विप्रो मन्त्रवर्जितं दहेत्। तत्र स्पर्शनं दहनं वहनं वा यः

करोति, स विप्रैरनुज्ञातः स्पर्शनादिदोषपरिहाराय प्राजापत्यं कृच्छ्रमाचरेत् । लोकाग्नावित्यनेन गार्हपत्यादीनां व्यावृत्तिः । यद्यप्यतीतस्य चतुर्थाध्यायस्यादौ दुर्मृतवहनादिप्रायश्चित्तमुक्तं, तथापि तस्य सामान्यरूपत्वादनाहिताग्निविषयत्वेनाप्युपपत्तेः, आहिताग्निविषयस्य तु इहैवोपवर्णनमुचितं, वक्ष्यमाणतत्संस्कारं प्रत्युपोद्घातरूपत्वात् ।

प्राजापत्यचरणानन्तरं शास्त्रीयसंस्कारः कर्त्तव्य इत्याह,—

**दग्धाऽस्थीनि पुनर्गृह्य क्षीरैः प्रक्षालयेद् द्विजः ॥१२॥**
**पुनर्दहेत् स्वाग्निना तु स्वातन्त्र्येण पृथक् पृथक् । इति ।**

उक्तरीत्या लौकिकाग्नौ यानि दग्धान्यस्थीनि, तानि पुनः संगृह्य क्षीरप्रक्षालनपूर्वकं गार्हपत्याद्यग्निभिः कल्पोक्तप्रकारेण दहेत् । एतच्च हारीतेन दर्शितम्,—

"ब्राह्मणाद्वधसंप्राप्तौ चण्डालस्य करेऽथवा ।
आत्मना शस्त्रघाते वा शूद्रवत् दाहयेद्द्विजम् ॥
प्राजापत्यं चरेत् पश्चात् सपिण्डेष्वेव सप्तमात् ।
तद्भस्मास्थि गृहीत्वैव विप्राणामनुशासनात् ॥
क्षीरप्रक्षालनं कुर्य्यात् तदस्थि प्रेतवद्दहेत् ।
पुनर्दहनमन्त्रैश्च यथाविधि समाचरेत् ॥
एवमेव विधिं कुर्य्यात् मरणे गर्हितस्य च"—इति ।

इदानीं प्रोषितस्याहिताग्नेः संस्कारमाहिताग्निर्द्विज इत्यारभ्य तथा कार्य्यं विचक्षणैरित्यन्तेन ग्रन्थजातेन दर्शयति,—

**आहिताग्निर्द्विजः कश्चित् प्रवसन् कालचोदितः ॥१३॥**

देहनाशमनुप्राप्तस्तस्याग्निर्व्वसते गृहे ।
प्रेताग्निहोत्रसंस्कारः श्रूयतामृषिपुङ्गवाः ॥१४॥
कृष्णाजिनं समास्तीर्य्य कुशैस्तु पुरुषाकृतिम् ।
षट्शतानि शतं चैव पलाशानाञ्च वृन्ततः ॥१५॥
चत्वारिंशत् शिरे दद्याद्दश कण्ठे तु विन्यसेत् ।
बाहुभ्यां शतकं दद्यादङ्गुलीषु दशैव तु ॥१६॥
शतन्तु जघने दद्याद् द्विशतं तूदरे तथा ।
दद्यादष्टौ वृषणयोः पञ्च मेढ्रे तु विन्यसेत् ॥१७॥
एकविंशतिमूरुभ्यां द्विशतं जानुजङ्घयोः ।
पादाङ्गुष्ठेषु षड् दद्याद् यज्ञपात्रं ततोन्यसेत् ॥१८॥
शम्यां शिश्ने विनिःक्षिप्य अरणीं मुष्कयोरपि ।
जुहूं च दक्षिणे हस्ते वामे तूपभृतं न्यसेत् ॥ ९॥
पृष्ठे तूलूखलं दद्यात् पृष्टे च मुसलं न्यसेत् ॥
उरसि क्षिप्य दृषदं तण्डुलाज्यतिलान्मुखे ॥२०॥
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीन्तु चक्षुषोः ।
कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेत् ॥२१॥
अग्निहोत्रोपकरणमशेषं तत्र निक्षिपेत् ।
असौ स्वर्गाय लोकाय स्वाहेत्येकाहुतिं न्यसेत् ॥२२॥
दद्यात् पुत्रोऽथवा भ्राताऽप्यन्योवाऽपि च बान्धवः ॥
यथा दहनसंस्कारस्तथा कार्य्यं विचक्षणैः ॥२३॥

यदा प्रोषितश्चाहिताग्निर्देशान्तरे प्रम्रियते, अग्निश्च स्वगृहे वसति, तदानीमास्तीर्णे कृष्णाजिने पलाशवृन्तैः देहाकृतिं कुशवद्धां निर्माय तदवयवेषु यज्ञपात्राणि निक्षिप्यासौ स्वर्गाय लोकाय स्वाहेत्येकामाज्याहुतिं जुहुयात् । यत्र द्रव्यानिर्देशेन होमस्तत्राज्यमेव होमद्रव्यम् । ततः कल्पोक्तप्रकारेण कृत्स्नं संस्कारं समापयेत् । ननु अन्यथा पलाशवृन्तानां सङ्ख्या स्मृत्यन्तरे श्रूयते । तत्र हारीतः,—

"देशान्तरगते विप्रे विपन्ने कालपर्य्ययात् ।
शरीरनाशे कल्पः स्यादाहिताग्नेर्विशेषतः ॥
कृष्णाजिनं समास्तीर्य्य पुरुषाकृतिमेवच ।
त्रीणि षट्त्रिंशतं वृन्तान् पालाशांस्तु समाहितः ॥
अशीत्यर्द्धं शिरे दद्याद् ग्रीवायां दशएवच ।
बाहुभ्यान्तु शतं दद्यादङ्गुल्योर्दशएवच ॥
उरसि त्रिंशतिं* दद्यात् जठरे विंशतिं तथा ।
अष्टौ वृषणयोर्दद्यात् पञ्च मेढ्रे तु कल्पयेत् ॥
ऊरुभ्यान्तु शतं दद्याद्द्विशतं जानुजङ्घयोः ।
पादांगुल्योर्दशैव स्यादेतत् प्रेतस्य कल्पनम्"—इति ॥

वाढम् । अत्र व्यवस्थापकहेतोरभावाद्विकल्पो द्रष्टव्यः । स चैच्छिकः । अहिताग्निसंस्कारस्य फलमन्वयव्यतिरेकाभ्यां विशदयति,—

**ईदृशन्तु विधिं कुर्य्यात् ब्रह्मलोकगतिर्ध्रुवा ।**
**दहन्ति ये द्विजास्तन्तु ते यान्ति परमाङ्गतिम् ॥२४॥**

---

* त्रिशत,—इति मु० ।

अन्यथा कुर्व्वते कर्म त्वात्मबुद्ध्या प्रचोदिताः।
भवन्त्यल्पायुषस्ते वै पतन्ति नरकेऽशुचौ ॥२५॥

तत्र संस्कार्य्यस्याहिताग्नेः ब्रह्मलोकसमाप्तिः, संस्कर्त्तुर्यथोक्तकारिणः परमा गतिः। अयथोक्तकारिणः पण्डितम्मन्यस्य नरकप्राप्तिः।

प्रकटयति विभक्तं यः प्रकीर्णाविशेषं
समधिकपरिवर्हं संस्कृतिञ्चाहिताग्नेः।
प्रकृतिगहनमेतम्पञ्चमाध्यायमेवं
विशदमयमकार्षीत् व्याख्यया माधवार्य्यः॥

इति महाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीरबुक्कभूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरव्याख्यायां पञ्चमोऽध्यायः॥ ० ॥

---

# षष्ठोऽध्यायः ।

ईश्वरं सर्व्वलोकानां भक्तानां भद्रदायकम् ।
जानकीवल्लभं रामं मन्महे मौनिलोचनम्* ॥

प्रकीर्णकप्रायश्चित्तप्रसङ्गागताहिताग्निसंस्कारः पञ्चमाध्याये निरूपितः। अथ षष्ठेऽध्याये प्रकृतमेव प्रायश्चित्तमनुवर्त्तयिष्यमाणो मलिनीकरणसङ्करीकरणोपपातकानां† प्रायश्चित्तानि प्राधान्येन विवक्षुः प्रथमं प्रतिजानीते,—

**अतः परं प्रवक्ष्यामि प्राणिहत्यासु निष्कृतिम् ।**
**पराशरेण पूर्व्वोक्तां मन्वर्थेऽपि च विस्तृताम्॥१॥इति ।**

अथ प्रकीर्णकप्रायश्चित्तकथनानन्तरं मलिनीकरणरूपासु प्राणिहत्यासु प्रायश्चित्तं प्रवक्ष्यामि। हत्यास्विति बहुवचनं मलिनीकरणावान्तरभेदाभिप्रायम् । मन्दबुद्धीनां स्मृत्यन्तरपर्य्यालोचने सत्यापाततोविरोधबुद्धिरुदेति, न्यायदर्शिनां तु न तथेति सूचयितुं स्मृत्यन्तरसम्मत्युपन्यासः। पराशरशब्देन वृद्धपराशरोविवक्षितः। मन्वर्थे मनुप्रोक्ते धर्म्मशास्त्रे विस्तृताम् ।

प्रतिज्ञातेष्वादौ मलिनीकरणविशेषस्य क्रौञ्चादिवधस्य प्रायश्चित्तमाह,—

---

* नास्त्ययं श्लोकोमुद्रितातिरिक्तपुस्तकेषु ।

† उपपातकानां,—इति मु० ।

**क्रौञ्चसारसहंसांश्च चक्रवाकं च कुक्कुटम्।**
**जालपादञ्च शरभमहोरात्रेण शुध्यति ॥२॥**

क्रौञ्चादयः पक्षिविशेषाः प्रसिद्धाः। जालपादशरभौ यद्यप्य-प्रसिद्धौ, तथापि पक्षिभिः समभिव्याहारात्तावपि पक्षिविशेषौ द्रष्टव्यौ। अत्र हत्वेत्यध्याहारः। अहोरात्रेणैकोपवासेनेत्यर्थः। तथाच सम्वर्त्तः,—

"चक्रवाकं तथा क्रौञ्चं तित्तिरिं शुकसारिके।
श्येनं गृध्रमुलूकञ्च तथा पारावतानपि॥
टिट्टिभं जालपादञ्च मद्गुं कुक्कुटमेवच।
एवं पक्षिषु सर्व्वेषु दिनमेकमभोजनम्"—इति॥

ननु हंसादिवधे गोदानं मनुराह,—

"हत्वा हंसं बलाकाञ्च वकं* वर्हिणमेव च।
वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम्"—इति॥

याज्ञवल्क्योऽपि,—

"हंसश्येनकपिक्रव्याज्जलस्थलशिखण्डिनः।
भासञ्च हत्वा दद्याद्गामक्रव्यादांस्तु वत्सिकाम्"—इति॥

नायं दोषः। गोदानस्योपवासाशक्तधनिकविषयत्वात्।

बलाकादिषु पूर्व्वोक्तात् अन्यों प्रायश्चित्तमाह,—

---

* चक्रं,—इति मु०।

† न्यूनं,—इति मु०।

**बलाकाटिट्टिभौ वापि शुकपारावतावपि ।**

**अहिनक्रविघाती च शुद्ध्यते नक्तभोजनात् ॥३॥ इति ।**

शुकपारावतौ यौ, तयोर्हन्ता* नक्तभोजनात् शुद्ध्यति,—इति योजनीयम् । यत्तु सम्वर्त्तेनोक्तम्,—

"हंसं वकं बलाकाञ्च श्वापदं वर्हिणं तथा ।

सारसं चाषभासञ्च† हत्वा त्रीन् दिवसान् क्षपेत्"—इति ॥

तत्सन्ततवधे‡ द्रष्टव्यम् ।

वृकादिषु न पूर्व्ववद्भोजनत्यागः, किन्तु प्राणायामः कर्त्तव्यइत्याह,—

**वृककाक§कपोतानां शारितित्तिरिघातकः ।**

**अन्तर्जलउभे सन्ध्ये प्राणायामेन शुध्यति ॥४॥ इति ।**

नात्र वृकोऽरण्यश्वा मृगसमभिव्याहाराभावात् ,पक्षिसमभिव्याहारात्तु पक्षिविशेषो द्रष्टव्यः। वृककाककपोतानां हन्तेत्यध्याहारः । सन्ध्ये इत्यन्तसंयोगे द्वितीया । ततश्च प्राणायामेनेत्येकवचनश्रवणेऽप्यावृत्तिर्लभ्यते। यावद्भिः प्राणायामैर्नैरन्तर्येण सन्ध्याद्वयं समाप्यते तावतः प्राणायामान् कुर्य्यादित्यर्थः। यत्तु मनुना तित्तिर्य्यादिवधे तिलद्रोणादिदानमुक्तम्,—

---

* बलाकाटिट्टिभौ शुकपारावतौ च येन हतौ । अथवा । द्वितीयवचनविवक्षयाऽपि तौ योहन्ति स हन्ता,—इति मु० ।

† रासभञ्चैव,—इति शा० ।

‡ तत्संहतवधे,—इति मु० ।

§ चक्र,—इति शा० ।

"घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरौ ॥

शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायणम्"—इति।

याज्ञवल्क्येनापि शुकादिवधे द्विहायनवत्सादिदानमुक्तम्,—

"गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः।

खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः"—इति ॥

तत् सर्व्वं पूर्व्ववद्बहुनिकविषयत्वेन वेदितव्यम्।

गृध्रादिवधे सार्द्धदिनद्वयं व्रतचर्य्यामाह,—

**गृध्रश्येनशशादानामुलूकस्य च घातकः।**

**अपक्वाशी दिनं तिष्ठेत् त्रिकालं मारुताशनः ॥५॥ इति।**

श्येनः कपोतादीन् पक्षिणो निहन्ति। शशमत्तीति शशादः। अतः श्येनशशादौ भिन्नजातीयौ। अपक्वाशी वह्निपाकरहितकन्द-मूलफलादिकमेकस्मिन्दिनेऽश्नीयात्। ततः सार्द्धं दिनं मारुता-शनः उपवसेदित्यर्थः। यत्तु कश्यपश्चाह। "वकबलाकहंससारसकार-ण्डवचक्रवाककपोतकुक्कुटगृध्रश्येनखञ्जरीटटिट्टिभोलूकशुकसारिका-तित्तिरिमयूरकुररमुद्गकामेचककलविङ्ककपोतपारावतादीनां वधे प्रायश्चित्तं अहोरात्रोपोषितः सर्व्वबीजानि च दद्यात्"—इति। तदिदमशक्तविषयम्।

शक्तस्यापि वल्गुल्यादौ वलाकादिसदृशं प्रायश्चित्तं दर्शयति,—

**वल्गुली* टिट्टिभानाञ्च कोकिलाखञ्जरीटके।**

---

* वल्गुणी,—इति शा०। एवं परत्र।

**नालिका*रक्तपक्षेषु शुद्ध्यते नक्तभोजनात् ॥६॥ इति**

अत्राप्रसिद्धोऽपि वल्गुलीशब्दः साहचर्य्यात् पक्षिविशेषवाची द्रष्टव्यः। यद्यपि टिट्टिभशब्दो बलाकादिवचनेऽपि पठितः, तथाप्य-वान्तरजातिभेदमाश्रित्य पौनरुक्त्यं परिहर्त्तव्यम्। वल्गुलीटिट्टिभानां हन्ता, कोकिलखञ्जरीटके हते, रक्तपक्षेषु हतेष्विति शेषः। यत्त्वाङ्गि-रसा दर्शितम्,—

"काके श्येनो च भ्रे[†] च टिट्टिभे खञ्जरीटके।
यथा गवि तथा हत्यां भगवानङ्गिराऽब्रवीत्"—इति॥

तत् सन्ततहन्तृविषयम्[‡]। अङ्गिरोग्रहणेन वृद्धाङ्गिरा उच्यते[§]।

बलकाकादीनां बधे प्रायश्चित्तमाह,—

**कारण्डवचकोराणां पिङ्गलाकुररस्य[||] च।**
**भारद्वाजादिकं हत्वा शिवं पूज्य विशुद्ध्यति ॥७॥ इति**

आदिशब्देन भारद्वाजविसदृशाः[¶] पक्षिविशेषाः गृह्यन्ते। तेषां च बधे शैवमन्त्रकल्पोक्तविधानेन शिवं सम्पूज्य विशुद्ध्यति।

पूर्व्वत्रानुक्तानां पक्षिणां बधे साधारणं प्रायश्चित्तं दर्शयति,—

---

* लाविका,—इति मु०।

† भासे,—इति मु०।

‡ संहतबधविषयम्,—इति मु०।

§ नास्त्येतत् मुद्रितातिरिक्तेषु।

|| कुरवस्य, कुववस्य,—इति च पाठौ।

¶ सदृशाः,—इति मु०।

**भेरुण्डचासभासांश्च पारावतकपिञ्जलम्।**
**पक्षिणां चैव सर्व्वेषामहोरात्रमभोजनम् ॥८॥ इति**

टिट्टिभवत् पारावतेऽप्यवान्तरजातिभेदो द्रष्टव्यः। कपिञ्जलं हत्वा, पक्षिणां हत्यायामिति शेषः।

यदिदं मलिनीकरणविशेषस्य पक्षिवधस्य साधारणं प्रायश्चित्तमभिहितं, तस्य प्रदर्शनार्थत्वेनावशिष्टेऽपि मलिनीकरणे कृमिकीटादिवधे मद्यानुगतभोजने च प्रायश्चित्तमुन्नेयम्। तच्च विष्णुना दर्शितम्,—

"मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम्।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं विशोधनम्"—इति ॥

पक्षिषु कृम्यादिषु च सास्थ्यनस्थिभेदेन प्रायश्चित्तविशेषः स्मृत्यन्तरेऽभिहितः। तत्र मनुः,—

"अस्थिमतान्तु सत्वानां सहस्रस्य प्रमापणे।
पूर्णे चानस्थ्यनस्थ्नान्तु शूद्रहत्याव्रतं चरेत्"—इति।

याज्ञवल्क्योऽपि,—

"अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्।
अस्थिमतां सहस्रन्तु तथाऽनस्थिमतामनः"—इति।

शङ्खलिखितावपि,—"क्षुद्रजन्तूनामनस्थ्नामनसः प्रमापणे शूद्रबधोऽस्थिमतां सहस्रं प्रमाप्य शूद्रबधः"—इति। अस्थिमत्सहस्रवधे शकटपरिमितानस्थिमद्वधे च वक्ष्यमाणशूद्रहत्याव्रतं चरेत्। प्रत्येकबधे मनुराह,—

"किञ्चिदेव तु विप्राय दद्यादस्थिमतां बधे।

अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति"—इति ॥

मलिनीकरणानां प्रायश्चित्तमभिधाय सङ्करीकरणानां प्रायश्चित्तमाह,—

**हत्वा मूषकमार्जारसर्पाजगरडुण्डुभान् ।**
**कृसरं भोजयेद्विप्रान् लोहदण्डश्च दक्षिणा ॥९॥ इति ॥**

अत्र नकुलोऽपि द्रष्टव्यः । तथाच विष्णुः । "हत्वा मूषकमार्जारनकुलमण्डूकडुण्डुभाजगराणामन्यतमं कृसरान् भोजयित्वा लौहदण्डं दक्षिणां दद्यात्" । कृसरन्तिलमुद्गमिश्रमन्नम्* । लौहशब्देन कान्तायसमुच्यते । तथाच मनुः,—

"आभ्रीं कार्ष्णायसीं दद्यात् सर्पान् हत्वा द्विजोत्तमः"—इति ।

यत्तु शङ्खेनोक्तम्,—

"हत्वा द्विजस्तथा सर्पान्† जलेशयविलेशयौ ।
सप्तरात्रं तथा कुर्यात् व्रतं ब्रह्महतेस्तु यत्"—इति ॥

ब्रह्महणो वक्ष्यमाणं यत् व्रतं, तन्मध्ये सप्तरात्रोचितव्रतमाचरेत् । यदपि सम्वर्त्तेनोक्तम्,—

"मण्डूकनकुलौ हत्वा सर्पाजगरमूषकान् ।
त्रिरात्रोपोषितः सम्यक् शुद्धो‡ ब्राह्मणभोजनात्"—इति ॥

यदप्युशनसोक्तम् । "सर्पहन्ता माषमात्रं दद्यात्" । यच्च वसिष्ठेनो-

---

* सहितपाचितमन्नं—इति मु० ।
† हत्वा द्विजः स्थले सर्व्वं,—इति मु० ।
‡ शुद्ध्येत्,—इति मु० ।

कम्*। "श्वमार्जारनकुलमण्डूकसर्पाजगरमूषकान् हत्वा कृच्छ्रं द्वादशरात्रं चरेत् किञ्चिद्दद्यात्"—इति। तत्र सर्व्वत्र प्रायश्चित्तगौरवलाघवपर्य्यालोचनया कामकृताकामकृताभ्यासानभ्यासादिविषयत्वमूहनीयम्।

शिशुमारादीन् हत्वा दिनमेकं अनलेन वृन्ताकमात्रं भक्षयेदित्याह,—

**शिशुमारं तथा गोधां हत्वा कूर्मञ्च शल्लकम्†।**
**वृन्ताकफलभक्षी वाऽप्यहोरात्रेण शुद्ध्यति॥१०॥ इति॥**

काश्यपस्तु लौहदण्डदानमप्याह। "कृकलाससर्पनकुलगोधाशल्लकवधेऽहोरात्रोषितस्तान्ते लौहदण्डं दद्यात्"—इति। मनुस्तु पक्षान्तरमाह,—

"मार्जारनकुलौ हत्वा चासं मण्डूकमेव च।
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत्।
पयः पिबेत्त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत्।
उपस्पृशेत् स्रवन्त्यां वा सूक्तं वा दैवतं जपेत्"—इति।

यमोऽपि। "श्वनकुलसर्पमार्जारमण्डूकविकिरकिकिदीविकगोधागृध्रोलूकवायसमयूरग्रामचटकसृगालमूषकान् हत्वा एकैकवधे शूद्रवधः"—इति। याज्ञवल्क्योऽपि,—

"मार्जारगोधानकुलमण्डूकश्वपतत्रिणः।
हत्वा त्र्यहं पिबेत् क्षीरं कृच्छ्रं वा पादिकं चरेत्"—इति॥

* सर्पहन्ता,—इत्यारभ्य, एतदन्तो ग्रन्थो नास्ति वङ्गीयपुस्तकेषु प्रायः।
† शल्लकस्थाने शल्यक,—इति मु०। एवं परत्र।

विष्णुरपि । "गोधोलूकचासकाकवधे त्रिरात्रमुपवसेत्"—इति । ईदृशानां सर्व्वेषां विसंवादिवचनानां साक्षाद्व्यवस्थापकं वचनान्तरं यत्र न लभ्यते, तत्र सर्व्वत्र विधीयमानप्रायश्चित्तानुसारेण संहतासंहतबुद्धिपूर्व्वकाबुद्धिपूर्वकाभ्यासानभ्यासापदनापदादिविषयत्वं कल्पनीयम् ।

आरण्यश्वादीनां हन्तुरुपवासत्रयपूर्व्वकं तिलप्रस्थदानमाह,—

**वृकजम्बूकऋक्षाणां तरक्षुश्वानघातकः ।**
**तिलप्रस्थं द्विजे दद्यात् वायुभक्षो दिनत्रयम् ॥११॥ इति ॥**

अत्रोपवासत्रयं विष्णुरप्याह । "श्वानं हत्वा त्रिरात्रमुपवसेत्"—इति । पैठीनसिरत्र शूद्रहत्याव्रतमाह । "काकोलूककलासकंकवृक*सृगालभासवर्हिणमूषकचक्रवाकहंसप्रवोणिकनकुलमण्डूकविड़ालश्ववधे एतेषामेकैकस्मिन् शूद्रवधवद्विहितम्"—इति । ननु, शूद्रहत्याव्रतं षाण्मासिकं, तच्चात्यन्तगुरुत्वाद्वृकादिहत्यायामयुक्तम् । नायं दोषः । अस्य व्रतस्य चिरकालनैरन्तर्य्यविषयत्वेन नेतव्यत्वात् ।

गजादिवधे त्रिकालस्नानयुक्तमेकोपवासमाह,—

**गजस्य च तुरङ्गस्य महिषोष्ट्रनिपातने ।**
**प्रायश्चित्तमहोरात्रं त्रिसन्ध्यमवगाहनम् ॥१२॥ इति ।**

मनुस्तत्र दानविशेषमाह,—

"वासोदद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजम् ।
अजमेषावनड्वाहं खरं हत्वैकहायनम्"—इति ।

---

* खरवृक,—इति मु० ।

विष्णुरपि । "गजं हत्वा पञ्च नीलवृषान् दद्यात् तुरङ्गं हत्वा वासः एकहायनमनड्वाहं खरवधे मेषाजवधे सुवर्णकृष्णान्नं तिल-मुष्ट्रवधे च"—इति। एतत्त्रितयं* धनिकविषयम्। धनरहितस्यावृत्ति-विषयमभिप्रेत्य सम्वर्त्त आह,—

"हस्तिनं तुरगं हत्वा महिषोष्ट्रौ कपिं तथा ।
एषु सर्व्वेषु कुर्व्वीत सप्तरात्रमभोजनम्"—इति ॥

जाबालिरपि,—

"हस्तिनं तुरगं हत्वा महिषं गां† तथैव च ।
कृच्छ्रं सान्तपनं कुर्य्यात् गोमहिष्यनृतेषु‡ च"—इति ॥

कुरङ्गादिवधे ब्राह्मणभोजनसहितमुपवासत्रयमाह,—

**कुरङ्गं वानरं सिंहं चित्रं व्याघ्रन्तु घातयन् ।**
**शुध्यते स त्रिरात्रेण विप्राणां तर्पणेन च ॥१३॥ इति ॥**

चित्रो व्याघ्रसदृशमृगविशेषः। तर्पणं भोजनम्। तथाच सम्वर्त्तः,—

"व्याघ्रं श्वानं खरं सिंहं मृगं शूकरमेव च ।
एतान् हत्वा द्विजः कुर्य्यात् ब्राह्मणानान्तु भोजनम्"—इति ॥

जाबालिः आवृत्तिं मत्यातञ्चाभिप्रेत्याह,—

"सिंहव्याघ्रवृकाणाञ्च मृगखड्गरुरुद्विपान् ।
हत्वा सान्तपनं कुर्य्यात् गोभूकन्याऽनृतेषु च"—इति ॥

---

* एतदुभयं,—इति मु० ।
† वा,—इति मु० ।
‡ गोभूकन्यान्टतेषु,—इति मु० ।

गवादिविषयाण्यनृतानि गोभूकन्याऽनृतानि। सुमन्तुरपि। "वा-नरसिंहमार्जारमण्डूकमूषकश्ववधे प्राजापत्यम्"—इति ।

मृगादिहत्यायामुपवासपूर्वकनीवारादिपारणमाह,—

**मृगरोहिद्वराहाणामजावस्तस्य घातकः ।**
**अकालकृष्टमश्नीयादहोरात्रमुपोष्य सः ॥१४॥**

कुरङ्गशब्दस्य मृगावान्तरजातिवाचकत्वात् सामान्यजातिवाची मृगशब्दोगोबलीवर्द्दन्यायेन कुरङ्गेतर*विषयोद्रष्टव्यः। हव्ययोग्यो† मेषोवस्तः। धनिकस्यात्तिविषये कश्यपश्राह। "अजाविकवधे त्रिरात्रं प्रायश्चित्तं चीर्णान्ते हिरण्यं दद्यात् वस्त्रं च"—इति ।

पूर्व्वत्रानुक्तानां मृगाणां बधे जपसहितमुपवासमाह,—

**एवञ्चतुष्पदानाञ्च सर्व्वेषां वनचारिणाम् ।**
**अहोरात्रोषितस्तिष्ठेज्जपेद्वै जातवेदसम् ॥१५॥ इति ।**

न्यायतत्त्वविदा पापतारतम्यानुसारेण प्रायश्चित्ततारतम्यमूहनीयमिति विवचित्वा पूर्व्वोक्तानां प्रायश्चित्तविशेषाणां प्रदर्शनार्थत्वं द्योतयितुमेवमित्युक्तम्। समूहनीयाः प्रायश्चित्तविशेषाः स्मृत्यन्तरेषु दर्शिताः। तत्र शङ्खः,—

"पशून् हत्वा तथा ग्राम्यान् मासं कुर्य्याद्विचक्षणः"—इति।

शातातपोऽपि। "हस्त्यश्वरासभवधे आरण्यपशुवधे च मासेनैकेन शुद्ध्यति"—इति । व्यासोऽपि‡,—

* कुरङ्गेक,—इति मु० ।
† युद्धयोग्यो,—इति मु० ।
‡ व्याघ्रोऽपि,—इति मु० ।

"सूकरोष्ट्रखरान् हत्वा त्र्यहमेतद्व्रतं चरेत्।
सर्व्वांश्च प्राणिनः स्थूलान्मण्डूकनकुलेष्वहः*"—इति।

कश्यपोऽपि। "मृगमहिषवराहकुञ्जरगण्डशरभतरक्षुवानरसिंह-व्याघ्रचमर†शल्यकादीनामन्येषाञ्च बधे अहोरात्रोषितस्त्रीर्णान्ते घृतं दद्यात्"—इति। तत्र सर्व्वत्र प्रायश्चित्तगौरवलाघवानुसारेण कौमारकामकृताकामकृताभ्यासानभ्यासविषयत्वं ज्ञातव्यम्‡।

सङ्करीकरणमलिनीकरणप्रकीर्णकानां प्रायश्चित्तमभिधायोपपातकानां प्रायश्चित्तं दर्शयति,—

**शिल्पिनं कारुकं शुद्रं स्त्रियं वा यस्तु घातयेत्।**
**प्रजापत्यद्वयं कृत्वा वृषैकादशदक्षिणा ॥१६॥ इति।**

शिल्पी चित्रकारादिः। कारुः सूपकारादिः। वृष एकादशोयासां गवान्ताव्वृषैकादशाः। तद्रूपादक्षिणा वृषैकादशदक्षिणा, देयेति शेषः। अतएव गौतमः शूद्रबधं प्रकृत्याह। "वृषभैकादशाश्च गा-दद्यात्"—इति। मनुरपि,—

"प्रमाप्य शूद्रं षण्मासानेतदेव व्रतं चरेत्§।
वृषभैकादशावाऽपि दद्याद्विप्राय गाः सिताः"—इति॥

क्षत्रियवैश्ययोर्बधे पूर्व्वस्मादधिकं प्रायश्चित्तमाह,—

---

* मण्डूकनकुलैः सह,—इति मु०।
† वृषभ,—इति शा० स०।
‡ तत्र,—इत्यारभ्य एतदन्तोग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।
§ एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत्,—इति मु०।

वैश्यं वा क्षत्रियं वाऽपि निर्दोषं योऽभिघातयेत्* ।
सोऽतिकृच्छ्रद्वयं कुर्य्यात् गोविंशद्दक्षिणां ददत् ॥१७॥

निर्दोषमिति विशेषणात् सदोषवधे न्यूनं प्रायश्चित्तं द्रष्टव्यम् । तच्च चतुर्व्विंशतिमते दर्शितम्,-

"क्षत्रियस्य वधं कृत्वा चरेच्चान्द्रायणत्रयम् ।
वैश्यस्य तु द्वयं कुर्य्यात् शूद्रस्यैन्दवमेव च"—इति ॥

यत्तु संवर्त्तेन ततोऽपि न्यूनं प्रायश्चित्तमुक्तम्,—

"निहत्य क्षत्रियं मोहात् त्रिभिः कृच्छ्रैर्विशुध्यति ।
कुर्य्यादेवानुपूर्व्व्येण त्रीन् कृच्छ्रांस्तु यथाविधि ॥
वैश्यहत्यान्तु सम्प्राप्य कथंचिन्मूढचेतनः ।
कृच्छ्रातिकृच्छ्रौ कुर्व्वीत स नरो वैश्यघातकः ॥
कुर्य्यात् शूद्रवधे विप्रः कृच्छ्रं सान्तपनं तथा"—इति ।

एतत् सदोषस्याकामकृतवधे प्रोक्तमित्यविरोधः । ननु, निर्दोषस्य वधे सदक्षिणातिकृच्छ्रद्वयाधिकं† प्रायश्चित्तं मनुना दर्शितम्,—

"अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
वृषभैकसहस्रा गा दद्यात् शुद्ध्यर्थमात्मनः‡ ॥
त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् ।
वसन् दूरतरे ग्रामे वृक्षमूलनिकेतनः ॥

---

* घातयेत्,—इति मु० ।

† द्वयाधिकं,—इति मु० ।

‡ सुचरितव्रतः,—इति मु० ।

एवमेव चरेदब्दं* प्रायश्चित्तं द्विजोत्तमः।
प्रमाप्य वैश्यं वृत्तस्थं दद्यादेकशतं गवाम्"—इति।

याज्ञवल्क्येनापि,—

"वृषभैकसहस्रा गा दद्यात् क्षत्रवधे पुमान्।
ब्रह्महत्याव्रतं वाऽपि वत्सरत्रितयं चरेत्॥
वैश्यहाऽब्दं चरेच्चैव दद्यादेकशतङ्गवाम्†।
षण्मासान् शूद्रहाऽप्येतद्धेनूर्दद्याद्दशाथ वा"—इति॥

त्रैवार्षिकादप्यधिकं गौतमश्चाह। "राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्य्यं वृषभैकसहस्राश्च गा दद्यात्। वैश्ये त्रैवार्षिकं वृषभैकशताश्च गा दद्यात्। शूद्रे संवत्सरं वृषभैकादशाश्च गा दद्यात्। आत्रेय्याश्चैवम्"—इति। शङ्खलिखितावपि। "पूर्व्ववदमतिपूर्व्वं त्रिषु वर्णेषु प्रमाप्य द्वादशनवषट्संवत्सरान् व्रतान्यादिशेत्। तेषामन्ते गोसहस्रं ततोऽर्द्धं तस्यार्द्धं दद्यात् सर्व्वेषामानुपूर्व्व्येण"—इति। शातातपोऽपि,—

"राजन्यवैश्यशूद्राणां षट् त्रीनेकं चरेत् बधे।
वर्षाणि ब्रह्मचर्य्यन्तु त्रिशुद्ध्यर्थं क्रमेण तु॥
गोदानन्तु व्रतस्यान्ते ब्राह्मणानाञ्च भोजनम्।
कार्य्यं सदक्षिणं सम्यक् विशुद्ध्येत यथाविधि"।

हारीतोऽपि,—

"ब्राह्मणः क्षत्रियं हत्वा षड्वर्षाणि व्रतं चरेत्।

---

* एतदेव चरेदर्द्धं,—इति मु०।

† चरेदेतत् दद्यादेकशतं गवाम्,—इति मु०।

वैश्यं हत्वा चरेदेवं व्रतं त्रैवार्षिकं द्विजः ॥
शूद्रं हत्वा चरेदेकं वृषभैकादशाश्च गाः"—इति ।

उशनापि । "राजन्यबधे षड्वार्षिकं ब्रह्महत्याव्रतं तस्यान्ते वृषभैकसहस्रगोदानं च"—इति । वशिष्ठस्तु षड्वार्षिकादधिकमष्टवार्षिकमाह । "एवं राजन्यं हत्वाऽष्टौ वर्षाणि चरेत् षड् वैश्यं त्रीणि शूद्रम्"—इति । बौधायनस्तु नववार्षिकमाह । "नव सप्त वा राजन्ये तिस्रोवैश्ये संवत्सरं कुर्य्यात् । शूद्रे स्त्रीणां च ब्राह्मणबधाख्यम्"—इति । विष्णुर्द्दादशवार्षिकमाह । "एतन्महाव्रतं ब्राह्मणं हत्वा द्वादश संवत्सरं यागस्थं क्षत्रियं वैश्यं गर्भिणीं वा रजस्वलां चात्रिगोत्राञ्च"—इति । यमः,—

"हत्वा सवणिजं वैश्यं राजन्यमपि दीक्षितम् ।
हत्वा तु ब्रह्महत्यैव तथाऽऽत्रेयीञ्च ब्राह्मणीम्"—इति ॥

शङ्खोऽपि,—

"यागस्थं क्षत्रियं हत्वा वैश्यं हत्वा तु यागगम् ।
एतदेव व्रतं कुर्य्यादात्रेयीविनिघातुकः"—इति ॥

अत्रैतेषु पूर्व्वोदितेषु वचनेषु त्रैवार्षिकषड्वार्षिकाष्टवार्षिक नववार्षिकद्वादशवार्षिकरूपाः पञ्च पक्षाः प्रतिभान्ति । आचार्य्योक्तश्चातिलङ्कृद्वयपक्षएकः । तत्रैवं विषयव्यवस्था । निर्द्दोषः क्षत्रियस्त्रिविधः उत्तमोमध्यमोऽधमश्च । तत्र राज्यपरिपालनादियुक्तः सवनस्थउत्तमः, सवनरहितः परिपालकोमध्यमः, उभयरहितोजातिमात्रक्षत्रियोऽधमः । तत्रैकैकस्य बधे बुद्धिपूर्व्वाबुद्धिपूर्व्वभेदेन द्वे द्वे प्रायश्चित्ते योजनीये । एषु वचनेषु क्वचित् गोदानं श्रूयते

क्वचिन्न। तत्र धनिकाधनिकपुरुषविषयत्वेन व्यवस्था द्रष्टव्या। एतेनैव न्यायेन व्यवस्थितविकल्पमभिप्रेत्य याज्ञवल्क्येन,'ब्रह्महत्याव्रतं वाऽपि'—इत्युक्तम्। वैश्यशूद्रयोरपि उत्तममध्यमाधमभेदेन प्रायश्चित्तव्यवस्था योजनीया। यथा हन्तव्यभेदेन प्रायश्चित्ततारतम्यमुक्तं, तथा हन्तृभेदेऽप्यवगन्तव्यम्। अतएव विष्णुः,—

"विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्।
वैश्येऽर्द्धं पादमेकन्तु शूद्रजातिषु शस्यते"—इति॥

देवलोऽपि,—

"विप्रार्द्धं क्षत्रिये प्रोक्तं तदर्द्धं वैश्यजातिषु*।
तदर्द्धमेव शूद्राणां प्रायश्चित्तं विदुर्ब्बुधाः"—इति॥

एतच्चाकामकृते द्रष्टव्यं, विष्णुप्रोक्तात् न्यूनत्वात्। नन्वाचार्य्येण स्त्रीवधे प्राजापत्यद्वयं वृषभैकादशगोदानसहितं प्रायश्चित्तमुक्तम्। तदयुक्तम्। स्मृत्यन्तरेषु न्यूनाधिकप्रायश्चित्तयोर्दर्शनात्। तत्र मनुः न्यूनं दर्शयति,—

"जीन† कार्मुकवस्तावीन् दद्यादघविशुद्धये‡।
चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः"—इति॥

जीनं चर्ममयमुदकपात्रं, अनवस्थिताः स्वैरिण्यः। याज्ञवल्क्योऽपि,—

"दुर्वृत्ता ब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु॥

* विप्रार्द्धं क्षत्रियस्य स्याद्वैश्यानाञ्चैतदर्द्धकम्,—इति मु०।
† जाल,—इति शा०। एवं परत्र।
‡ पृथगृश्वादिशुद्धये,—इति मु०।

इतिं धनुर्ब्बस्तमविं क्रमाद् दद्याद्विशुद्धय"—इति ।
व्यासोऽपि,—

"चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः ।
शङ्ख-शुक्त्यजमेषांश्च क्रमात् दद्याद्विशुद्धये"—इति ॥

एतानि वचनानि मूलवचनेन न विरुध्यन्ते । सदोषस्त्रीविषयतायास्तेषु स्पष्टत्वात् । मूलवचनन्तु निर्दोषक्षत्रियादिसन्निधितया निर्दोषस्त्रीविषयम् । ननु, निर्दोषस्त्रीवधे अधिकप्रायश्चित्तमाह याज्ञवल्क्यः,—

"अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्"—इति ।

मैवम् । तस्य कामकृतविषयत्वेन व्यवस्थापनीयत्वात् । यत्त्वङ्गिरसा दर्शितम्,—

"आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्य्यादात्रेयीघ्नस्तथैवच"—इति ।

तच्च ब्रह्महत्याव्रतस्याहिताग्निस्त्रीविषयत्वाभिधानात् स्त्रीजातिमात्रविषयेण मूलवचनेन नास्ति विरोधः । वसिष्ठस्तु स्त्रीवधे राजन्यव्रतमाह । "अनात्रेयीं राजन्यहिंसायां राजन्यां वैश्यहिंसायां वैश्यां शूद्रहिंसायां शूद्रां हत्वा सम्वत्सरम्"—इति । अनात्रेयीं हत्वा राजन्यहिंसायां यद्व्रतं तदाचरेदिति योजनीयम् । हारीतोऽपि । "क्षत्रियवद्ब्राह्मणीषु वैश्यवत् क्षत्रियायां शूद्रवत् वैश्यायां शूद्रां हत्वा नव मासान्"—इति । इदं राजन्यव्रतमाहिताग्निपत्नीं गुणवतीं कामतो घातुकस्य द्रष्टव्यम् । प्रमादिकविषये व्यास आह,—

"अकामतः स्त्रियं हत्वा ब्राह्मणीं वैश्यवच्चरेत्।
कामतो द्विगुणं प्रोक्तं प्रदुष्टान्तु न किञ्चन"—इति॥

अनात्रेयीवधे राजन्यव्रतस्याभिहितत्वात् आत्रेयीवधे ब्रह्महत्या-व्रतमिति गम्यते। तथाच यमः,—

"हत्वा सवनितं वैश्यं राजन्यमपि दीक्षितम्।
हत्वा तु ब्रह्महत्यैव तथाऽऽत्रेयीञ्च ब्राह्मणीम्"—इति॥

आत्रेयीलक्षणं च स एवाह,—

"जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मचर्य्यया।
गर्भिणी वाऽथवा या स्यात्तामात्रेयीं विनिर्दिशेत्"—इति।

वसिष्ठोऽपि। "रजस्वलामृतुस्नातामात्रेयीमाहुः। अत्र यद्दिष्टापत्यं भवतीति"। अनृतुमत्या वधे जातिभेदेन भिन्नप्रायश्चित्तमाह प्रचेताः। "अनृतुमतीं ब्राह्मणीं हत्वा कृच्छ्राब्दं षण्मासान् वेति क्षत्रियां हत्वा षण्मासान्मासत्रयं वेति वैश्यां हत्वा मासत्रयं सार्द्ध-मासं वेति शूद्रां हत्वा सार्द्धमासं सार्द्धत्रयोविंशतिदिनानि वेति"। प्रतिलोमपुरुषसंसर्गेणापत्यं लब्धवतीनां वधे ब्रह्मगर्भ आह,—

"प्रतिलोमप्रसूतानां स्त्रीणां मासा वधे स्मृताः।
अन्तरप्रभवानाञ्च सूतादीनां चतुर्दिषट्"—इति॥

ब्राह्मण्या वधे षण्मासाः क्षत्रियायाश्चत्वारः वैश्याया द्वाविति योजनीयम्। सूतवैदेहकचण्डालानां वधेऽप्येवमेव योजना द्रष्टव्या।

इदानीं वैश्यादिवधे प्रकारान्तरेण प्रायश्चित्तमाह,—

**वैश्यं शूद्रक्रियाऽऽसक्तं* विकर्मस्थं द्विजोत्तमम् ।**
**हत्वा चान्द्रायणं तस्य त्रिंशद्गाश्चैव दक्षिणाम् ॥१८॥**

नन्वेतद्वैश्यवधप्रायश्चित्तं व्याहतम् । तथा हि । विट्शब्देनात्र किं सदोषो विवक्ष्यते, उत निर्दोषजातिमात्रः, अथवा गुणवान्? —इति । तत्र प्रथमे न्यूनप्रायश्चित्ताभिधायिभ्यां पूर्वोदाहृताभ्यां चतुर्विंशतिमतसम्वर्त्तवचनाभ्यां व्याहन्यते । द्वितीये निर्दोषजातिमात्रविषयेण समनन्तरपूर्वोक्तमूलवचनेनैव विरोधः । तृतीये तु, "यागस्थक्षत्रियविड्घाती चरेद्ब्रह्महणोव्रतम्"—इत्यनेनैव विरोधः । नैवम् । ईषत्सुवृत्तस्य वैश्यस्यात्र विवक्षितत्वात् । अतएवात्यन्तसुवृत्तेन विहितसकलक्रियाऽऽसक्तेन शूद्रेण साहचर्य्यमविरुद्धम् । द्विजोत्तमशब्देन विप्रः प्रसिद्धः, क्षत्रियेऽपि कथंचिद् वर्त्तयितुं शक्यः । द्विजशब्दाभिधेयं वैश्यमपेक्ष्य तस्योत्तमत्वात् । तत्र क्षत्रियपक्षे, विकर्मणि कस्मिंश्चिद्ब्रह्मघातादौ तिष्ठतीति विकर्मस्थः । विप्रपक्षे तु विकर्मस्थब्रह्मघातादिषु तिष्ठतीति विकर्मस्थः† । एवञ्च सति चतुर्वर्णविषयकमेकं प्रायश्चित्तं न्यायदर्शिनामेतत् सम्पद्यते । हत्वा यो वर्त्तते, तस्येति योजनीयम् । दक्षिणां निर्दिशेदिति शेषः ।

चातुर्वर्ण्यकर्तृके‡ चण्डालवधे क्रमेण प्रायश्चित्तमाह,—

---

* वैश्यं शूद्रं क्रियाऽऽसक्तं,—इति पाठोभवितुं युक्तः । तस्यैव पाठस्य व्याख्यातुरभिप्रेतत्वप्रतीतेः ।

† विप्रपक्षे तु विकर्मस्थः ब्रह्मघातादिषु बहुष्वावृत्तेषु तिष्ठतीति विकर्मस्थः,—इति मु० ।

‡ चतुर्णामपि वर्णानां,—इति मु० ।

चण्डालं हतवान् कश्चिद्ब्राह्मणो यदि कश्चन।
प्राजापत्यं चरेत् कृच्छ्रं गोद्वयं दक्षिणां ददत्॥१९॥
क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण वा।
चण्डालस्य बधे प्राप्ते कृच्छ्रार्द्धेन विशुद्ध्यति॥२०॥

वृत्तिभेदेन ब्राह्मणानां भेदेऽपि न प्रायश्चित्तभेद इति विवक्षितत्वात्, कश्चित्,—इत्युक्तम्। एवं चण्डालेऽपि कश्चनेति विशेषणं योजनीयम्। इतरोमूर्द्धावसिक्तसूतादिः। अङ्गिरास्त्वत्रैव समानप्रायश्चित्तान्तरमाह,—

"अन्त्यजानान्तु गमने भोजने च प्रमापणे।
पराकेण विशुद्धिः स्याद्भगवानङ्गिरोऽब्रवीत्"—इति॥

हारीतोऽपि,—

"चाण्डालवधसंप्राप्तिर्ब्राह्मणेन भवेद्यदि।
कारयेद्द्वादशं कृच्छ्रं तप्तकृच्छ्रं ततो भवेत्"—इति॥

एतच्च ज्ञानपूर्व्वके द्रष्टव्यम्। अज्ञानपूर्व्वके तु चान्द्रायणम्। तदाह लौगाक्षिः,—

"हनने प्रतिलोमानां शूद्रजानां कथं भवेत्।
ज्ञानपूर्व्वे पराकः स्यादज्ञाने चैन्दवं भवेत्"—इति॥

सूतादिबधेऽप्येतदेव। तदाह याज्ञवल्क्यः,—

"चान्द्रायणं चरेत् सर्व्वानपकृष्टान् निहत्य तु"—इति।

कृच्छ्रार्द्धेनेत्यर्द्धग्रहणं पादस्य पादत्रयस्य चोपलक्षणम्। अतएव लौगाक्षिः,—

"सर्व्वमर्द्धं त्रिपादञ्च पादञ्चैव व्रतं चरेत् ।
वर्णक्रमादन्तरजहिंसागमनभोजने"—इति ॥

यदि चण्डालश्वपाकौ चौरौ स्यातां, तदा तयोर्बधे स्वल्पं प्रायश्चित्तमाह,—

**चौरः श्वपाकश्चण्डालो विप्रेणाभिहतो यदि ।**
**अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति ॥२१॥**

यदि विप्रेणाभिहतस्तदा स विप्रः शुद्ध्यतीति योजना । यद्यपि चण्डालबधो नोपपातकेषु परिगणितः, तथापि मनुष्यबधसामान्येन तत्रान्तर्भावमभिप्रेत्य तत्प्रकरणे प्रायश्चित्तमुक्तम् ।

चण्डालप्रसङ्गात् तद्विषयाणां प्रकीर्णकानामपि केषाञ्चित् प्रायश्चित्तमत्राभिधीयते । तत्र संभाषणे प्रायश्चित्तमाह;—

**श्वपाकं वाऽपि चण्डालं विप्रः सम्भाषते यदि ।**
**द्विजसम्भाषणं कुर्य्यात् सावित्रीं तु सकृज्जपेत् ॥२२॥**

द्विजशब्देनानूचानो विप्रो विवक्षितः । नीचविप्रसम्भाषणस्य प्रायश्चित्तरूपत्वासम्भवात् । द्विजसान्निध्याभावे गायत्रीजपः,—इत्यनुकल्पोद्रष्टव्यः । अतएव हारीतो विकल्पमाह,—

"चाण्डालैः सह सम्भाष्य द्विजसम्भाषणात् शुचिः ।
सावित्रीं व्याहरेद्वाऽपि इति धर्म्मो व्यवस्थितः"—इति ॥

सम्भाषमाणो विप्रो यद्युच्छिष्टः स्यात्, तदा त्रिरात्रोपवासमाह सएव,—

"उच्छिष्टः सह सम्भाषेत् त्रिरात्रेणैव शुद्ध्यति"—इति ।

एकशय्यालापे सहमार्गगमने च पृथक् प्रायश्चित्तमाह,—

चण्डालैः सह सुप्तन्तु त्रिरात्रमुपवासयेत्।
चण्डालैकपथं गत्वा गायत्रीस्मरणात् शुचिः॥ २३॥

स्पष्टोऽर्थः।

दर्शनस्पर्शनयोः पृथक् प्रायश्चित्तमाह,—

चण्डालदर्शने सद्य आदित्यमवलोकयेत्।
चण्डालस्पर्शने चैव सचैलं स्नानमाचरेत्॥ २४॥

एतदेवापस्तम्बोऽप्याह। "चण्डालस्पर्शने सम्भाषायां दर्शने च दोषः। तत्र प्रायश्चित्तमवगाहनमपामुपस्पर्शनं, सम्भाषायां ब्राह्मणसम्भाषा, दर्शने ज्योतिषां दर्शनम्"—इति। सुमन्तुरपि। "चण्डालदर्शने सूर्य्यदर्शनं सम्भाषणे ब्राह्मणाभिव्याहारः संस्पर्शने सचैलस्नानमाचरेत्"—इति।

देवलोऽपि,—

"श्वपाकं पतितं व्यङ्गमुन्मत्तं शवदाहकम्।
सूतिकं* सूतिकां नारीं रजसा च परिप्लुताम्॥
श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः।
सचैलं सशिराः† स्नात्वा तदानीमेव शुध्यति"—इति॥

---

* सूतकीं,—इति मु०।

† सचैलमपि वा,—इति सा० स०।

अवस्थाविशेषेण स्पर्शने विशेषमाह शातातपः,—

"येन केनचिदभ्यक्तः चण्डालं संस्पृशेद्यदि ।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥
अशुद्धान् स्वयमप्येतानशुद्धश्च यदि स्पृशेत् ।
विशुध्यत्युपवासेन त्रिरात्रेण ततः शुचिः ॥
उच्छिष्टः संस्पृशेद्विप्रो मद्यं शूद्रं तथा शुचिः ।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति"—इति ॥

यत्तु देवलेनोक्तम्,—

"अशुद्धान् स्वयमप्येतानशुद्धश्च यदि स्पृशेत् ।
विशुध्यत्युपवासेन त्रिरात्रेण ततः शुचिः ।
उच्छिष्टं संस्पृशेद्विप्रः पुनः कृच्छ्रेन शुध्यति"—इति ॥

तत् सहोपवेशनशयनादिना चिरस्पर्शविषयम् । यदि स्पृष्टो-मूत्रादिकं कुर्य्यात् तदा त्रिरात्रोपवासः, भुक्तोच्छिष्टो यदि स्पृशेत् तदा षड्रात्रोपवासः,—इति ॥ तदाह शातातपः,—

"चण्डालैः श्वपचैः स्पृष्टो विण्मूत्रे कुरुते द्विजः ।
त्रिरात्रं तत्र कुर्व्वीत भुक्तोच्छिष्टः षडाचरेत्"—इति ॥

चण्डालवत् चित्यादिस्पर्शेऽपि सचेलं स्नानम् । तदुक्तं चतुर्विं-शतिमते,—

"चितिञ्च चितिकाष्ठञ्च यूपं चण्डालमेव च ।
स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत्"—इति ॥

चण्डालस्वामिकवाप्युदकपाने ज्ञानाज्ञानकृते पृथक् प्रायश्चित्त-माह,—

चण्डालखातवापीषु पीत्वा सलिलमग्रजः ।
अज्ञानाच्चैकभक्तेन त्वहोरात्रेण शुध्यति ॥ २५ ॥

अज्ञानकृतस्यैकभक्तं, ज्ञानकृतस्य तूपवासः । अतएवापस्तम्बः चण्डालवापीं प्रकृत्याह,—

"तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपिवा ।
अकामात् नक्तभोजी स्यादहोरात्रेण कामतः"—इति ॥

तथैवाभ्यासविषयमभिप्रेत्यापस्तम्ब आह,—

"अन्त्यजैः खानिताः कूपास्तड़ागावाप्यएवच ।
एषु स्नात्वा च पीत्वा च प्राजापत्येन शुध्यति"—इति ॥

यत्तु तेनैवोक्तम्,—

"प्रपास्वरण्ये घटके च सौरे
द्रोण्यां जलं कोशविनिःसृतं वा ।
श्वपाकचण्डालपरिग्रहेषु
पीत्वा जलं पञ्चगव्येन शुध्येत्"—इति ॥

तदशक्तविषयम् ।

चण्डालभाण्डस्पृष्टस्य कूपस्थजलस्य पानेऽधिकं प्रायश्चित्तमाह,—

चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्रात् शुद्धिमाप्नुयात् ॥ २६ ॥

चण्डालभाण्डेनोदकं यस्मात् कूपादानयति, तत्कूपस्थोदकं पीत्वा गोमूत्रपक्वयवपिष्टादिकं दिनत्रयमाहारत्वेन स्वीकुर्य्यात्

तदीयभाण्डस्थोदकपाने जीर्णाजीर्णभेदेन प्रायश्चित्तमाह,—

**चण्डालघटसंस्थन्तु यत्तोयं पिबति द्विजः ।**
**तत्क्षणात् क्षिपते यस्तु प्रजापत्यं समाचरेत् ॥ २७ ॥**
**यदि न क्षिपते तोयं शरीरे यस्य जीर्य्यति ।**
**प्रजापत्यं न दातव्यं कृच्छ्रं सान्तपनं चरेत् ॥ २८ ॥**

प्रथममज्ञानात् पीत्वा पश्चात्तदानीमेव विज्ञाय यदि वमेत् तदा प्राजापत्यं तज्जीर्णे सान्तपनं कृच्छ्रं परिषदा दातव्यं, न तु प्राजापत्यम् । एतस्याज्ञानविषयत्वमङ्गिरादर्शयति,—

"चण्डालपरिगृहीतमज्ञानादुदकं पिबेत् ।
तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यशः ॥
यस्तु चण्डालसंस्पृष्टं पिबेत् किञ्चिदकामतः ।
स तु सान्तपनं कृच्छ्रं चरेत् शुद्ध्यर्थमात्मनः"—इति ।

यत्तु देवलेनोक्तम्,—

"यस्तु चाण्डालभाण्डस्थमज्ञानादुदकं पिबेत् ।
स तु त्र्यहेण शुद्ध्येत्तु शूद्रस्त्वेकेन शुद्ध्यति"—इति ॥

तदापद्विषयम् । बुद्धिपूर्व्वकं तत्पाने वर्णभेदेन प्रायश्चित्तमाह,—

**चरेत् सान्तपनं विप्रः प्राजापत्यमनन्तरः ।**
**तदर्द्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ २९ ॥**

अनन्तरः क्षत्रियः । एतस्य बुद्धिपूर्व्वविषयत्वमापस्तम्बआह,—

"चण्डालभाण्डकूपस्थं जलं यः ज्ञानतः पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत् ॥

चरेत् सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः।

तदर्द्धं तु चरेद्वैश्यः शूद्रे पादं विनिर्दिशेत्"—इति॥

चण्डालभाण्डोदकपानप्रसङ्गादितरान्त्यजभाण्डोदकादिपानेऽपि प्रायश्चित्तमाह,—

**भाण्डस्थमन्त्यजानान्तु जलं दधि पयः पिवेत्।**
**ब्राह्मणः क्षत्रियोवैश्यः शूद्रश्चैव प्रमादतः॥ ३०॥**
**ब्रह्मकूर्चोपवासेन द्विजातीनान्तु निष्कृतिः।**
**शूद्रस्य चोपवासेन तथा दानेन शक्तितः॥ ३१॥**

अन्त्यजारजकादयः।

"रजकश्चर्मकारश्च नटोवुरुड़एवच।

कैवर्त्तमेदभिल्लाश्च सप्त ते चान्त्यजाः स्मृताः"—इति

स्मरणात्। ब्रह्मकूर्चमाचार्य्यएवोपरिष्टाद्वक्ष्यति। तत्सहित-उपवासः त्रैवर्णिकस्य। तद्रहितस्य चतुर्थस्य ब्रह्मकूर्चस्थाने यथाशक्ति दानं द्रष्टव्यम्। आमादिषु भाण्डान्तरं प्राप्तेषु नास्ति कश्चिद्दोषः। तथा चतुर्विंशतिमते,—

"आममांसं घृतं चौद्रं स्नेहाश्च फलसम्भवाः।

अन्त्यभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः"—इति॥

महत्सु तु तटाकादिषु चण्डालादिसम्बन्धेऽपि नास्ति कश्चिद्दोषः. अल्पेषु तु कूपवत् न्यायः। तदाह विष्णुः,—

"जलाशयेष्वथाल्पेषु स्थावरेषु महीतले।

कूपवत्कथिता शुद्धिर्महत्सु तु न दूषणम्"—इति॥

अज्ञानपूर्व्वकचण्डालान्नभोजने प्रायश्चित्तमाह,—

भुङ्क्तेऽज्ञानात् द्विजश्रेष्ठश्चण्डालान्नं कथञ्चन ।
गोमूत्रयावकाहारो दशरात्रेण शुध्यति ॥ ३२ ॥

स्पष्टम् ॥

तत्प्रमाणमाह,—

एकैकं ग्रासमश्नीयाद् गोमूत्रं यावकस्य च ।
दशाहं नियमस्थस्य व्रतं तत्र विनिर्द्दिशेत् ॥ ३३ ॥

गोमूत्रेण पाचितं यद्यवमयमन्नं, तस्य ग्रासमेकैकमेकैकस्मिन्दिने भुञ्जीत। नियमः स्नानादिः। तदाह याज्ञवल्क्यः,—

"स्नानमौनोपवासेज्याखाध्यायोपस्थनिग्रहः ।
नियमा गुरुशुश्रूषाशौचाक्रोधाप्रमादता"—इति ॥

ईदृशनियमनिष्ठस्य तद्यावकाहारव्रतं निर्द्दिशेत् । बुद्धिपूर्व्वके त्वङ्गिरा आह,—

"अन्त्यावसायिनामन्नमश्नीयाद्यस्तु कामतः ।
स तु चान्द्रायणं कुर्य्यात् तप्तकृच्छ्रमथापि वा"—इति ॥

अन्त्यावसायिनश्चण्डालादयः। तांश्च स एवाह,—

"चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवौ चैव सर्व्वे ह्यन्त्यावसायिनः"—इति ॥

आमपक्वयोश्चण्डालान्नयोर्व्रतभेदमाह　विष्णुः ।　"चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराकः"—इति। अत्र मूलवचनोक्तगोमूत्रयावकाहारः सिद्धान्नविषयो भविष्यति। यावकसहितस्य

द्दशरात्रोपवासस्य पराकसमत्वात्। यत्तु हारीतेनोक्तम्,—

"चाण्डालान्नं प्रमादेन यदि भुञ्जीत यो द्विजः।
ततश्चान्द्रायणं कुर्य्यात् मासमेकं व्रतं चरेत्॥
शूद्रो वाऽप्यर्द्धमासं वै भुक्ता चैव जितेन्द्रियः।
त्रिरात्रमुपवासञ्च ब्राह्मणांस्तर्पयेत् शुचिः"—इति॥

तद्गोमूत्रयावकाहारासक्तविषयम्। बुद्धिपूर्व्वकस्य चिरकालानुवृत्तौ मनुनोक्तं द्रष्टव्यम्,—

"चण्डालान्त्यस्त्रियो गत्वा भुक्ता च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति"—इति॥

अत्र चीर्णव्रतस्य पुनरुपनयनं कूर्मपुराणे दर्शितम्,—

"चाण्डालान्नं द्विजो भुक्ता सम्यक् चान्द्रायणं चरेत्।
बुद्धिपूर्व्वं तु कृच्छ्राब्दं पुनः संस्कारमेव च"—इति॥

वसिष्ठोऽपि। "चण्डालपतितान्नभोजने पुनरुपनयनम्"—इति।

अथ कञ्चित्कालमेकस्मिन् गृहे चण्डालेन सह व्यवहर्त्तुरविज्ञातस्तु चण्डाल इत्यादिना, भूमिदोषो न विद्यते इत्यन्तेन, श्लोकसमूहेन प्रायश्चित्तमाह,—

**अविज्ञातस्तु चण्डालो यत्र* वेश्मनि तिष्ठति।**
**विज्ञाते तूपसन्नस्य द्विजाः कुर्व्वन्त्यनुग्रहम्॥ ३४॥**

अनेन श्लोकेन परिषदुपसत्तिर्विहिता। यद्यपि सर्व्वेषु प्रायश्चित्तेषु परिषदुपसत्तिः समाना, तथापि प्रकटपापेष्वेव सा न तु

* यस्य,—इति मु०।

रहस्येषु । अत्र तु रहस्यमपि प्रकटीकर्त्तव्यमित्यभिप्रेत्य प्रातिस्विकमुपपत्त्यभिधानम् । अनुग्रहस्थ्वरितव्यप्रायश्चित्तविशेषोपदेशः ।

उपसदनयोग्यं परिषद्विशेषं दर्शयितुं द्विजान् विशिनष्टि,—

**मुनिवक्त्रोद्गतान् धर्मान् गायन्तो वेदपारगाः ।**
**पतन्तमुद्धरेयुस्तं धर्मज्ञाः पापसङ्करात् ॥ ३५ ॥**

वक्त्रोद्गतान् गायन्तइत्यनेन धर्मशास्त्रमुच्चार्य्य प्रायश्चित्तं वदेयुरित्युक्तं भवति। युक्तं चैतत् । तथा सति, प्रामादिकान्यथाऽभिधानशङ्काऽनुदयात् । यद्यपि चण्डालसहवासएकमेव पापं, तथापि तस्मिन् सत्यनुष्ठितानां नित्यनैमित्तिकानां बहूनां वैकल्यसम्भवमभिप्रेत्य पापसङ्करादित्युक्तम् ॥ परिषदाऽभिधेयं व्रतविशेषं दर्शयति,—

**दध्ना च सर्पिषा चैव क्षीरगोमूत्रयावकम् ।**
**भुञ्जीत सह भृत्यैश्च त्रिसन्ध्यमवगाहनम् ॥ ३६ ॥**

दध्ना सर्पिषा च संयुक्तमिति शेषः। गृहस्वामिवद्गृहवासिनोबालवृद्धादयः सर्व्वेऽपि यावकभोजनत्रिसन्ध्यावगाहने कुर्य्युः ॥

तत्र दध्यादीनां सर्व्वेषां समाहारप्रसक्तौ विभजते,—

**त्र्यहं भुञ्जीत दध्ना च त्र्यहं भुञ्जीत सर्पिषा ।**
**त्र्यहं क्षीरेण भुञ्जीत एकैकेन दिनत्रयम् ॥ ३७ ॥**

दध्ना संयुक्तं गोमूत्रयावकं दिनत्रयं भुञ्जीत। घृतक्षीरयोरप्येवमेव योज्यम्। तथा सति, नव दिनानि सम्पद्यन्ते। पुनरप्येकैकेन

दध्यादिना संयुक्तमेकैकस्मिन् दिने भुञ्जीतेति दिनत्रयं सम्पद्यते। तत् सर्व्वं मिलित्वा द्वादशरात्रं भवति।

यावके वर्ज्यमाह,—

**भावदुष्टं न भुञ्जीत नोच्छिष्टं कृमिदूषितम्।**

भावेन दुष्टं भावदुष्टम्। यस्मिन्नवलोकिते मत्यत्यन्तमादृश्ये तस्मिन्नमेध्यादिभावः सहसा बुद्धिमारोहेत्, तादृशं न भोक्तव्यम्॥

दध्यादीनां त्रयाणां परिमाणमाह,—

**दधिक्षीरस्य त्रिपलं पलमेकं घृतस्य तु॥ ३८॥**

दधि क्षीरञ्चेति दधिक्षीरं, तयोः प्रत्येकं पलत्रयं[1] परिमाणं, यावकस्य परिमाणं ग्रासमात्रं पूर्व्वोक्तन्यायेन वेदितव्यम्।

चेतनानां शुद्धिहेतुमभिधायाचेतनानामप्याह,—

**भस्मना तु भवेत् शुद्धिरुभयोस्ताम्रकांस्ययोः।**
**जलशौचेन वस्त्राणां परित्यागेन मृण्मये॥ ३९॥**

मृण्मयभाण्डस्य परित्याग एव कर्त्तव्यः, शुद्धिस्तु नास्तीत्यभिप्रायः।

मृतस्य दाहः कर्त्तव्य इत्याह,—

---

(१) पलपरिमाणन्तु,—"पलन्तु लौकिकैर्मानैः साष्टरत्तिद्विमाषकम्। तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम्"—इत्युक्तलक्षणं ग्राह्यम्। द्वादशभी रत्तिकाभिरेको लौकिको माषको भवति, अष्टभिश्च तथाविधैर्माषकैरेकं तोलकं भवतीति ज्ञेयम्।

**कुसुम्भकुड्यकार्पासलवणं तैलसर्पिषी ।**
**द्वारे कृत्वा तु धान्यानि दद्याद्वेश्मनि पावकम् ॥ ४० ॥**

कुसुम्भं तैलसाधनधान्यम् । कुसुम्भादीनि धान्यान्यतिदाह्यत्वेन द्वारि स्थापनीयानि ।

गृहदाहाद्यनन्तरं कर्त्तव्यमाह,—

**एवं शुद्धस्ततः पश्चात् कुर्यात् ब्राह्मणतर्पणम् ।**
**त्रिंशतं गोवृषञ्चैव* दद्याद्विप्रेषु दक्षिणाम् ॥ ४१ ॥**

भाण्डवद्भूमेर्न परित्यागः, किन्तु लेपनादिकं कर्त्तव्यमित्याह,—

**पुनर्लेपनखातेन होमजप्येन शुद्ध्यति ।**
**आधारेण च विप्राणां भूमिदोषो न विद्यते ॥ ४२ ॥**

लेपनं कुड्यस्य खननं स्थलस्येति यथायोगमवगन्तव्यम् । तदुभयं कृत्वा ब्राह्मणान् प्रवेश्य शान्तिकजपहोमान्† कुर्य्यात् । तावता भूमिः शुद्ध्यति । न तु भाण्डवदत्यन्तदोषो भूमेर्विद्यते । यदा पुनर्दीर्घकालञ्चण्डालोनिवसेत्, तदा हारीतोक्तं द्रष्टव्यम्,—

"चण्डालैः सह संवासं दीर्घकालमकामिकम्‡ ।
विज्ञानात् मृण्मयं पात्रं सर्व्वं त्यजति तद्गृहे ॥
बालकृच्छ्रं ततः कुर्य्यात् तप्तकृच्छ्रं तथैव च ।
ब्राह्मणांस्तर्पयेत् पश्चात् ब्रह्मकूर्चेन शुद्ध्यति"—इति ॥

---

* त्रिंशद्वा वृषभैकञ्च,—इति मु० ।
† शान्तिकरौ जपहोमौ,—इति मु० ।
‡ संवासोदीर्घकालमकामिकः,—इति शा० ।

तत्र च गोशतं दक्षिणा। तदाह च्यवनः। "चण्डालसङ्करे स्वभवनदहनं सर्व्वमृण्मयभाण्डभेदनं दारवाणां तु तक्षणं शङ्ख-शुक्तिसुवर्णरजतचेलानामद्भिः प्रक्षालनं कांस्यताम्रपात्राणामाकरेण* शुद्धिः सौवीरपयोदधितक्राणां परित्यागो गोमूत्रयावकाहारो मासं क्षपयेत्। बालवृद्धस्त्रीणामर्द्धं प्रायश्चित्तम्। आषोडशाद्बालाः सप्तत्यूर्द्धगता-वृद्धाः। चीर्णे प्रायश्चित्ते ब्राह्मणभोजनं गोशतं दद्यात्। अभावे सर्व्वस्वम्"—इति।

गृहव्यतिरिक्तचेत्रारामग्रामान्तरयात्रादाववज्ञानेन चण्डालसङ्करे प्रायश्चित्तमाह,—

**चण्डालैः सह सम्पर्कं मासं मासार्द्धमेव वा।**
**गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति॥ ४३॥**

मासश्च अर्द्धमासश्च मासार्द्धं, तेन विशुद्ध्यति। माससङ्करे मासव्रतेन शुद्ध्यति, अर्द्धमाससङ्करे अर्द्धमासव्रतेन विशुद्धिरित्यर्थः। सम्पर्कं, करोति चेदिति शेषः। चण्डालशब्देन पुक्कसादयोऽप्युपलक्ष्यन्ते†। अतएव संवर्त्तः,—

"चण्डालैः सङ्करे विप्रः श्वपाकैः पुक्कसैरपि।
गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति"—इति॥

उक्तकालाधिककालसङ्करे हारीतोक्तं द्रष्टव्यम्,—

"चण्डालैः सह सम्पर्के‡ प्राजापत्येन शुद्ध्यति।

---

* माकरे,—इति शा०।
† पुक्कसस्थाने, पुल्कस,—इति मु०। एवं सर्व्वत्र।
‡ संयोगे,—इति स० शा०।

विप्रान् दश वरान् कृत्वा तैरनुज्ञाप्य शासनात् ॥
आ कण्ठस्य प्रमाणन्तु कुर्य्याद्गोमयकर्द्दमम्।
तत्र स्थित्वा त्वहोरात्रं वायुभक्षः समाहितः ॥
बालकृच्छ्रं ततः कुर्य्यात् गोष्ठे वसति सर्वदा ।
सकेशवपनं कुर्य्यात् परमां शुद्धिमाप्नुयात्"—इति ।

रजक्यादिभिः सह संवासे चण्डालसहसंवासात् न्यूनं प्रायश्चित्तमाह,—

**रजकी चर्मकारी च लुब्धकी वेणुजीविनी।**
**चातुर्व्वर्ण्यस्य च गृहे त्वविज्ञाता तु तिष्ठति ॥ ४४ ॥**
**ज्ञात्वा तु निष्कृतिं कुर्य्यात् पूर्व्वोक्तस्यार्द्धमेव तु ।**
**गृहदाहं न कुर्व्वीत शेषं सर्व्वं समाचरेत्* ॥ ४५ ॥**

दध्ना च सर्पिषा चेत्यादिकं पूर्वोक्तम् ।

इदानीं चण्डालस्य सकृद्गृहप्रवेशे कर्त्तव्यां शुद्धिमाह,—

**गृहस्याभ्यन्तरं गच्छेत् चाण्डालो यदि कस्यचित् ।**
**तमागाराद्विनिर्वास्य मृद्भाण्डन्तु विसर्ज्जयेत् ॥४६॥**
**रसपूर्णन्तु मृद्भाण्डं† न त्यजेत्तु कदाचन।**
**गोमयेन तु संमिश्रैर्जलैः प्रोक्ष्येद्गृहं तथा‡ ॥४७॥इति।**

कस्यचिति ब्राह्मणादीनामन्यतमस्य । प्रोक्ष्याजाश्चां वा गृहं प्रवेशयेत् । तदाह हारीतः,—

---

* सर्व्वञ्च कारयेत्,—इति शा० ।
† मृद्भाण्डं,—इति मु० ।
‡ प्रक्षालयेद्गृहम्,—इति मु० ।

"गृहस्याभ्यन्तरे यस्य चण्डालो यदि गच्छति।
पार्थिवानां हि पात्राणां त्यागः सद्यो हि सर्वशः॥
अनष्टरसभाण्डानां* गृहवन्मन्यते यथा।
अजस्य गोः प्रवेशाद्धि शुध्यते नात्र संशयः"—इति॥

अनष्टरसानि रसपूर्णभाण्डानि। यः पुनः गृहान्तरवासी सन्नपि चण्डालप्रवेशवति गृहे कदाचिद्भुङ्क्ते, भुक्तवतस्तस्यापि गृहे योऽन्यो-गृहान्तरवासी समागत्य भुङ्क्ते, तयोरुभयोः प्रायश्चित्तमापस्तम्बो-दर्शयति,—

"अविज्ञातस्य चण्डालस्तिष्ठते यस्य वेश्मनि।
स विज्ञातस्तु कालेन तत्र कार्य्यं विशोधनम्॥
प्राजापत्यन्तु शूद्राणान्तेषां तदनुसारतः।†
यैस्तत्र भुक्तं पक्वान्नं कृच्छ्रार्द्धन्तेषु दापयेत्॥
यैस्तेषामपि निर्भुक्तं‡ पादमेकं विधीयते।
कूपैकपानसृष्टाश्च स्पर्शसम्पर्कदूषितः॥
नरो ह्येकोपवासेन पञ्चगव्येन शुध्यति।
बालापत्या तथा रोगी गर्भिणी या तु दूषिता॥
तेषां नक्तं प्रदातव्यं बालानां प्रहरद्वयम्" इति।

अथ कृम्युपहतदेहस्य वर्णभेदेन भिन्नां शुद्धिमाह,—

---

* अनष्टव्यरसं भाण्डं,—इति शा०।
† विधानतः,—इति स० शा०।
‡ तेषामपि च यद्भुक्तं,—इति मु०।

ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे ।
कृमिरुत्पद्यते तस्य* प्रायश्चित्तं कथं भवेत्॥ ४८ ॥
गवां मूत्रपुरीषेण दधिक्षीरेण सर्पिषा ।
त्र्यहं स्नात्वा च पीत्वा च कृमिदुष्टः शुचिर्भवेत् ॥४९॥
क्षत्त्रियोऽपि सुवर्णस्य पञ्च माषान् प्रदापयेत्† ।
गोदक्षिणान्तु वैश्यस्याप्युपवासं विनिर्दिशेत् ॥५०॥
शूद्राणान्नोपवासः स्यात् शूद्रोदानेन शुद्ध्यति ।

यद्यपि कृम्युत्पत्तिर्विहितातिक्रमप्रतिषिद्धाचरणरूपा न भवति, तथापि जन्मान्तरसञ्चितदुरितफलरूपायास्तस्याविहितकर्मानुष्ठानाधिकारविरोध्यशुद्ध्यापादकत्वात् तन्निवृत्तयेऽवश्यं शुद्धिः कर्त्तव्या। सा च शुद्धिः प्रायश्चित्तसमानत्वात् प्रायश्चित्तप्रकरणे वक्तुमुचिता। प्रायश्चित्तसाम्यमभिप्रेत्य प्रश्नवाक्ये प्रायश्चित्तशब्देन व्यवहारः। मुख्यप्रायश्चित्ताभावं द्योतयितुं सन्देहद्योतकः कथंशब्दः प्रयुक्तः। तत्र ब्राह्मणस्य दिनत्रयं पञ्चगव्यस्नानपाने। क्षत्त्रियस्य पञ्चमाषपरिमितसुवर्णदानं च। पञ्चकृष्णलात्मको माषः। तदाह याज्ञवल्क्यः,—

"जालसूर्य्यमरीचिस्थं त्रसरेणूरजः स्मृतम्(१)।

* यस्य,—इति मु०।
† प्रदाय तु,—इति शा०।

(१) जालं गवाक्षः। तद्गतसूर्य्यरश्मिषु रजतचूर्णनिभं यत् दृश्यते स त्रसरेणुरित्यर्थः।

तेऽष्टौ लिचा तु तास्तिस्रो राजसर्षप उच्यते॥
गौरस्तु ते त्रयः षट् ते यवमध्यस्तु* ते त्रयः[(१)]।
कृष्णलः पञ्च ते माषः ते सुवर्णस्तु षोडश"—इति॥

वैश्यस्य गोदानोपवासौ। शूद्रस्य गोदानमेव। एतच्च नाभेरधोभागे द्रष्टव्यम्। उपरिभागे तु मनुराह,—

"ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत्॥
गवां मूत्रपुरीषेण त्रिसन्ध्यं स्नानमाचरेत्।
त्रिरात्रं पञ्चगव्याशी त्वधोनाभ्यां† विशुद्ध्यति॥
नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते कृमिः।
षड्रात्रन्तु तदा प्रोक्तं‡ प्राजापत्यं शिरोव्रणे"—इति॥

यत्तु च्यवनेनोक्तं, "कृमिदर्शने सान्तपनं वृषभो दक्षिणा"—इति। तद्युगपत् बहुप्रदेशविषयम्।

चर्य्यमाणे प्रायश्चित्ते न्यूनातिरेकदोषोपशान्तिर्विप्रवाक्याद्भवतीत्याह,—

---

* यवोमध्यस्तु,—इति शा०।
† नाभ्यां,—इति मु०।
‡ स्नानं,—इति शा०।

---

(१) गौरो गौरसर्षपः। षड्भिर्गौरसर्षपैरेकोयवमध्यः, त्रिभिर्यवमध्यै-रेकः कृष्णलइत्यर्थः।

**अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ॥ ५१ ॥**
**प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलं हि तत् ।**

विप्रवाक्यस्य छिद्रपरिपूरकत्वं सम्भावयितुमग्निष्टोमसाम्येन तद्वाक्यं प्रशस्यते । अन्वयव्यतिरेकाभ्यां विप्रवाक्यस्य प्रयोजनकत्व*माहापस्तम्बः,—

"पूर्णेऽपि कालनियमे न शुद्धिर्ब्राह्मणैर्विना ।
अपूर्णेष्वपि कालेषु शोधयन्ति द्विजोत्तमाः"—इति ॥

महाफलसाधनेषु यज्ञादिष्वपि छिद्रपूर्त्तिर्विप्रवाक्यसाध्या, किमुतास्मिन् प्रायश्चित्तव्रते इत्यभिप्रेत्याह,—

**जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ॥ ५२ ॥**
**सर्वं भवति निश्छिद्रं ब्राह्मणैरुपपादितम् ।**

यद्यपि विप्रवाक्यस्य समस्तव्रतशेषत्वादिदं प्रायश्चित्तप्रकरणान्ते वक्तुमुचितम्, तथापि द्रव्यशुद्धिप्रकरणस्यात्रापि स्वीकृतत्वादवान्तरप्रायश्चित्तप्रकरणस्य समाप्ताविदमुक्तमित्यविरोधः ।

आपत्काले स्वयं व्रतं कर्त्तुमशक्तश्चेत् तदा ब्राह्मणैः कारयेदित्याह,—

**व्याधिव्यसनिनि श्रान्ते दुर्भिक्षे डामरे तथा ॥ ५३ ॥**
**उपवासो व्रतं होमो द्विजसम्पादितानि वै† ।**

---

* प्रयोजकत्व,—इति मु० । मम तु 'प्रयोजनवत्त्व'—इति पाठः प्रतिभाति ।

† वा,—इति सो० आ० ।

व्याधिना व्यसनी राजयक्ष्मादिप्रबलरोगग्रस्तः। श्रान्त आहवाध्व* गमनादिना। तयोरुभयोः व्रतं पित्रादि† रनुतिष्ठेत्। तदाह आपस्तम्बः,—

"अशक्तस्यापि बालस्य पिता वा यदि वा गुरुः।
तद्व्रतं तस्य गृह्णीयात् ततो मुच्येत किल्बिषात्"—इति॥

दुर्भिक्षं दैविकोदोषः। डामरं परराजाद्युपप्लवः‡। तत्रोभयत्रावश्यकबहुकुटुम्बभरणाद्यवरुद्धः तदनवरुद्धेन सख्यादिना व्रतं कारयेत्।

अत्यन्तापदमभिप्रेत्य पक्षान्तरमाह,—

**अथवा ब्राह्मणास्तुष्टाः सर्व्वं§ कुर्व्वन्त्यनुग्रहम्॥ ५४॥**
**सर्व्वान् कामानवाप्नोति द्विजसम्पादितैरिह।**

ब्राह्मणा वेदपारगामहान्तः पूर्व्वकृतोपकारादिना तुष्टाः सन्तोऽस्यामापदि निर्द्दोषस्त्वमित्यनुगृह्णन्ति तदा तावतैवास्य विशुद्धिः। अनुष्ठानमन्तरेणापि महापुरुषवचनमात्रसम्पादितैराशीर्व्विशेषैरशेषकामप्राप्तिर्भवति, तत्र पापक्षयोभवतीति कोविस्मयः। महापुरुषस्य गुरुपित्रादेः सङ्कल्पमात्रादेव कामप्राप्तिराथर्व्वणे श्रूयते,—

---

* दूराध्व,—इति मु०।

† पुत्रादि,—इति शा०।

‡ परचात्याद्युपप्लवः,—इति शा०।

§ सर्व्वं,—इति शा०।

"यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान्।
तं तं लोकं जयते तांश्च कामान्
तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः"—इति।

अन्वयव्यतिरेकाभ्यां महदनुग्रहस्य विषयं दर्शयति,—

**दुर्ब्बलेऽनुग्रहः प्रोक्तस्तथा वै बालवृद्धयोः ॥ ५५ ॥**
**ततोऽन्यथा भवेद्दोषः तस्मान्नानुग्रहः स्मृतः ।**

दुर्बलः पूर्वोक्तव्याधिग्रस्तादिः । दुर्बलबालवृद्धानामनुग्रहणे योग्यामहान्तोदेवलेन दर्शिताः,—

"प्रायश्चित्तं यथोद्दिष्टमशक्यं दुर्ब्बलादिभिः ।
दृश्यतेऽनुग्रहस्तेषां लोकसंग्रहकारणात् ॥
एकोनार्हति तत्कर्त्तुमज्ञोवा नाप्यनुग्रहम् ।
धर्मज्ञा बहवो विप्राः कर्त्तुमर्हन्त्यनुग्रहम्"—इति ॥

अतोऽन्यथा प्रबलस्यानुग्रहे प्रत्यवायः। तस्मात्तान्नानुगृह्णीयात्। प्रबलं युवानमनुगृह्णतः प्रत्यवायो विशदयति,—

**स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा ॥ ५६ ॥**
**कुर्व्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति ।**

स्नेहादनुग्रहः पुत्रमित्रादिषु, लोभाद्धनिकेषु, भयाद्राजादिषु, अज्ञानाद्दुर्बलेष्वनुग्रह इति। शास्त्रमज्ञात्वा पण्डितं मन्यतया यस्मिन् कस्मिंश्चिदनुग्रहः। यद्यपि परकीयं पापमितरस्मिन संक्रा-

मति(१), तथापि परीक्षामकृत्वा प्रायश्चित्तं विधातुरयथाशास्त्रानुष्ठाननिमित्तं पापान्तरमुदेतीत्यभिप्रेत्य तत्पापं तेषु गच्छतीत्युक्तमिति(२)। एवं प्रायश्चित्ताधिकारिणं सम्यक् परीक्ष्य प्रायश्चित्तं विधेयम्। तदाह देवलः,—

"कर्त्तारं देशकालौ च प्रमाणं कारणं क्रियाम्।
अवेक्ष्य च बलञ्चैव प्रायश्चित्तं विधीयते"—इति॥

बौधायनोऽपि,—

"शरीरं बलमायुश्च वयः कालं च कर्म च।
परीक्ष्य धर्मविद्बुद्ध्या* प्रायश्चित्तं प्रकल्पयेत्"—इति॥

अनुग्रहमनर्हतः प्रबलस्यानुग्रहे यथा प्रत्यवायः, तथाऽनुग्रहयोग्यस्य दुर्ब्बलस्य नियमविधानेऽपि प्रत्यवायइत्याह,—

**शरीरस्यात्यये प्राप्ते वदन्ति नियमन्तु ये॥५७॥**
**महत्कार्य्योपरोधेन न स्वस्थस्य कदाचन।**

शरीरस्यात्यये मुमूर्षाभूम्यां शयनं, तस्मिन् प्राप्ते सति, तेन कर्त्तुमशक्यं प्रायश्चित्तव्रतादिनियमं† कर्त्तव्यत्वेन ये वदन्ति, तेषु

* धर्म्मविदुषा,—इति स० शा०।

† प्राजापत्यव्रतादिनियमं,—इति मु०।

(१) समवेतस्य पापस्य विद्यमानस्याश्रयत्यागेनापराश्रयप्राप्तेरसम्भवादिति भावः।

(२) तथाच, तत्पापं तत्सदृशपापान्तरमित्यर्थः।

तत्पापं गच्छतीति पूर्व्ववाक्यादनुषज्यते। तत्र हेतुः। महत्कार्य्यो-परोधेनेति। महतां देवतोपासकानां योगिनां कार्य्यं महत्कार्य्य-मन्तकाले देवतास्मरणादि, तस्योपरोधः प्रतिबन्धः। मुमूर्षुर्हि परिसरवर्त्तिभिराप्तैर्ब्बाधितोदेवतां स्मर्त्तुमुद्युङ्क्ते, तदानीमेव तदुक्तं व्रतकर्त्तव्यतां श्रुत्वा कर्त्तुमशक्नुवन् व्याकुलचित्तः पूर्व्वमुद्युक्तां देवतास्मृतिमपि परित्यजति। सोऽयं पुरुषार्थप्रतिबन्धस्तस्य च निमित्तं प्रायश्चित्तविधातारइति युक्तस्तेषां प्रत्यवायः। एवं तर्हि सर्व्वत्र प्रायश्चित्तं विधातुं भीताः स्युरित्याशङ्क्योक्तं, न स्वस्थस्य कदाचनेति। स्वस्थशरीरस्य पूर्व्वोक्तः कार्य्योपरोधः कदाचिदपि नास्तीति तं प्रति प्रायश्चित्तं विधातुं न भेतव्यमिति भावः।

व्याधिव्यसनिनीत्यत्र प्रतिनिधित्वेन व्रतमनुष्ठेयमित्युक्तम्। इदानीं तस्य व्यतिरेकमाह,—

**स्वस्थस्य मूढाः कुर्व्वन्ति वदन्ति नियमन्तु ये ॥ ५८॥**
**ते तस्य विघ्नकर्त्तारः पतन्ति नरकेऽशुचौ।**

ये तु मूढा व्याध्यादिग्रस्तस्यैव प्रतिनिधिरिति शास्त्ररहस्य-मजानन्तः स्वस्थस्य कस्यचित् परिदृढ़ादेः(१) दाक्षिण्यादिना तदीयं व्रतनियममनुतिष्ठन्ति*, तस्य च नियमाभावं शास्त्रीयत्वेन वदन्ति,

* तदीयं व्रतं स्वयमेवानुतिष्ठन्ति,—इति मु०।

(१) परिदृढ़ः प्रभुः।

ते प्रतिनिधित्वेनानुतिष्ठन्तः शास्त्रार्थञ्चान्यथा वदन्तस्तस्य स्वस्य पापनिवृत्तिविघ्नं चरन्तो* रौरवादिके नरके पतन्ति।

इदानीं पण्डितम्मन्यतया विप्रवाक्यमवज्ञाय स्वेच्छयैव किञ्चिद्व्रतं शास्त्रीयत्वेन परिकल्प्यानुतिष्ठतो न पापनिवृत्तिरित्याह,—

**सएव नियमन्त्यक्त्वा ब्राह्मणं योऽवमन्यते ॥ ५९ ॥**
**वृथा तस्योपवासः स्यान्न स पुण्येन युज्यते।**

स्वकपोलकल्पितव्रतस्य† पापनिवर्त्तकत्वाभावः शातातपेन स्पष्टीकृतः,—

"यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते।
न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृतेऽपि सः"—इति ॥

व्यतिरेकमुक्त्वाऽन्वयमाह,—

**सएव नियमोग्राह्योयद्येकोऽपि वदेद् द्विजः ॥ ६० ॥**
**कुर्य्याद्वाक्यं द्विजानान्तु अन्यथा भ्रूणहा भवेत्।**

धर्मरहस्येऽभिज्ञानां बहूनां द्विजानां प्रायश्चित्तविधानं मुख्यः कल्पः। एकस्य विधायकत्वमनुकल्पः। उभयथाऽपि विप्रेणानुज्ञातएव नियमोऽनुष्ठातव्यः‡। अन्यथा द्विजानुज्ञामन्तरेण स्वयमेव शास्त्रं पर्य्यालोच्य प्रकटपापस्य प्रायश्चित्तं कुर्व्वन् प्रत्यवायी स्यात्।

---

* पापनिवृत्तिं विघ्नन्तः,—इति मु०।

† स्वेच्छया स्वकपोल,—इति मु०।

‡ विप्रेणानुज्ञात एवेति नियमोऽनुज्ञातव्य इति शा०।

विप्रवाक्यस्य प्रायश्चित्तप्रयोजकत्वं प्रतिपादयति,—

**ब्राह्मणाजङ्गमं तीर्थं तीर्थभूता हि साधवः ॥ ६१ ॥**
**तेषां वाक्योदकेनैव शुध्यन्ति मलिनाजनाः ।**

साधूनां तीर्थरूपत्वं शुद्धस्वरूपत्वात् । तथाच श्रूयते,—

"अग्निः शुचिर्व्रततमः शुचिर्विप्रः शुचिः कविः"—इति ।

विशिष्टमातापितृजन्यत्वं ब्राह्मणत्वं, न केवलं तावतैव ब्राह्मणवाक्यस्य प्रशस्तत्वं, किन्त्वनेकदेवताप्रतिपादकानां वैदिकमन्त्राणां धारणया सर्वदेवतात्मकत्वेनापि तद्वाक्यं प्रशस्तमित्याह,—

**ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ॥ ६२ ॥**
**सर्व्वदेवमयो* विप्रो न तद्वचनमन्यथा ॥**

ब्रह्म वेदः, निरन्तरं तन्निष्ठाः सन्तस्तदर्थं यथावद्ब्रुवाणाब्राह्मणाः, अतोवेदविद्वचनं देवता अनुमन्यन्ते । तस्य च सर्वदेवमयत्वं श्रूयते । "यावतीर्वै देवतास्ताः सर्वावेदविद्ब्राह्मणे वसन्ति"—इति । अङ्गिरा अपि,—

"ब्राह्मणो देवताः सर्व्वाः स च सर्वस्य दैवतम्"—इति ।

"यदेव विद्यया करोति तदेव वीर्य्यवत्तरं भवति[१]"—इति श्रुतौ

---

* सर्व्ववेदमयो,—इति पा० ।

---

(१) यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीति छान्दोग्यश्रुतिरेव मध्ये परित्यज्य पठितेति बोध्यम् ।

विद्यासंयुक्तं कर्म केवलात् कर्मणः प्रशस्तमिति श्रुतं, तेनैव न्यायेन विद्यासंयुक्तं व्रतं केवलाद्व्रतात् प्रशस्तमित्याह,—

**उपवासो व्रतञ्चैव स्नानं तीर्थं जपस्तपः ॥ ६३ ॥**
**विप्रसम्पादितं*(१) यस्य सम्पूर्णं तस्य तत्फलम् ।**

विप्रसम्पादितं विप्रैरनुज्ञातं उपवासादिकम् । फलसम्पूर्त्ति†र्निःशेषेणाशुद्धिनिवृत्तिः ।

अभ्युपहतस्य देहस्य शुद्धिमुक्ता तादृशस्यैवान्यस्य शुद्धिमाह,—

**अन्नाद्ये कीटसंयुक्ते मक्षिकाकेशदूषिते ॥ ६४ ॥**
**तदन्तरा स्पृशेच्चापस्तदन्नं भस्मना स्पृशेत् ।**

अन्नं योग्यमद्यं, अन्नञ्च तदद्यञ्च अन्नाद्यं, पक्वमन्नं न त्वामभित्यर्थः । तद्यदि भोजनपात्रे भाण्डे वा कीटेन मक्षिकया केशेन वा संयुज्येत, तदा तत्कीटादिकमपनीय तस्यान्नस्याभ्यन्तरेऽद्भिः संप्रोक्ष्य किञ्चिद्भस्म प्रक्षिपेत्। मक्षिकादिदूषितत्वं गोघ्रातत्वादीनामुपलक्षणम् । अतएव वृहस्पतिः,—

"गोघ्राते च क्षुते वाऽन्ने मक्षिकाकेशदूषिते ।
मृद्भस्म सलिलञ्चैव प्रक्षेप्तव्यं विशुद्धये"—इति ॥

---

* विप्रैः सम्पादितं,—इति प्रा० ।

† फलं सम्पूर्त्तिः,—इति मु० प्रा० ।

---

(१) विद्यया याति विप्रत्वमित्युक्तेः विप्रसम्पादितत्वेनैव व्रतस्य विद्यासंयुक्तत्वं बोध्यम् ।

मनुरपि,—

"पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् ।

दूषितं केशकीटैश्च मृत्प्रक्षेपेण विशुद्ध्यति*"—इति ॥

वस्त्रावधूननरेणुस्पृष्टमवधूतं, क्षुतोत्पन्नविन्दुस्पृष्टमवक्षुतम् । यत्तु गौतमेनोक्तम् । "नित्यमभोज्यं केशकीटावपन्नम्"—इति । तत्केश-कीटादिभिः सह पक्वविषयम् ।

केशकीटादिदूषितान्नशोधनप्रसङ्गेन बुद्धिस्थं भोजनकालीनं किञ्चिन्नियमविशेषमाह,—

**भुञ्जानश्चैव यो विप्रः पादं हस्तेन संस्पृशेत् ॥ ६५ ॥**
**स्वमुच्छिष्टमसौ भुङ्क्ते यो भुङ्क्ते मुक्तभाजने† ।**
**पादुकास्थोन भुञ्जीत पर्य्यङ्कस्थः स्थितोऽपि वा ॥ ६६ ॥**
**श्वानचण्डालदृक् चैव भोजनं परिवर्जयेत्**

वामहस्तेन पादसंस्पर्शे सति स्वोच्छिष्टभोजने यावान् प्रत्यवायः, तावानेव भवति । वामहस्तेन पात्रमनालभ्य भोजनेऽपि तावानेव प्रत्यवायः । पीठे समुपविष्टः पद्भ्यां पादुके आक्रम्य न भुञ्जीत । तथा पर्य्यङ्के स्थित्वा वोर्द्धं स्थित्वा वा न भुञ्जीत । भोजनमध्ये श्वादिदर्शने भोजनमेव परित्यजेत् । पादुकास्थइत्येतावद्भिन्नासन-गतादीनामप्युपलक्षणम् । अतएव व्यासः,—

---

* मृत्प्रक्षेपेण शुध्यति,—इति मु० ।

† भिन्नभाजने,—इति मु० ।

"न च भिक्षासनगतो न शयानः स्थितोऽपि वा*।
न पादुकास्थितो वाऽपि न हसन्विलपन्नपि"—इति ॥

अन्नाद्य इत्यनेन प्रासङ्गिकमन्नशोधनमुक्तम्, इदानीं प्राधान्येन शुद्धिप्रकरणमेवानुवर्त्तयितुं प्रतिजानीते,—

**यदन्नं प्रतिषिद्धं स्यादन्नशुद्धिस्तथैव च ॥ ६७ ॥**
**यथा पराशरेणोक्तं तथैवाहं वदामि वः ।**

यदन्नं प्रतिषिद्धं, तथैव या चान्नस्य शुद्धिः, तत्सर्व्वं वृद्ध-पराशरेण पूर्व्वकल्पीयस्मृतिकर्त्रा यथोक्तं तथा वदामि। तत्र तत्र वचने पराशरपरामर्शस्यायमभिप्रायः। "धाता यथापूर्व-मकल्पयत्"।

"यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये।
दृश्यन्ते तानि तान्येव तथाभावा युगादिषु"—

इत्यादिश्रुतिस्मृतिभ्यां प्रतिकल्पमधिकारिपुरुषाणां मनुवसिष्ठा-दीनां समानसृष्टिप्रतिभानात् कलियुगधर्मशास्त्राधिकारी परा-शरोऽपि तस्मिंस्तस्मिन् कल्पे सृज्यते। अतोऽस्मिन्नपि कल्पे कलि-युगधर्मेषु मदुक्तस्य ग्रन्थस्य प्राधान्यं† न विस्मर्त्तव्यमिति।

प्रतिज्ञाते प्रतिषिद्धशुद्धी‡ दर्शयति,—

---

* न शय्यायां स्थितोऽपि वा,—इति मु०।

† मदुक्तत्वस्य प्राधान्यं,—इति शा०।

‡ प्रतिषिद्धशुद्धिं,—इति मु०।

**स्मृतं द्रोणाढ़कस्यान्नं काकश्वानोपघातितम् ॥ ६८ ॥**
**केनेदं शुद्ध्यते चान्नं ब्राह्मणेभ्यो निवेदयेत् ।**

द्रोणाढ़कशब्दयोरर्थं वक्ष्यति । द्रोणेनाढकेन वा परिमितस्य व्रीहियवादिद्रव्यस्य सम्बन्धि पक्कमन्नं श्वकाकाभ्यां यदि लेहनादिनोपघातितं स्यात्, तदा स्वयं शास्त्रज्ञोऽपि तत्शुद्धिसिद्धये धर्मज्ञान् ब्राह्मणान्वाचयितुं केनेदं शुद्ध्यतीति पृच्छेत् ।

ततो धर्मरहस्यविद्ब्राह्मणनिर्द्दिष्टां शुद्धिं चिकीर्षुस्तदन्नं संगृह्णीयात् न तु परित्यजेत् इत्याह,—

**काकश्वानावलीढन्तु द्रोणान्नं न परित्यजेत् ॥६९॥**

द्रोणशब्देनाढ़कोऽप्युपलक्ष्यते ।

इदानीं द्रोणाढ़कयोः परिमाणमाह,—

**वेदविदाङ्गविद्विप्रैर्धर्मशास्त्रानुपालकैः ।**
**प्रस्थाद्द्वात्रिंशतिर्द्रोणः स्मृतो द्विप्रस्थ आढ़कम् ॥ ७० ॥**

नानादेशीयैर्विद्वद्भिस्तात्कालिकस्वस्वव्यवहारनिर्व्वाहाय स्वेच्छयैव द्रोणादिपरिमाणानि निर्णीयन्ते । तानि नाशास्त्रीयाणीत्यभिप्रेत्य वेदवेदाङ्गेत्यादिना विशेषितम् ।

यववराहाधिकरणन्यायेन[१] शास्त्रज्ञप्रसिद्ध एव शास्त्रार्थो गृहीतव्यो न तु म्लेच्छप्रसिद्ध इत्याह,—

---

(१) मीमांसादर्शनस्य प्रथमाध्याये तृतीयपादगतं पञ्चमाधिकरणं यववराहाधिकरणमित्युच्यते । तत्रेदं निर्णीतम् । यवशब्दमार्य्यादीर्घशूकेषु प्रयुञ्जते वराहशब्दञ्च शूकरे । म्लेच्छास्तु यवशब्दं प्रियङ्गुषु प्रयुञ्जते

**ततो द्रोणाढकस्यान्नं श्रुतिस्मृतिविदो विदुः।**

ततस्तस्मात् शास्त्रीयपरिमाणात् परिमितं यद्द्रोणाढकस्यान्नं तदेवात्र शुद्धमिति शास्त्रे विवक्षितमिति श्रुतिस्मृतिकुशला मन्यन्ते। ननु शास्त्रएव द्रोणाढकपरिमाणमन्यथाऽभिहितम्। तथाच भविष्यत्पुराणम्,—

"पलद्वयन्तु प्रसृतं द्विगुणं कुड़वं मतम्।
चतुर्भिः कुड़वैः प्रस्थः प्रस्थाश्चत्वारआढ़कः॥
आढ़कैस्तैश्चतुर्भिस्तु द्रोणस्तु कथितो बुधैः।
कुम्भोद्रोणद्वयं प्रोक्तं खारी द्रोणस्तु षोड़श"—इति॥

नैष दोषः। देशभेदेन शास्त्रद्वयस्य व्यवस्थापनीयत्वात्।

द्रोणाढकशब्दव्यावर्त्त्यमाह,—

**काकश्वानावलीढन्तु गवाघ्रातं खरेण वा॥७१॥**
**स्वल्पमन्नन्त्यजेद्विप्रः शुद्धिर्द्रोणाढ़के भवेत्॥**

धनिकविषयं द्रोणपरिमाणं, निर्धनविषयमाढ़कपरिमाणम्।

---

वराहशब्दस्य कृष्णशकुनौ। तथाच सति लोकव्यवहारेण शब्दार्थस्य निश्चेतव्यत्वात् किमार्य्यव्यवहारेण दीर्घशूकादयो यवादिशब्दार्था- ग्रहीतव्याः किं वा म्लेच्छव्यवहारेण प्रियङ्ग्वादयः,—इति सन्देहे, शास्त्रीयशब्दार्थग्रहणे शास्त्रानुसारिण्या आर्य्यप्रसिद्धेर्बलीयस्त्वात् आर्य्यव्यवहारानुसारेण दीर्घशूकादयएव यवादिशब्दार्था ग्रहीतव्या- न म्लेच्छप्रसिद्ध्यनुसारेण प्रियङ्ग्वादयः,—इति सिद्धान्तः।

तच्च यथायथम् । द्रोणाढकपरिमाणाच्च स्वल्पमन्नं काकादिभिरवलीढं चेत्, तत्परित्याज्यमेव । विवचिता शुद्धिर्द्रोणाढ़कविषयेति द्रष्टव्यम् ।

तां शुद्धिं दर्शयति,—

**अन्नस्योद्धृत्य तन्मात्रं यच्च लालाहतं* भवेत् ॥७२॥**
**सुवर्णोदकमभ्युक्ष्य हुताशेनैव तापयेत्† ।**
**हुताशनेन संस्पृष्टं सुवर्णसलिलेन च ॥७३॥**
**विप्राणां ब्रह्मघोषेण भोज्यं भवति तत्क्षणात् ।**

द्रोणाढ़कपरिमितस्यान्नस्य मध्ये यावति भागे संस्पर्शसम्भावना, तावन्तं भागमपनयेत् । अवशिष्टेऽपि यावति लालास्पर्शः सम्भावितः, तावदपनयेत् । इतरत् सर्व्वं सुवर्णयुक्तेनोदकेन सम्प्रोक्ष्य सकृत् वह्नौ तापयेत् । ताभ्यां सुवर्णोदकवह्निभ्यां संस्कृतं पुनः शुद्धिहेतूनां पवमानसूक्तादीनां घोषेण संस्कृत्य विप्रैरनुज्ञातं तद्भुञ्जीत । अतएव बौधायनः । "सिद्धहविषां महतां श्ववायसप्रभृत्युपहतानां तदग्रं पिण्डमात्रमुद्धृत्य पवमानः सुवर्जन इत्यनेनाभ्युक्षणम्, मधूदके पयोविकारे पात्रात् पात्रान्तरानयनेन शौचमेवं तैलसर्पिषि"—इति । यमदग्निरपि,—

"शृतान्नं द्रोणमात्रस्य श्वकाकाद्युपघातितम् ।
ग्रासमुद्धृत्याग्नियोगात् प्रोक्षणं तत्र शोधनम् ॥

---

* यावच्च लेहितं,—स० शा० ।

† हुताशेनोपतापयेत्,—इति शा० ।

अन्नमेकाढ़कं पक्वं श्वकाकाद्युपघातितम्।
केशकीटावपन्नञ्च तदप्येवं विशुद्ध्यति॥
क्रीतस्यापि विनिर्दिष्टं तद्वदेव मनीषिभिः"—इति।

शातातपोऽपि,—

"केशकीटशुना स्पृष्टं वायसोपहतञ्च यत्।
क्लीवाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः॥
दृष्टं वा स्वाद्यदन्नं तु तस्य निष्कृतिरुच्यते।
अभ्युक्ष्य किञ्चिदुद्धृत्य तद्भुञ्जीत विशेषतः॥
भस्मना वाऽपि संस्पृश्य संस्पृशेदुल्मुकेन वा।
सुवर्णरजताभ्यां वा भोज्यं प्रातं मुखेन गोः"—इति॥

हारीतोऽपि। "श्वकाकग्टध्रोपघाते केशकीटपिपीलिकादिभिरन्नाद्युपघाते काञ्चनभस्मरजतताम्रवज्रवैदुर्य्यगोवालाजिनेभदन्तानामन्यतमेनाद्भिः संस्पृष्टं मन्त्रप्रोक्षणपर्य्यग्निकरणादित्यदर्शनात् शुद्धिर्भवति"—इति।

अन्नस्य शुद्धिमुक्त्वा रसस्य शुद्धिमाह,

**स्नेहो वा गोरसो वाऽपि तत्र शुद्धिः कथं भवेत्॥७४॥**
**अल्पं परित्यजेत् तत्र स्नेहस्य पवनेन च।**
**अनलज्वालया शुद्धिर्गोरसस्य विधीयते॥ ७५॥**

स्नेहस्तैलादिः, गोरसः क्षीरादिः। तत्राल्पं चेत् श्वादिभिरुपहतं तत् त्याज्यमेव। अल्पस्य स्नेहस्य पाकेन शुद्धिः। अल्पस्य गोरसस्य वह्निज्वालया पर्य्यग्निकरणेन शुद्धिः। तदाह लौगाक्षिः,—

"पयोदधिविकारादि शुचि पात्रान्तरे स्थितम् ।
प्लावनोत्पवनाभ्याञ्च पर्य्यग्निकरणेन च"—इति ॥

शङ्खोऽपि,—

"प्लावनं घृततैलानां पावनं गोरसस्य च* ।
भाण्डानि प्लावयेदद्भिः शाकं मूलफलानि च ॥
सिद्धमन्नं तथा सर्पिः क्षीरञ्च दधि चाम्बु च ।
एषां शुनाऽवलीढानां तेजसा शुद्धिरिष्यते"—इति ॥

शातातपस्तु विलीनाविलीनभेदेन व्यवस्थितां शुद्धिं दर्शयति,—

"तापनं घृततैलानां मधुनो गोरसस्य च ।
तन्मात्रमुद्धृतं शुद्ध्येत् कठिनन्तु पयोदधि ॥
अविलीनं तथा सर्पिर्विलीनं पवनेन† तु"—इति ।

कचित्तु दोषाभावमाह शङ्खः । "घृतदधिपयस्तक्राणामाधारभाण्डे स्थितानामदोषः । आधारदोषे तु नयेत् पात्रात् पात्रान्तरं द्रव्यम् ।

घृतन्तु पायसं क्षीरं तथैवेक्षुरसो गुडः ।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति"—इति ॥

यमोऽपि,—

"देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिस्तु संस्पृष्टमन्नं न तु विवर्जयेत्"—इति ॥

देवद्रोणी देवयात्रा । शातातपोऽपि,—

---

* अनल्पघृततैलानां पवने गोरसस्य च,—इति मु॰ ।
† तपनेन,—इति मु॰ ।

"गोकुले यज्ञशालायां तिलचक्रेक्षुयन्त्रणे।
न मीमांस्यानि शौचानि* स्त्रीषु बालातुरेष्वपि"—इति ॥

प्रकीर्णकरणाभिधे मलिनतावहाख्याधरे
वदन्नमुपपातकेऽप्युचितसत्क्रियां निःकृतिम्।
रसान्नपरिशुद्धिमप्यकृत षष्ठमध्यायम-
प्युदारविवृतिं वशी मधुरवाङ्मयो माधवः ॥०॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीर-बुक्कभूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां षष्ठोऽध्यायः ॥०॥

---

* न मीमांस्या शौचकथा,—इति मु०।

## सप्तमोऽध्यायः ।



अन्नरसयोः शुद्धिः षष्ठाध्याये वर्णिता, सप्तमाध्यायेऽवशिष्टानां द्रव्याणां शुद्धिं विवक्षुर्महाप्रकरणप्राप्तप्रायश्चित्तशङ्काव्युदासाय प्रतिजानीते,—

**अथातो द्रव्यशुद्धिस्तु पराशरवचो यथा ।**

अथावान्तरप्रकरणमारभ्यान्नरसशुद्धिकथनानन्तरं यस्मादितरद्रव्यशुद्धिर्बुद्धिस्था ; यस्माच्चान्तरेण द्रव्यशुद्धिं महाप्रकरणगतप्रायश्चित्तव्रतचर्य्याया नित्यकर्मादीनाञ्चानुष्ठानं निपुणं न भवति, ततस्तस्माद्गुणहेतुद्रव्यशुद्धिरभिधीयते ॥

तत्र दर्व्वीस्रुक्स्रुवादीनामुच्छिष्टामेध्यादिदूषितानां शुद्धिमाह,—

**दारवाणान्तु पात्राणां तक्षणात् शुद्धिरिष्यते ॥१॥**

मूत्रपुरीषादिप्रदेशे चिरावस्थानेन दृढ़वासितोगन्धलेपोयदि मृज्जलप्रक्षालनेन नापगच्छेत्, तदा वास्यादिना दारवाणि तक्षणीयानि । तक्षणेनाप्यनपगमे परित्यागः । तदाह बौधायनः । "दारुमयाणां पात्राणामुच्छिष्टसमारब्धानामवलेखनमुच्छिष्टलेपोपहतानां तक्षणम्[१]" । मूत्रपुरीषप्रभृतीनामल्पकालसंस्पर्शे तु गन्धलेपयोरपनेतुं शक्यत्वात्तदपनयनपर्य्यन्तं मृज्जलाभ्यां प्रयत्नेन प्रक्षालनीयानि ।

---

(१) समारब्धानां समालब्धानां, रलयोरभेदात् । समालम्भः स्पर्शः ।

"यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः।

तावन्मृद्वारि देयं स्यात् सर्व्वासु द्रव्यशुद्धिषु"—इति

स्मरणात्। यत्र तु गन्धलेपपर्य्यन्तः संसर्गो नास्ति, किन्तु केवलं संस्पर्शमात्रं, तत्र प्रोक्षणात् शुद्धिः। एतदेवाभिप्रेत्य मनुराह,—

"स्फ्यशूर्पशकटानाञ्च मुसलोलूखलस्य च।

अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्"—इति॥

यज्ञकाले तु स एव विशेषमाह,—

"मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्म्मणि।

चमसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु॥

चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा"—इति।

पात्रलग्नस्नेहनिवृत्त्यर्थमुष्णोदकम्। अतएव याज्ञवल्क्यः,—

"चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा"—इति।

कांस्यताम्रयोरन्योपहतयोः शुद्धिमाह,—

**भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति।**

अम्लं क्षारस्याप्युपलक्षणम्। अतएव याज्ञवल्क्यः,—

"त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः"—इति।

ताम्रादीनां तैजसानामुपघाततारतम्येन शुद्धिविशेषमाह बौधायनः। "तैजसानां मूत्रपुरीषासृक्छुक्रणाद्यै*रत्यन्तमाहतानामावर्त्तनं†

* मूत्रपुरीषादिभिरमेध्यैः,—इति मु०।

† रत्यन्तवासितानामावर्त्तनं,—इति मु०।

अल्पसंसर्गे तु परिलेखनं स्पर्शमात्रोपघाते तु त्रिः सप्तकृत्वोभस्मना परिमार्जनं अतैजसानामेवम्भूतानामुत्सर्गः”—इति ।

स्त्रिया जारसम्पर्कोपहतायाः शुद्धिमाह,—

**रजसा शुद्ध्यते नारी विकल्पं या न गच्छति ॥ २ ॥**

विकल्पं वैकल्यं गर्भधारणं, तस्मिन् सति परित्यागएव न शुद्धिः । तदाह याज्ञवल्क्यः,—

“व्यभिचारादृतौ शुद्धिः गर्भे त्यागो विधीयते”—इति ।

एतत् शूद्रकृतगर्भविषयम् । तदाह वशिष्ठः,—

“ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः ।
अप्रजाता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः”—इति ॥

वर्णान्तरगर्भे तु प्रायश्चित्तेन शुद्धिरस्ति । तदुक्तं चतुर्विंशमते,—

“विप्रगर्भे पराकः स्यात् क्षत्रिये तु तथैन्दवम् ।
वैश्ये तदेव कर्त्तव्यं पराकेण समन्वितम् ॥
शूद्रगर्भे तु संत्यागस्तत्र चण्डालदर्शनात्”—इति ॥

गर्भपर्य्यवसानहीनोऽपि व्यभिचारस्त्रिविधः, कायिको मानसो-वाचिकश्चेति । कायिके प्रचेताआह,—

“विप्रा शूद्रेण संयुक्ता न चेत्तस्मात् प्रसूयते ।
प्रायश्चित्तं स्मृतं तस्याः कृच्छ्रं चान्द्रायणत्रयम् ॥
चान्द्रायणे द्वे कृच्छ्रञ्च विप्राया वैश्यसङ्गमे ।
कृच्छ्रचान्द्रायणे स्यातां तस्याः क्षत्रियसङ्गमे ॥
क्षत्रिया शूद्रसम्पर्के कृच्छ्रं चान्द्रायणद्वयम् ।

चान्द्रायणं सकृत्कृच्छ्रन्तु चरेद्वैश्येन सङ्गता ॥
शूद्रं गत्वा चरेद्वैश्या कृच्छ्रं चान्द्रायणोत्तरम्।
आनुलोम्येन कुर्व्वीत कृच्छ्रं पादावरोपितम्[१]"—इति ॥

एतदभ्यासविषयम्। अनभ्यासे तु चतुर्विंशतिमते दर्शितम्,—

"रजसा शुद्ध्यते नारी परपुंसाभिगामिनी।
तथापि मुनिना प्रोक्तं प्रायश्चित्तं समाचरेत् ॥
कृच्छ्रार्द्धं ब्राह्मणी कुर्य्यात् विप्रस्य गमने सति।
क्षत्रियस्य चरेत् कृच्छ्रं वैश्ये सान्तपनं चरेत् ॥
शूद्रस्य गमने चैव पराकन्तु समाचरेत्"—इति।

वाचिकमानसयोर्वसिष्ठ आह। "मनसा भर्त्तुरतिचारे त्रिरात्रं यावकं क्षीरोदनञ्च भुञ्जानाऽधः शयीत ऊर्द्धं त्रिरात्रादप्सु निमग्नायाः सावित्र्यष्टशतैः शिरोभिर्जुहुयात् पूता भवतीति विज्ञायते। वाक्संभवे एतदेव मासं चरित्वा ऊर्द्धं मासादप्सु निमग्नायाः सावित्र्याश्चतुर्भिरष्टशतैः शिरोभिः जुहुयात्"—इति। मानसे यदिदं प्रायश्चित्तमुक्तं, तदृतुदर्शनादर्व्वाग्व्यवहार्य्यत्वसिद्ध्यर्थं, ऋतुदर्शनानन्तरन्तु तेनेव व्यवहार्य्यत्वसिद्धिः। तदाह मनुः,—

"मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुद्ध्यति।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः"—इति ॥

तदेतत् सर्व्वमभिप्रेत्य, रजसा शुध्यते नारी,—इत्याचार्य्येणोक्तम्।

नद्या उपरिभागे रथ्योदकादीनां उपहतौ शुद्धिमाह,—

**नदी वेगेन शुद्ध्येत लेपो यदि न दृश्यते।**

(१) कृच्छ्रं, प्रजापत्यम्। पादावरोपितं पादहीनम्।

प्रवहन्त्यां नद्यां पतितान्युच्छिष्टामेध्यादीनि यदा प्रवाहवेगेन स्नानतीर्थमतिक्रम्य गच्छन्ति, तदा तस्मिंस्तीर्थे लेपशेषो यावत् दृश्यते तावन्नास्ति शुद्धिः, तददर्शने तु स्नानपानादिकर्म्मार्थं शुद्धैवेयं नदी। सत्यपि लेपे यद्यक्षोभ्योदकयुक्ता सा नदी, तदा लेपयुक्तं तत्तीर्थमात्रं वर्ज्यं इतरप्रदेशेषु सा नदी शुद्धा। तदाह देवलः,—

"अक्षोभ्याणि तटाकानि* नदीवापीसरांसि च।
कश्मलाशुचियुक्तानि तीर्थं तत्† परिवर्जयेत्"—इति ॥

नदीशुद्धिमुक्ता कूपादिशुद्धिमाह,—

**वापीकूपतडागेषु दूषितेषु कथञ्चन ॥ ३ ॥**
**उद्धृत्य वै घटशतं‡ पञ्चगव्येन शुद्ध्यति ।**

कूपादिदूषणं द्विधा श्रूयते, श्वमार्जारादीनां तत्र पतितानां मरणात् मृतशवानां तत्रैव चिरं चरणाच्च। तत्र मरणमात्रविषयमिदं विशोधनम्। एतदेव हारीतोऽप्याह,—

"वापीकूपतडागेषु दूषितेषु विशोधनम्।
घटानां शतमुद्धृत्य पञ्चगव्यं क्षिपेत्ततः§"—इति ॥

सम्वर्त्तोऽपि,—

"वापीकूपतडागानां दूषितानाञ्च शुद्धये।
अपां घटशतोद्धारः पञ्चगव्येन शोधनम्"—इति ॥

---

* तटाकस्थाने तडागपाठः वङ्गीयपुस्तकेषु। वैपरीत्यं पाश्चात्त्यदाक्षिणात्यपुस्तकेषु प्रायः।

† तीर्थतः,—इति मु०।

‡ कुम्भशतं,—इति मु०।

§ पञ्चगव्यञ्च प्रक्षिपेत्,—इति मु०।

इयमेव शुद्धिरुपानदादिदूषणेऽपि। तदाह आपस्तम्बः,—

"उपानच्छ्लेष्मविण्मूत्रं स्त्रीरजोऽमेध्यमेवच।

पतिते दूषिते कूपे कुम्भानां शतमुद्धरेत्"—इति॥

मृतशरीरजरणकृतायामत्यन्तोपहतौ विष्णुराह,—

"मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा।

अपः समुद्धरेत् सर्व्वाः शेषं शास्त्रेण शोधयेत्॥

वह्निप्रज्वालनं कृत्वा कूपे पक्केष्टकाचिते।

पञ्चगव्यं न्यसेत्तत्र नवतोयसमुद्भवे"—इति।

मनुष्यशरीरजरणेऽप्येवमेव शुद्धिः। तदाह हारीतः,—

"वापीकूपतड़ागेषु मानुष्यं शीर्य्यते यदि।

अस्थिचर्मविनिर्मुक्तं दूषितं श्वखरादिभिः॥

उद्धृत्य तज्जलं सर्व्वं शोधनं परिमार्जनम्"—इति।

प्रौढ़ेषु तड़ागादिषु नास्ति दोषः। तदाह विष्णुः,—

"जलाशयेष्वथाल्पेषु स्थावरेषु महीतले।

कूपवत् कथिता शुद्धिर्महत्सु च न दूषणम्"—इति॥

देवलोऽपि,—

"अक्षुद्राणामपां नास्ति प्रभूतानाञ्च दूषणम्।

स्तोकानामुद्धृतानाञ्च कश्मले दूषणं भवेत्"—इति॥

अल्पोदकेष्वपि पूर्व्वोदाहृताद्दोषादल्पे दोषे विष्णुराह,—

"अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम्*।

---

* शिलागते,—इति मु०।

सोमसूर्य्यांशुपातेन मारुतस्पर्शनेन* च ॥

गवां मूत्रपुरीषेण शुद्ध्यन्त्याप इति स्मृताः"—इति ।

उच्छिष्टाद्युपघाताभावेऽपि गवां पानाद् यदुदकं न क्षीयते तदेव शुद्धं न तु ततोऽल्पम् । तदाह देवलः,—

"अविगन्धारसोपेता निर्मलाः पृथिवीगताः ।

अक्षीणाश्चैव गोपानादापः शुद्धिकराः स्मृताः"—इति ॥

मनुरपि,—

"आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् ।

अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः"—इति ॥

नवोदके कालात् शुद्धिमाह यमः,—

"अजागावो महिष्यश्च नारी चैव प्रसूतिका† ।

दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम्"—इति ॥

उद्धृतोदकं प्रति देवलश्चाह,—

"उद्धृताश्चापि शुद्ध्यन्ति शुद्धैः पात्रैः समुद्धृताः ।

एकरात्रोषिताश्चापस्त्याज्या शुद्धा अपि स्वयम्"—इति ॥

यमोऽपि,—

"अपोनिशि न गृह्णीयाद्गृह्णन्नपि कदाचन ।

निधायाग्निमुपर्य्यासां धान्योधान्य इतीरयेत्"—इति ॥

पूर्व्वं 'रजसा शुद्ध्यते नारी'—इत्यत्र योषितो विवाहोत्तर-

---

* मारुतोऽस्पर्शनेन,—इति श्रा० ।

† ब्राह्मणश्च प्रसूतिकाः,—इति मु० ।

कालीना शुद्धिर्विवेचिता। इदानीं विवाहात् प्राचीनां शुद्धिं विविनक्ति,—

**अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी॥ ४॥**
**दशवर्षा भवेत् कन्या अत ऊर्द्धं रजस्वला।**

गौर्य्यादयस्तिस्र उद्वाहाय शुद्धाः। तद्दातुः फलविशेषस्मरणात्। रजस्वला त्वशुद्धा,तद्दानस्य निन्दितत्वात्। तत्र फलनिन्दे दर्शयति वृहस्पतिः,—

"गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्।
कन्यां ददद्ब्रह्मलोकं रौरवन्तु रजस्वलाम्"—इति॥

यद्यप्येकादशे वर्षे रजोदर्शनं न प्रतिनियतं, तथापि क्वाचित्- दर्शनात् तत्सम्भावनया रजस्वलेति निर्द्देशः। तां ददद्रौरवं नरकं प्राप्नोति इति शेषः।

कन्यायामशुद्धिमभिप्रेत्यात ऊर्द्धं रजस्वलेत्युक्तं, तामेवाशुद्धिं प्रदर्शयितुमदातारं निन्दति,—

**प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति॥ ५॥**
**मासि मासि रजस्तस्याः पिबन्ति पितरः स्वयम्*।**

ऋतुदर्शनमुपलक्षयितुं द्वादशे वर्षे इत्युक्तम्। अतएव गौतमेन, "प्रदानं प्रागृतुदर्शनात्"—इत्युक्तम्। यमोऽप्येतदेव आह,—

"तस्मादुद्वाहयेत् कन्यां यावन्नर्त्तुमती भवेत्"—इति।

अतश्च ऋतुदर्शनात् प्राग्यो न प्रयच्छति, तस्य पितरः प्रति-

* पितरोऽनिशम्,—इति मु०।

मासं तद्रजः पिबन्ति । असत्यृतुदर्शने द्वादशेऽपि वर्षे कन्यादान-प्रतिग्रहौ न निषिद्धौ । अतएव मनुः,—

"त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः"—इति ॥

ऋतुदर्शने सत्यप्रदाता न केवलं पितॄनेव नरके पातयति, किन्तु स्वयमपि सकुटुम्बः पतेदित्याह,—

**माता चैव पिता चैव ज्येष्ठो भ्राता तथैवच ॥ ६ ॥**
**त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ।**

मात्रादयस्त्रयः, कन्याप्रदानाधिकारिणः सर्व्वानुपलक्षयन्ति । ते च पूर्व्वमेव, 'पिता पितामहः'—इत्यादि वचनोदाहरणेन विवाहप्रकरणे प्रदर्शिताः ।

रजोदर्शनात् प्रागदानं यथा नरकहेतुः, तथा रजस्वलोद्वाहोऽपि नरकहेतुरित्याह,—

**यस्तां समुद्वहेत् कन्यां ब्राह्मणोमदमोहितः ॥ ७ ॥**
**असम्भाष्योह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ।**

तां दृष्टरजसम् । असम्भाष्यत्वापाङ्क्तत्वयोर्हेतुर्वृषलीपतित्वम् । विवाहात् पूर्व्वं दृष्टरजस्का वृषली । तथाच मनुः,—

"पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः" ॥

यस्तु मदमोहादिनाऽतिक्रान्तनिषेधस्तामुद्वाह्य सङ्गत्य कथञ्चिद्दैवयोगादनुतप्येत्तदा तस्य शुद्धिप्रकारमाह,—

**यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ॥८॥**
**स भैक्षभुग्जपन् नित्यं त्रिभिर्वर्षैर्विशुध्यति ।**

जप्यविशेषानभिधानात् सामान्यप्राप्ताया गायत्र्याजप्यत्वमवगन्तव्यम्(१) ।

रात्रौ चण्डालादिस्पर्शे शुद्धिं प्रश्नपूर्व्वकमाह,—

**अस्तङ्गते यदा सूर्य्ये चण्डालं पतितं स्त्रियम् ॥९॥**
**सूतिकां स्पृशतश्चैव* कथं शुद्धिर्विधीयते ॥**
**जातवेदःसुवर्णञ्च सोममार्गं विलोक्य च ॥१०॥**
**ब्राह्मणानुगतश्चैव स्नानं कृत्वा विशुध्यति ।**

जातवेदाश्च सुवर्णञ्च जातवेदःसुवर्णम् । शुक्लपक्षे सोमदर्शनसम्भवे सोमोविलोकनीयः, तदलाभे वह्निस्तस्याप्यभावे सुवर्णं तस्याप्यभावे सोममार्गः । एतेषामन्यतमं विलोक्य विप्रैरनुज्ञातः स्नायात् ।

रजस्वलयोर्योषितोरन्योन्यसंस्पर्शे वर्णक्रमेण शुद्धिमाह,—

**स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी ब्राह्मणी तथा ॥११॥**
**तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुध्यति ।**
**स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा ॥१२॥**
**अर्द्धकृच्छ्रं चरेत् पूर्व्वा पादमेकमनन्तरा ।**

---

* सूतिकां च शवं चैव,—इति मु० ।

---

(१) "मन्त्रानादेशे गायत्री"—इति स्मरणादिति भावः ।

**स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजा तथा ॥१३॥**
**पादहीनं चरेत् पूर्व्वा पादमेकमनन्तरा ।**
**स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजा तथा ॥१४॥**
**कृच्छ्रेण शुध्यते पूर्व्वा शूद्रा दानेन शुध्यति ।**

द्वयोर्ब्राह्मण्योरजस्वलयोरन्योन्यं स्पर्शे सति तत आरभ्य स्नानपर्य्यन्तमुभयोराहारत्यागः। त्रिरात्रकृच्छ्रं चरेत्। एतच्च सहशयनादिचिरस्पर्शविषयम्। सकृत् स्पर्शे तु काश्यपोक्तं द्रष्टव्यम्,—

"रजस्वला च संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति"—इति ॥

ब्राह्मणीक्षत्रिययोः स्पर्शे ब्राह्मण्याः कृच्छ्रार्द्धं क्षत्रियायाः पादकृच्छ्रं, ब्राह्मणीवैश्ययोः स्पर्शे ब्राह्मण्याः पादोनं कृच्छ्रं वैश्यायाः पादकृच्छ्रं, ब्राह्मणीशूद्रयोः स्पर्शे ब्राह्मण्याः प्राजापत्यं शूद्रायाः पादोनम्। एतत्सर्व्वं कामकारविषयम्। तथाच वृद्धवसिष्ठः,—

"स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजाऽपिच ।
कृच्छ्रेण शुद्ध्यते पूर्व्वा शूद्रा दानेनशुद्ध्यति ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजाऽपिच ।
पादहीनं चरेत् पूर्व्वा कृच्छ्रपादं तथोत्तरा ।
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा ॥
कृच्छ्रार्द्धात् शुद्ध्यते पूर्व्वा उत्तरा तु तदर्द्धतः ।
स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजाऽपिच ॥
उपवासैस्त्रिभिः पूर्व्वा त्वहोरात्रेण चोत्तरा ।
स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया वैश्यजाऽपिच ॥

त्रिरात्रात् शुध्यते पूर्व्वा त्वहोरात्रेण चोत्तरा।
स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या शूद्री तथैव च॥
त्रिरात्रात् शुध्यते पूर्व्वा उत्तरा तु दिनत्रयात्।
वर्णानां कामतः स्पर्शे विधिरेष सनातनः"—इति॥

अकामतस्तु वृद्धविष्णुनोक्तम्। "रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न तावदश्नीयात् यावन्न शुद्धिः स्यात्, सवर्णामधिकवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा शुध्यति"—इति। रजस्वलायाः चण्डालादिस्पर्शे विशेषो वृद्धवशिष्ठेनोक्तः,—

"चण्डालाद्यैः श्वपाकेन संस्पृष्टा चेद्रजस्वला।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्॥
प्रथमेऽह्नि त्रिरात्रं स्यात् द्वितीये त्र्यहमेव तु।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत्॥
शूद्रयोच्छिष्टया स्पृष्टा शुना तु त्र्यहमाचरेत्।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्"—इति।

व्यतिक्रम्येति अनशनेन नीत्वेत्यर्थः। एतद्बुद्धिपूर्व्वस्पर्शविषयम्। अबुद्धिपूर्व्वन्तु बौधायनोक्तं द्रष्टव्यम्,—

"रजस्वला तु संस्पृष्टा चण्डालान्त्यश्ववायसैः।
तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यति[१]"—इति॥

भोजनकालस्पर्शे बौधायन आह,—

"रजस्वला तु भुञ्जाना श्वान्त्यजातीन् स्पृशेद्यदि।

---

(१) यावत् कालेन रजस्वलाशौचात् शुद्धिः तावत् कालं निराहारा तिष्ठेत्, शुद्धिस्नानपर्य्यन्तमित्यर्थः।

गोमूत्रयावकाहारा षड्रात्रेण विशुद्ध्यति ।

अशक्ता काञ्चनं दद्यात् विप्रेभ्यो वाऽपि भोजनम्"—इति ।

यदा तूच्छिष्टयोः परस्परस्पर्शो भवति, तदाऽत्रिणा विशेषः प्रदर्शितः,—

"उच्छिष्टोच्छिष्टसंस्पर्शो कदाचित् स्त्री रजस्वला ।

कृच्छ्रेण शुद्ध्यते पूर्व्वा शूद्रा दानैरुपोषिता*"—इति ॥

उच्छिष्टद्विजसंस्पर्शे मार्कण्डेय आह,—

"द्विजान् कथञ्चिदुच्छिष्टान् रजःस्त्री यदि संस्पृशेत् ।

अधोच्छिष्टे त्वहोरात्रमूर्द्धोच्छिष्टे त्र्यहं क्षिपेत्" ॥

भोजनकाले रजस्वलाऽन्तरदर्शने आपस्तम्ब आह,—

"उदक्या यदि वा भुङ्क्ते दृष्ट्वाऽन्यान्तु रजस्वलाम् ।

आस्नानकालं नाश्नीयाद्ब्रह्मकूर्चं ततः पिबेत्" ॥

चण्डालदर्शने त्वत्रिराह,—

"रजस्वला तु भुञ्जाना चण्डालं यदि पश्यति ।

उपवासत्रयं कुर्य्यात् प्राजापत्यन्तु कामतः"—इति ।

शवादिस्पर्शे शातातप आह,—

"आर्त्तवाभिप्लुता नारी स्पृशेच्चेत् शवसूतकम् ।

ऊर्द्ध्वं त्रिरात्रात् स्नातान्तां त्रिरात्रमुपवासयेत्"—इति ॥

स्पर्शपूर्व्वकभोजनादौ विशेषमाहात्रिः,—

"आर्त्तवाभिप्लुता नारी मृतसूतकयोः स्पृशा ।

---

* दानेन शुद्ध्यति,—इति मु० ।

भुक्त्वा पीत्वा चरेत् कृच्छ्रं स्पृष्ट्वा तु त्र्यहमेव च"—इति॥

श्वादिदर्शने व्यासआह,—

"रजस्वला यदा दृष्टा शुना जम्बुकरासभैः।

पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति"॥

बन्धुमरणश्रवणादौ सएवाह,—

"मलयुग्वसनायान्तु* अप्रायत्यं भवेत् यदि।

अभिषेकेण शुद्धिः स्यादाशनं वा दिनत्रयम्॥

आर्त्तवाभिप्लुता नारी नावगाहेत् कदाचन।

उद्धृतेन जलेनैव स्नात्वा शेषं समापयेत्॥

सकं गात्रं भवेदद्भिः साङ्गोपाङ्गमलैर्युतम्।

न वस्त्रपीड़नं कुर्य्यात् नान्यवासा भवेत् पुनः"—इति॥

इदानीं रजोनिमित्तां शुद्धिं दर्शयति,—

**स्नाता रजस्वला या तु चतुर्थेऽहनि शुद्ध्यति॥१५॥**
**कुर्य्याद्रजोनिवृत्तौ तु दैवपित्र्यादि कर्म च। इति।**

रजोदर्शनमारभ्य दिनत्रयं नास्ति शुद्धिः। चतुर्थेऽहनि स्नातायारजोनिवृत्त्यभावेऽपि भर्त्तुः शुश्रूषादौ शुद्धिः। पञ्चमेऽहनि दैवपित्र्ययोः। तदाहापस्तम्बः,—

"शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला।

दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति"—इति।

कानिचित् दिनानि रजोयद्यनुवर्त्तते, तदा तन्निवृत्तिपर्य्यन्तं

---

* मलवद्वाससायास्तु,—इति मु०।

दैवपित्र्ययोः शुद्धिर्नास्ति । निवृत्ते तु रजसि दैवं पित्र्यञ्च कर्त्तव्यम् ।

रोगजन्यानुवृत्तौ विशेषमाह,—

**रोगेण यद्रजः स्त्रीणामन्वहन्तु प्रवर्त्तते ॥ १६ ॥**
**नाशुचिः सा ततस्तेन तत्स्याद्वैकालिकं मतम् ।**

रागरोगादिनिमित्तभेदाऽनेकविधा रजोनिवृत्तिः । तदुक्तं स्मृत्यन्तरे,—

"रागजं रोगजं चैव कालोत्पन्नं तथैवच ।
द्रव्यजञ्चैव सम्प्रोक्तं तच्चतुर्द्धा प्रदृश्यते ॥
अर्व्वाक् प्रसूतेरुत्पन्नं मेदोवृद्ध्याऽङ्गनासु यत् ।
तद्रागजमिति प्रोक्तं वयोदेशसमुद्भवम् ॥
अत्यर्थं यद्रजः स्त्रीणां तद्रोगजमिति स्मृतम् ।
अष्टादशदिनादूर्द्ध्वं स्नानप्रभृति सङ्ख्यया ॥
यद्रजस्तु समुत्पन्नं तत्कालोत्पन्नमुच्यते ।
भक्षद्रव्यस्य वैषम्याद्धातुवैषम्यसम्भवम् ॥
द्रव्यजं रज इत्युक्तं तत् कादाचित्कसम्भवम्"–इति ॥

प्रतिदिनं नैरन्तर्य्येण* रोगजं विद्यात् । तेन रोगजेन रजसा ततो रजोदर्शनानन्तरं सा स्त्री कालप्राप्तरजसेवाशुचिर्न भवति । तत्र हेतुर्वैकालिकमिति । सामान्येन रजोयोग्यः कालो मासः,

---

* नैरन्तर्य्यस्रावेण,—इति मु० ।

"मासि मासि रजः स्त्रीणाम्"—इति शास्त्रात्, लोकप्रसिद्धेश्च। यस्याः कस्याश्चित् धातुस्वभावविशेषाद्विंशतिरात्रादिकः कालविशेषः प्रतिनियतो भवति, ततो विपरीतकालो विकारः प्रतिदिनम्। तच्चानुवर्त्तनादैकालिकत्वम्। यत्तु गर्भिण्याः प्राक्प्रसवाद्रागजमुदाहृतम्, तत्र कालरजोवह्निनत्रयाशौचं विज्ञेयम्। द्रव्यजे त्वङ्गिरा-श्चाह,—

"आ द्वादशाहात् नारीणां मूत्रवत्शौचमिष्यते।
अष्टादशाहात् स्नानं स्यात् त्रिरात्रं परतोऽशुचिः॥
एतत्तु द्रव्यजे विद्याद्रोगजे* पूर्व्वमीरितम्"—इति।

प्रसूतिविषये शुद्धिविशेषमाह प्रजापतिः,—

"प्रसूतिका तु या नारी स्नानतो विंशतेः परम्।
आर्त्तवी रजसा प्रोक्ता प्रोक्तं नैमित्तिकं रजः॥
न तु नैमित्तिके स्यात्तु रजसा स्त्री रजस्वला†।
रजस्युपरते तत्र स्नानेनैव शुचिर्भवेत्॥
अन्यत्र गर्भविश्लेषात् पातनाद्वा रजस्वला।
गर्भस्रावेऽपि सा स्नानाद्विंशतेः परतोऽशुचिः
गर्भस्य पातने चैव स्नानात् चालनतोऽप्यथ‡।
न सन्दिग्धपरिज्ञाते चार्त्तवे शुद्धिकारणम्॥
सन्दिग्धमात्रे स्नानं स्यादित्युवाच प्रजापतिः।

---

* विद्याद्रागजे,—इति मु०।
† नैमित्तिकेन स्यादजसा भवेन्नारी रजस्वला,—इति मु०।
‡ त्वालनतोऽप्यथः,—इति स० पु०।

अतो दिवा वा रात्रौ वा मलवद्वसना यदि ॥
तद्दिनादि त्रिरात्रं स्यात्र सङ्ख्या नाडिकावशात् ।
तृतीयभागे संप्राप्ते मलं स्यान्निशि चेत् स्त्रियाः ॥
प्रातरादित्रिरात्रेण शुद्धिं तस्या विनिर्दिशेत्”—इति ।

रोगजन्यरजोऽनुवृत्तौ अस्पृश्यत्वलक्षणाशुचित्वाभावेऽपि दैवे पित्र्ये चाक्ष्येवाशुचित्वमित्याह,—

**साध्वाचारा न तावत् स्यात् रजोयावत् प्रवर्त्तते ॥१७॥**
**रजोनिवृत्तौ गम्या स्त्री गृहकर्म्मणि चैव हि ।**

रजसि निवृत्ते पश्चात् पुरुषेण गम्या भवति । उक्तपाकादि-गृहकर्मणि च योग्या भवति ।

पूर्व्वं, चतुर्थेऽहनि शुद्ध्यति,—इत्युक्तं, ततः प्राचीने दिनत्रये शुद्ध्यभावं विशदयति,—

**प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी ॥ १८ ॥**
**तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति । इति ॥**

चण्डाल्यादिगमने यावान् प्रत्यवायः तावानुदक्यागमने,—इत्य-भिप्रेत्य तैर्नामभिर्व्यवहारः । यथा कुण्डपायिनामयने ‘मासमग्निहोत्रं जुहोति’,—इति अग्निहोत्रनामनिर्द्देशेन नित्याग्निहोत्रधर्मातिदेश-स्तद्वत्[१] ।

---

(१) कुण्डे सोमपानं धर्म्मो येषां ते कुण्डपायिनः ऋत्विग्विशेषाः, तेषां कर्त्तव्ये अयनाख्ये यागे, मासमग्निहोत्रं जुहोतीत्यग्निहोत्रपदप्र-योगो दृश्यते । अग्निहोत्रपदं च नित्याग्निहोत्रे (यावज्जीवकर्त्तव्ये

यदा ज्वरादिभिरातुरस्य रजस्वलाऽभिस्पर्शने प्रत्यासन्नबन्धुमरणे वा स्नानं प्राप्नोति, तथा कथं कर्त्तव्यमित्यत आह,—

**आतुरे स्नानउत्पन्ने दशकृत्वोह्यनातुरः॥ १९॥**
**स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत् स आतुरः।**

तत्र प्रतिस्नानमातुरस्य वासोविपरिवर्त्तनीयम्। तदाहाङ्गिः,—

"आतुरस्नानउत्पन्ने दशकृत्वो ह्यनातुरः।
स्पृष्ट्वा स्पृष्ट्वाऽवगाहेत स विशुद्ध्येत आतुरः॥
वासोभिर्दशभिश्चैव परिधाय यथाक्रमम्।
दद्यात्तु शक्तितो दानं पुण्याहेन विशुद्ध्यति"—इति॥

उशनाश्चपि,—

"ज्वराभिभूता या नारी रजसा च परिप्लुता।
कथं तस्या भवेत् शौचं शुद्धिः स्यात् केन कर्मणा॥"

---

सायं प्रातःकालीने) शक्तमिति तत्प्रख्याधिकरणे (मी० १ अ० ४ पा० ३ अ०) निर्णीतम्। न च यावज्जीवाग्निहोत्रवत् कुण्ड-पायिनामयनेऽप्यग्निहोत्रपदस्य शक्तिरिति शङ्कनीयं, अनेकार्थ-त्वस्यान्याय्यत्वात्। तस्मात् कुण्डपायिनामयने अग्निहोत्रत्वा-भावात् अग्निहोत्रं जुहोतीत्यस्य यथाश्रुतार्थस्य तत्रासम्भवात् अगत्या अग्निहोत्रवत् जुहोतीति वचनव्यक्त्याश्रयणेन नित्याग्नि-होत्रस्य धर्म्मः तत्रातिदिश्यते इति सिद्धान्तः। अतएवोक्तम्। "परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेणापि वत्यर्थं गमयति"—इति। व्यक्तमिदं मीमांसादर्शने सप्तमाध्याये तृतीयपादे प्रथमा-धिकरणे।

चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचेलाऽवगाह्यापः स्नात्वा चैव पुनः स्पृशेत् ॥
दश द्वादशकृत्वो वा आचामेच्च पुनः पुनः ।
अन्ते च वाससां त्यागः ततः शुद्धा भवेत्तु सा ॥
दद्याच्च शक्तितो दानं पुण्याहेन विशुध्यति"—इति ।

तथा सूतिकामरणे स्मृत्यन्तरे विशेषोदर्शितः,—

"सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥
पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः ।
तेनैव स्नापयित्वा तु दाहं कुर्य्यात् यथाविधि"—इति ॥

रजस्वलांमरणे तु,—

"पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्व्वकम्"—इति ॥

उच्छिष्टस्य द्विजस्यान्येनोच्छिष्टेन द्विजेन शुना शूद्रेण वा संस्पर्शे शुद्धिमाह,—

**उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः ॥ २० ॥**
**उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति । इति ॥**

उच्छिष्टेन संस्पृष्टः उच्छिष्टसंस्पृष्टः, उच्छिष्टश्चासावुच्छिष्टसंस्पृष्टश्चेति विग्रहः । रजनीमुपोष्य रात्रिभोजनं परित्यजेदित्यर्थः । यत्तु अत्रिणोक्तम्,—

"उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणो ब्राह्मणेन तु ।

दशवारं जपेत् पश्चात् गायत्र्याः शोधनं भवेत्"—इति॥

तदेतदशक्तविषयम्। शुना स्पर्शे विशेषमाह सम्वर्त्तः,—

"कृतमूत्रपुरीषो वा भुक्तोच्छिष्टोऽथवा द्विजः।

श्वभिः स्पर्शे जपेत् देव्याः[१] सहस्रं स्नानपूर्व्वकम्"—इति॥

अनुच्छिष्टस्य शूद्रस्यानुच्छिष्टशूद्रस्पर्शे स्नानमात्रमुच्छिष्टस्य विप्रस्योच्छिष्टशूद्रस्पर्शे कृच्छ्रमित्याह,—

**अनुच्छिष्टेन शूद्रेण स्पर्शे स्नानं विधीयते॥ २१॥**
**तेनोच्छिष्टेन संस्पृष्टः प्राजापत्यं समाचरेत्। इति॥**

यद्यप्यनुच्छिष्टोच्छिष्टशब्दौ शूद्रविशेषणौ श्रुतौ, तथापि विधीयमानस्नानप्राजापत्यानुसारेण विप्रेऽपि तौ योजनीयौ॥

पूर्व्वं कांस्यस्य या शुद्धिरुक्ता तामनूद्य तत्र विशेषमाह,—

**भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते॥ २२॥**
**सुरामात्रेण संस्पृष्टं शुध्यतेऽग्न्युपलेखनैः। इति॥**

सुरास्पृष्टस्य कांस्यस्य न भस्मघर्षणमात्रेण शुद्धिः, किन्तु उपलेखनतापनाभ्याम्। उपलेखनं नाम शस्त्रेणोपरिभागस्य तक्षणम्। मूत्रपुरीषलेपेष्वेषैव शुद्धिः। तदुक्तं स्मृत्यन्तरे,—

"भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते।

सुरामूत्रपुरीषैस्तु शुध्यतेऽग्न्युपलेखनैः॥

आमिषेण तु यल्लिप्तं पुनर्दाहेन शुध्यति"—इति॥

---

(१) देव्या गायत्र्याः।

गवाघ्रातादीनां दशकृत्वो भस्मघर्षणेन शुद्धिरित्याह,—

**गवाघ्रातानि कांस्यानि श्वकाकोपहतानि च ॥ २३ ॥**
**शुध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्टानि यानि च। इति ॥**

एतदेव शातातपोऽप्याह,—

"गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः।
दशभिर्भस्मभिः शुद्धिः श्वकाकोपहतेषु च"—इति॥

गण्डूषाद्युपहतस्य भूनिक्षेप इत्याह,—

**गण्डूषं पादशौचं च कृत्वा वै कांस्यभाजने ॥ २४ ॥**
**षण्मासान् भुवि निक्षिप्य उद्धृत्य पुनराहरेत् । इति ॥**

अयञ्च भूनिक्षेपः कांस्यकारघर्षणस्याप्युपलक्षणम् । अतएवाङ्गिराः,—

"गण्डूषं पादशौचञ्च कृत्वा वै कांस्यभाजने।
षण्मासं भुवि निक्षिप्य पुनराकारमादिशेत्"—इति॥

यत्तु बौधायनेनोक्तम्। "तैजसानां पात्राणामुच्छिष्टोपहतानां त्रिःसप्तकृत्वः परिमार्जनं, तथा मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां पुनः करणम्" इति। तच्च पुनः करणं चिरलेपविषयं द्रष्टव्यम्। आयसादीनां कटाहादीनां सीसपात्रस्याप्यत्यन्तोपहतस्य शुद्धिमाह,—

**आयसेष्वायसानां च सीसस्याग्नौ विशोधनम् ॥२५॥ इति ॥**

अयोमयेषु घर्षणसाधनेषु आयसानां घर्षणेन शोधनं, सीसस्य त्वग्नौ

प्रविलापनम्। अधःसंघर्षणमश्मसंघर्षणस्याप्युपलक्षणम्। अतएव मार्कण्डेयपुराणम्,—

"पात्राणाञ्च मनुष्याणामम्बुना शौचमिष्यते।
तथाऽऽयसानान्तोयेन लक्ष्मसंघर्षणेन च"—इति॥

तोयेनेत्यल्पोपहतविषयम्।

गजदन्तादीनां शुद्धिमाह,—

**दन्तमस्थि तथा शृङ्गं रौप्यसौवर्णभाजनम्।**
**मणिपाषाण*शङ्खाश्चेत्येतान् प्रक्षालयेज्जलैः॥ २६॥**
**पाषाणे तु पुनर्घर्षः शुद्धिरेवमुदाहृता। इति।**

अस्थिशब्देन गजास्थ्यादिनिर्मितं करण्डकादि, शृङ्गशब्देन महिषशृङ्गादिनिर्मितं करण्डकादि। मणिपात्राणि प्रवालस्फटिकादीनि। पाषाणपात्रस्य तु प्रक्षालनं पाषाणान्तरघर्षणं चेत्युभयं वेदितव्यम्। जलैः प्रक्षालनं निर्लेपविषयम्। तदाह मनुः,—

"निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुद्ध्यति।
अब्जमश्ममयञ्चैव राजतं चानुपस्कृतम्"—इति॥

अब्जं शङ्खशुक्त्यादि। अनुपस्कृतं निर्लेपम्। यत्तु मनुनैवोक्तम्,—

"तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च।
भस्मनाऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः"—इति॥

तत् सलेपविषयम्। शुद्ध्यन्तराणि मुनिभिर्दर्शितानि। तत्र शातातपः,—

* मणिपात्राणि,—इति मु०।

"सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं तथा ।

रीतिकासीसलोहानि(१) शुद्ध्यन्त्यम्लप्रघर्षणात्"—इति ॥

यमः,—

"रजतस्य सुवर्णस्य ताम्रस्य त्रपुणस्तथा ।

रीत्ययःकांस्यसीसानां भस्मना शौचमिष्यते"—इति ।

उशनसापि । "सुवर्णरजतताम्रत्रपुसीसकांस्यानामद्भिरेव भस्मसंयुक्ताभिर्मणिमयानामद्भिरेव मृत्संयुक्ताभिस्तैजसानां चोच्छिष्टानां भस्मना त्रिः प्रक्षालनं, कनकमणिरजतशङ्खशुक्त्युपलानां वज्रविद्लन रज्जुचर्मणामद्भिः शौचम्"—इति । विष्णुः । "विण्मूत्ररेतःशवरक्तलिप्तमावर्त्तनोपलेपनतापनैर्वा* त्रिःसप्तकृत्वः परिमार्जनैर्वा भस्मना च† शुद्ध्यति । तैजसानाम्"—इति । एतेषां सर्व्वेषां यथायोगं चिरक्षिप्रसंलेपभेदेन व्यवस्था द्रष्टव्या ।

भाण्डस्य धान्यस्य चोच्छिष्टाभ्युपहतौ शुद्धिमाह,—

**मृण्मये दहनात् शुद्धिर्धान्यानां मार्जनादपि ॥२७॥ इति ॥**

दहनं सलेपविषयम् । अतएव बौधायनः । "मृण्मयानां पात्राणामुच्छिष्टसमन्वितानामवचूर्णनम्‡, उच्छिष्टलेपोपहतानां पुन-

---

* मावर्त्तनोल्लेखनतापनाद्यैः,—इति मु० ।

† भस्माम्बुना,—इति मु० ।

‡ पात्राणामुच्छिष्टसमारब्धानां प्रक्षालनं,—इति मु० ।

---

(१) त्रपु रङ्गं, रीतिका पित्तलम् ।

दहनं मूत्रपुरीषरेतःप्रभृतिभिरुत्सर्गः"—इति । एतच्च श्वादिस्पर्श-विषयम् । चण्डालादिस्पर्शे तु स्मृत्यन्तरोक्तं द्रष्टव्यम्,—

"चण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापिवा ।
चालनेन विशुद्ध्येत परित्यागान्महीमयम्"—इति ॥

मार्ज्जनं प्रोक्षणं प्रक्षालनं वा । तत्रोभयोर्व्यवस्थितविषयत्वं दर्शयति मनुः—

"अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते"—इति ॥

विष्णुः । "अल्पस्य धान्यस्य यन्मात्रमुपहन्यते तन्मात्रमुत्सृज्य शेषस्य खण्डनप्रक्षालने कुर्य्यात्" इति । बौधायनः । "चण्डालादिस्पर्शनेऽनेकपुरुषोद्धार्य्याणां प्रोक्षणं मूत्रादिसम्पर्के तन्मात्रापहारः* असृक्पांश्वादिद्रव्यसंयोगे निस्तुषीकरणम्"—इति । कश्यपः । "प्रोक्षणपर्य्यग्निकरणावगाहनैः व्रीहियवगोधूमानां विमर्शनप्रोक्षणैः फलीकृतानां विघर्षणविदलनप्रोक्षणैः शमीधान्यानाम्"—इति । अस्यार्थः । अनेकपुरुषधार्य्याणां व्रीहियवगोधूमानां यथाक्रमं प्रोक्षणपर्य्यग्निकरणावगाहनैः शुद्धिः । अवगाहनं प्रक्षालनम् । व्रीह्यादितण्डुलानां फलीकृतानां विमर्शनेन । विमर्शनं कराभ्यां घर्षणम् । खण्डनेन शुक्लीकरणं शमीधान्यानां मुद्गादीनां, अनेकपुरुषधार्य्याणां घर्षणेन । आदिपुराणे,—

"गृहदाहे समुत्पन्ने संस्थिते पशुमानुषे ।
अभोज्यः स्यात्तदा व्रीहिर्धातुद्रव्यस्य संग्रहे ॥

---

* तन्मात्रोद्धारः,—इति मु० ।

> मृण्मयेनावगुप्तानां मध्ये पुरि वतिष्ठताम्[१] ।
> यवमाषतिलादीनां न दोषो मनुरब्रवीत् ॥
> ततः संक्रममाणेऽग्नौ स्थानस्थाने च दह्यते ।
> न च प्राणिवधो यत्र केवलं गृहदीपनम् ॥
> तत्र द्रव्याणि सर्व्वाणि गृह्णीयादविचारयन्"—इति ।

वेण्वादीनामेकैकस्याल्पोपहतानां महोपहतानां चैकविधां शुद्धि-माह,—

**वेणुवल्कलचीराणां क्षौमकार्पासवाससाम् ।**
**और्णनेत्रपटानाञ्च प्रोक्षणात् शुद्धिरिष्यते ॥ २८ ॥ इति ॥**

वेणुशब्देन वेणुकार्य्याणि कटव्यजनादीनि गृह्यन्ते । वल्कलचीराण्यरण्यवासिनां प्रसिद्धानि । क्षौमं दुकूलम् । कार्पासवासांसि* प्रसिद्धानि । और्णः कम्बलः । नेत्रपटा अरण्यवासिनामेव प्रसिद्धा भूर्जत्वगादयः । अस्याश्चाल्पविषयशुद्धित्वं देवलो दर्शयति,—

> "और्णकौशेयकुतपपट्टक्षौमदुकूलकाः ।
> अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः ॥
> तान्येवामेध्ययुक्तानि क्षालयेच्छोधकैर्द्विजैः ।
> धान्यकल्कैस्तु फलजै रसैः क्षीरानुगैरपि"—इति ॥

एकैकस्यां लेपोपहतौ याज्ञवल्क्य आह,—

---

* क्षौमकार्पासवासांसि,—इति मु० ।

† अनेकस्य,—इति मु० ।

---

(१) वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः,—इत्यनुशासनात् अवतिष्ठतामित्यत्राकारलोपः ।

"सोष्णैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम्।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपन्तथा॥
सगौरसर्षपैः क्षौमं पुनः पाकाच्च मृण्मयम्"—इति।

आविकं कम्बलः, कौशेयं क्रमिकोषोत्थं, अंशुपट्टं नेत्रपटः, अरिष्टानि पुत्रजीवफलानि, कुतपः आवन्तेय*च्छागरोमनिर्मितः कम्बलविशेषः। मनुरपि,—

"कौशेयाविकयोरूषैः कुतपानामरिष्टकैः।
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः॥
क्षौमवत् शङ्खशृङ्गाणामस्थिदन्तमयस्य च।
शुद्धिर्विजानता कार्य्या गोमूत्रेणोदकेन वा"—इति॥

अङ्गिरा अपि,—

"शौचमाविकरोम्णान्तु†वाय्वग्न्यर्केन्दुरश्मिभिः।
रेतःस्पृष्टं शवस्पृष्टमाविकं न‡ प्रदुष्यति"—इति॥

अत्र च रेतःस्पर्शोलेपरहितो विवक्षितः।

मुञ्जादीनां वेणुवत् शुद्धिमाह,—

**मुञ्जोपस्करशूर्पाणां शणस्य फलचर्मणाम्।**
**तृणकाष्ठस्य रज्जूनामुदकाभ्युक्षणं मतम्॥ २९॥ इति॥**

मुञ्जो रशनादिप्रकृतिभूतस्तृणविशेषः, तेन सम्पादितोविष्टरादि-

---

* पार्व्वतेय,—इति मु०।

† शौचं मत्स्यार्घरोमाणां,—इति शा० स०।

‡ माविकञ्च, —इति शा०।

रुपस्करः । यद्यपि पूर्व्ववचने वेणुविकाराणां कटादीनां प्रोक्षण-स्योक्तत्वात्तेनैव शूर्पशुद्धिरभिहिता, तथापि तण्डुलफलीकरणादौ तल्लेपस्य लग्नत्वात् शुद्ध्यन्तराशङ्का भवति, तन्मा भूदिति पुनरिह ग्रहणम् । शणो गोण्यादिहेतुर्व्वल्कलविशेषः, तेन तद्विकाराः सर्व्वेऽपि विवक्षिताः । फलमाम्रादि । चर्म कृष्णाजिनादि । तृणञ्च काष्ठञ्च तृणकाष्ठम् । रज्जवः प्रसिद्धाः । अत्र फलशब्देन शाकमूलादीन्युप-लक्ष्यन्ते । अतएव याज्ञवल्क्यः,—

"शाकरज्जुमूलफल*वासोविदलचर्मणाम् ।
पात्राणाञ्चमसानाञ्च वारिणा शुद्धिरिष्यते"—इति ॥

तत्र वारिशुद्धिः प्रोक्षणं प्रक्षालनञ्च, तदुभयं यथायोगं द्रष्टव्यम् । अतएव मनुना धान्यं दृष्टान्तितम्,—

"चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च ।
शाकमूलफलानाञ्च धान्यवत् शुद्धिरिष्यते"—इति ॥

काश्यपोऽपि । "तृणकाष्ठरज्जुमञ्जुचर्मवेणुविदलफलपत्रमूलादीनां चैलवत् शौचं, मृद्दारुचर्मणाञ्चात्यन्तोपहतानां त्यागः"—इति । ब्रह्माण्डपुराणे—

"शवविण्मूत्रशुक्रैस्तु दूषितञ्च मृदम्बुभिः† ।
शोध्यादौ शोधनीयञ्च गोमूत्रक्षारवारिभिः‡ ॥
रज्जुवल्कलपत्राणाञ्चमसाणाञ्च चर्मणाम्§ ।

---

* शाकमूलफलादीनां,—इति शा० ।
† मृदेव हि,—इति शा० ।
‡ क्षीरवारिभिः,—इति मु० ।
§ चमसानामनुचर्मणाम्,—इति मु० ।

कृत्वा शौचं ततः शुद्धिः गोवालैर्घर्षणं पुनः”—इति॥

व्यासोऽपि,*—

“वस्त्रं मृदम्भसा शुद्धं रज्जुर्वैदलमेव च।

रज्ज्वादिकञ्चातिदुष्टं त्याज्यं तन्मात्रमेव च”—इति॥

उशनाऽपि। “मूलफलपुष्पभूमितृणदारु†पलालधान्यानामभ्युक्षणम्”—इति। यत्तु बौधायनेनोक्तम्। “कृष्णाजिनानां बिल्वतण्डुलैः”—इति। पैठीनसिरपि। “रौरवाद्यजिनानां‡ बिल्वतण्डुलवत्”—इति। तत् नूतनचर्मविषयम्।

सतूलशय्यादीनां शुद्धिमाह,—

**तूलिकाद्युपधानानि रक्तवस्त्रादिकानि च।**
**शोषयित्वाऽऽतपेनैव§ प्रोक्षणात् शुद्धिता पुनः||॥ ३०॥**

तूलं शाल्मलीफलादिजन्यं, तेन निर्मिता शय्या तूलिका। आदिशब्देनासनोपाश्रयादीनि गृह्यन्ते। उपधानमुत्शीर्षकम्। तूलिकादीनि चोपधानञ्च तूलिकाद्युपधानानि। रक्तवस्त्रं माञ्जिष्ठम्। आदिशब्देन कौसुम्भहारिद्रादीनि। एतेषाममेध्यादिलेपरहितोपहतौ¶ आतपशोषणं प्रोक्षणञ्च। एतच्च करोन्मार्ज्जनस्याप्युपलक्षणम्। अतएव देवलः,—

---

* वसिष्ठोऽपि,—इति मु०।

† तृणदारु,—इति नास्ति शा०।

‡ रौरववस्त्राजिनानां,—इति मु०।

§ शोषयित्वाऽर्कतापेन,—इति शा०।

|| शुचितामियात्,—इति मु०।

¶ एतेषाममेध्यादिलेपोपहतौ,—इति मु०।

"तूलिकाद्युपधानानि पुष्परक्ताम्बराणि च ।
शोधयित्वा तथा किञ्चित् करैरुन्मार्ज्जयेन्मुहुः ॥
पश्चात्तु वारिणा प्रोक्ष्य शुचीन्येवमुदाहरेत्*"—इति ।

अलेपोपहतौ स एवाह,—

"अल्पशौचे भवेत् शुद्धिः शोषणप्रोक्षणादिभिः ।
तान्येवामेध्ययुक्तानि क्षाल्यात् चारापयानि चेत्† ॥
तान्यथातिमलिष्ठानि यथावत् परिशोधयेत्"—इति ।

निर्लेपकौसुम्भादौ षट्त्रिंशन्मतेऽभिहितम्,—

"कुसुम्भकुङ्कुमैरक्तं तथा लाक्षारसेन वा ।
प्रोक्षणेनैव शुध्येत चण्डालस्पर्शने सति"—इति ॥

शङ्खोऽपि,—

"कुसुम्भकुङ्कुमानाञ्च चौर्णकार्पासयोस्तथा ।
प्रोक्षणात् कथिता शुद्धिरित्याह भगवान्मनुः"—इति ॥

द्रव्योपहतौ शुद्धिर्व्वर्णिता । इदानीं श्वादिभिरिव मार्ज्जारादिभिरप्युपहते शङ्काप्रसक्तावपवदति,—

**मार्जारमक्षिकाकीटपतङ्गकृमिदर्दुराः ।**
**मेध्यामेध्यं स्पृशन्तोऽपि नोच्छिष्टं मनुरब्रवीत्॥३१॥इति॥**

मेध्यञ्चामेध्यञ्च मेध्यामेध्यम् । यद्यपि मार्जारादय उभयं

---

* पुनस्तानि समाहरेत्,—इति श्रा० ।

† निर्णेज्यानि विपर्य्यये,—इति मु० ।

स्पृशन्तोवर्त्तन्ते, तथापि सेध्यं तावता नोच्छिष्टमिति योजनीयम्।

भूमिस्पृष्टोदकादावशुद्धिमपवदति,—

**मही स्पृष्ट्वाऽऽगतं तोयं याश्चाप्यन्योन्यविप्रुषः।**
**भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत् ॥३२॥ इति॥**

पादप्रक्षालनाचमनादावधःपतितं यदुदकं भूमिं स्पृष्ट्वा पुनर्बिन्दुरूपेणागत्य स्पृशति, ये चान्योन्यमुखोद्गता विन्दवः सम्भाषणे शरीरे पतन्ति, यश्च स्नेहोभोजनानन्तरं प्रक्षालनेनानिर्हार्य्यः, तत् सर्व्वं नाशुचितापादकम्।

मुखान्तर्गततांबूलादीनामुच्छिष्टशङ्कामपवदति,—

**ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने।**
**मधुपर्के च सोमे च नोच्छिष्टं धर्मतो विदुः ॥ ३३॥ इति॥**

ताम्बूलस्य इक्षुश्च फलं च ताम्बूलेक्षुफलम्। पूर्व्ववचनोक्तोऽपि भुक्तस्नेहोऽत्र दृष्टान्तत्वेन पुनरुपात्तः। मधुपर्कोयज्ञविवाहादौ दध्यादिभक्षणम्। सोमो यागे सोमपानम्। एतेषु नास्त्युच्छिष्टदोषः।

रथ्योदकादौ प्रयत्नेन कर्त्तव्यः शुद्धिविशेषो नास्तीत्याह,—

**रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च।**
**मारुतार्केण शुद्ध्यन्ति पक्केष्टकचितानि च* ॥३४॥इति॥**

पक्केष्टकचितानि चैत्यवृक्षवेदिकादीनि। निर्दिष्टानामेतेषां चण्डा-

---

* 'पक्व' स्थाने 'पक्क' पाठः प्रायः सर्व्वत्र मा० पुस्तकादिषु।

लादिस्पर्शेऽपि वाय्वातपाभ्यां शुद्धिः । तथाच याज्ञवल्क्यः,—

"रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतार्केण शुद्ध्यन्ति पक्केष्टकचितानि च ॥
पन्थानश्च विशुद्ध्यन्ति सोमसूर्य्यांशुमारुतैः"—इति ।

बौधायनोऽपि,—

"आसनं शयनं यानं नावः पन्थास्तृणानि च ।
मारुतार्केण शुद्ध्यन्ति पक्केष्टकचितानि च"—इति ॥

उपरिभागस्पर्शे शङ्ख आह,—

"रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा पुनः ।
नाभेरूर्द्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति"—इति ॥

अधोभागस्पर्शे यमआह,—

"न कर्द्दमन्तु वर्षासु प्रविश्य ग्रामसङ्करम्* ।
जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्मृत्तिका स्मृता"—इति ॥

उदकपानगतधारादीनामशुद्धिमपवदति,—

**अदुष्टाः सन्तता धारा वातोद्धूताश्च रेणवः ।**
**स्त्रियोवृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ॥३५॥ इति॥**

कमण्डल्वादिकात् निर्गत्य मुखपर्य्यन्तमविच्छिन्नाअपि उदकधारा नोच्छिष्टाः।नानाविधाशुचिप्रदेशादायुनोत्थापिताअपि रेणवः

* ग्रामसंकरं ग्रामामेध्यप्रक्षेपादिस्थानम् । ग्रामसंस्करम्,—इति सं पाठः ।

स्पर्शार्हाः। पुरुषवत् प्रातःस्नानाद्यभावेऽपि योषिदादयः शुद्धाः। रेणुशुचित्वं रासभादिभ्योऽन्यत्र द्रष्टव्यम्। तदाह शातातपः,—

"रेणवः शुचयः सर्व्वे वायुना समुदीरिताः।
अन्यत्र रासभाजाविश्वसमूहान्यवाससाम्"—इति॥

स्मृत्यन्तरेऽपि,—

"श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम्*।
अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते"—इति॥

गवादीनां रेणवो न केवलं दोषरहिताः प्रत्युत प्रशस्ताः। तदाहोशना,—

"गवाश्वरथयानानां प्रशस्ता रेणवः सदा"—इति।

विषयविशेषेण शुद्धिमाह याज्ञवल्क्यः,—

"रश्मिरग्निरजश्छाया गौरश्वोवसुधाऽनिलः।
विप्रुषोमक्षिका स्पर्शे वत्सः प्रस्रवणे शुचिः"—इति॥

विप्रुषोनीहारविन्दवः। एते चण्डालादिस्पृष्टा अपि स्पर्शे शुचयः। वत्सऊधोगतक्षीराकर्षणे शुद्धः। वत्सन्यायोबालस्तन्यपानेऽप्यवगन्तव्यः। तथाच वशिष्ठः,—

"अहताश्च मृगामेध्याः पातितं च द्विजैः फलम्।
बालैरनुपरिक्रान्तं स्त्रीभिराचरितञ्च यत्"—इति॥

उशना। "गौर्मेध्या पृष्ठे पुरस्तादजादयः स्त्रियः सर्व्वतोहृदयमासामशुचि"—इति। वृहस्पतिरपि,—

---

* मार्जनीस्त्रीश्वखरोष्ट्रसूकरग्रामपक्षिणाम्,—इति पा०।

"पादौ शूचौ ब्राह्मणानामजाश्वस्य मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्व्वगात्राणि योषिताम्"—इति॥

सुमन्तुः । "स्त्रीबालमशकमक्षिकामार्जारमूषिकाच्छायाऽऽसनशयनयानाम्बुविप्रुषो नित्यं मेध्याः"—इति । बृहस्पतिहारीतौ,—

"मार्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः"—इति ।

शङ्खः । "मार्जारसंक्रमे शुचिः"—इति । मनुः,—

"नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।
ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति स्थितिः"—इति ॥

यमः,—

"आसनं शयनं यानं स्त्रीमुखं कुतपाङ्कुरम् ।
न दूषयन्ति विद्वांसो यज्ञेषु चसमं तथा ॥
गोरजोविप्रुषश्छाया मक्षिकाः शलभाः कुशाः ।
अश्वोहस्ती रणश्छत्रं रश्मयश्चन्द्रसूर्य्ययोः ॥
भूमिरग्निरजोवायुरापोदधि घृतं पयः ।
सर्व्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि नित्यशः ॥
आपः शुद्धा भूमिगताः शुचिर्नारी पतिव्रता ।
शुचिर्धर्मपरोराजा सन्तुष्टो ब्राह्मणः शुचिः ॥
नित्यमास्यं शुचिः स्त्रीणां शकुनिः फलपातने ।
प्रश्नोत्तरे शुचिर्विन्दुः* श्वा मृगग्रहणे शुचिः"—इति ॥

पैठीनसिरपि । "स्त्रीणां मुखं रतिसंसर्गी"—इति । वशिष्ठाचि-

---

* प्रसवे तु शुचिर्वत्सः,—इति मु० ।

† स्त्रीमुखं रतिसंसर्गे श्वा मृगग्रहणे शुचिः,—इति मु० ।

बौधायनशातातपौ,—

"स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः"—इति।

मनुः,—

"श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत्।
क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः"—इति॥

देवलः,—

"तरवः पुष्पिता मेध्या ब्राह्मणाश्चैव सर्व्वदा।
भस्म चौद्रं सुवर्णं च सदर्भाः कुतपास्तिलाः॥
अपामार्गशिरीषार्कपद्ममामलकं मणिः।
माल्यानि सर्षपादूर्व्वाः सदा भद्राः प्रियंगवः॥
अक्षताः सिकता लाजा हरिद्रा चन्दनं यवाः।
पलाशखदिराश्वत्थास्तुलसी धातकी वटः॥
एतान्याहुः पवित्राणि ब्रह्मज्ञा हव्यकव्ययोः।
पौष्टिकानि मलघ्नानि शोधनानि च देहिनाम्॥
अकल्मषैः समिद्धोऽग्निर्द्दुर्मनुष्यैरदूषितः।
सर्व्वेषामप्यशौचानां समर्थः शोधनाय सः॥
अग्नेर्वृषलभुक्तस्य ग्रहणं नास्त्यनापदि।
श्वपाको वृषलोभोक्तुं ब्राह्मणाग्निं च नार्हति॥
चण्डालाग्नेरमेध्याग्नेः सूतकाग्नेश्च कर्हिचित्।
पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्॥
अग्राह्या मृद्भवेत् शुद्धा सद्णा विण्मूत्रदूषिता"—इति।

ब्रह्मपुराणेऽपि,—

"ग्रामाद्धस्तशतं त्यक्त्वा नगरे च चतुर्गुणम् ।
भूमिः सर्व्वत्र शुद्धा स्यात् यत्र लेपो न दृश्यते"—इति ॥

लेपे तु याज्ञवल्क्यश्चाह,—

"भूशुद्धिर्मार्जनाद् दाहात् कालाद् गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपाद् गृहं मार्जनलेपनात्"—इति ॥

यमोऽपि,—

"खननात् मरणात् दाहादभिवर्षेण लेपनात् ।
गोभिराक्रमणात् कालाद् भूमिः शुद्ध्यति सप्तधा"—इति ।

देवलस्त्वमेध्यदुष्टमलिनत्वभेदैस्त्रिविधामशुद्धिं तद्विशुद्धिञ्च विशदयति,—

"यत्र प्रसूयते नारी म्रियते दह्यते नरः ।
चण्डालाध्युषितं यत्र यत्र विष्ठादिसङ्गतिः ॥
एवंकश्मलभूयिष्ठा भूरमेध्या प्रकीर्त्तिता ।
श्वसूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् ॥
अङ्गारतुषकेशास्थिभस्माद्यैर्मलिना भवेत् ।
पञ्चधा च चतुर्द्धा च भूरमेध्या विशुद्ध्यति ॥
दुष्टाऽपि सा त्रिधा द्वेधा शुद्ध्यते मलिनैकधा" ।

तत्र पञ्चविधा शुद्धिर्मनुना दर्शिता,—

"सम्मार्ज्जनोपाञ्जनेन सेकेनोल्लेखनेन च ।
गवाञ्च परिवासेन भूमिः शुध्यति पञ्चधा"—इति ॥

एतेष्वेव पञ्चविधेषु यथायोगं चातुर्विध्यादिकं योजनीयम् । यद्वा, दहनादयः पञ्चविधा देवलोक्ता द्रष्टव्याः ।

"दहनात् खननाच्चैव उपलेपनधावनात् ।
पर्य्यन्यवर्षणात् भूमेः शौचं पञ्चविधं स्मृतम्"—इति ॥

गृहशुद्धिं संवर्त्त आह,—

"गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषणे ।
संप्रोक्ष्य मृण्मयं भाण्डं सिद्धमन्नं तथैव च ॥
गृहादपास्य तत् सर्वं गोमयेनोपलेपयेत् ।
गोमयेनोपलिप्याथ धूमेराघ्रापयेद् बुधः ।
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिणा ॥
सर्वमभ्युक्षयेद्वेश्म ततः शुद्ध्यत्यसंशयम्" ।

बौधायनः । "उद्वन्धशवोपघाते वेश्मनोभित्तितक्षणम्"—इति।

देहविषये शुद्ध्यशुद्धी विभजते मनुः,—

"ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ।
यान्यधस्तादमेध्यानि देहाच्चैव मलाश्च्युताः ॥
विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्य्यादेयमर्थवत् ।
दैहिकानां मलानाञ्च शुद्धिषु द्वादशेष्वपि"—इति ॥

अत्र च कर्णविट्प्रभृतिषूत्तरेषु षट्सु मृद्ग्रहणं वैकल्पिकम् ।

"आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये ।
उत्तरेषु तु षट्स्वद्भिः केवलाभिस्तु शुद्ध्यति"—इति

स्मृत्यन्तरे वचनात् । मृदम्भसोरियत्तामाह मनुः,—

"यावन्नापैत्यमेध्याक्तो गन्धोलेपश्च तत्कृतः ।
तावत् मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु"—इति ।

विद्यमानाऽप्युपहतिर्यत्र न दृष्टा, तत्र तद्दर्शनात् पूर्वं शुद्धमेव तद्वस्तु । तदाह सएव,—

"त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते"—इति ॥

याज्ञवल्क्योऽपि,—

"वाक्प्रशस्तमम्बुनिर्णिक्तमदृष्टञ्च सदा शुचि" ।

येयं पूर्वोक्ता शुद्धिः, सा सर्वाऽप्यनापद्विषयेत्यभिप्रेत्याह,—

**देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि ।
रक्षेदेव स्वदेहादि* पश्चाद्धर्मं समाचरेत् ॥ ३६ ॥**

देशभङ्गः परसैन्यापादितः । प्रवासस्तीर्थयात्रादौ परराष्ट्रावस्थानम् । व्याधयो ज्वरादयः । व्यसनानि स्वामिकोपादिजनितानि(१) । एतेषु प्राप्तेषु श्रद्धाजाड्येन शुद्ध्यशुद्धी न विचारयितव्ये, किं तर्हि शुचिभिरशुचिभिर्वा द्रव्यैरात्मपुत्रकलत्रादीनां यथा रक्षा भवति तथा कृत्वा शान्तायामापदि पश्चाद्द्रव्यशुद्ध्यादिरूपं शास्त्रोक्तं धर्ममाचरेत् । रक्षेदेव स्वदेहादीत्यमुमर्थं प्रपञ्चयति,—

---

* स्वदेहानि,—इति मु० । एवं परत्र ।

---

(१) तथाच व्यसनपदेनात्र स्वामिकोपादिजनिता विपदुच्यते । स्वामिकार्य्यजनितानि,—इति पाठे स्वामिकार्य्यजनिता विपदेवार्थः ।

येन केन च धर्मेण मृदुना दारुणेन च।
उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत् ॥ ३७ ॥

शुद्धद्रव्यादिसम्पादितो धर्मो मृदुः, तद्विपरीतो धर्मो दारुणः, स्तन्यपानमांसभक्षणादि। तयोर्मध्ये येन केनापि व्याध्यादिभिर्दीनमात्मानमापन्नः उद्धृत्य समर्थोव्याध्यादिरहितो यथाशास्त्रं धर्ममाचरेत्।

तत्राचरणीयो धर्मो द्विविधः। आचारकाण्डोक्तविहितानुष्ठानप्रतिषिद्धवर्जनरूपएकः। प्रायश्चित्तकाण्डोक्तविधिनिषेधातिक्रमसमाधानरूपोऽपरः। तदुभयं विविच्योभयत्रापि शान्तापदेवाधिकारीत्याह,—

आपत्काले तु निस्तीर्णे शौचाचारन्तु चिन्तयेत्।
शुद्धिं समुद्धरेत् पश्चात् स्वस्थो धर्मं समाचरेत् ॥ ३८ ॥

शौचाचारमित्यनेन प्रथमकाण्डोक्तो धर्मः परामृष्टः। शुद्धिमित्यनेन प्रायश्चित्तकाण्डोक्तो धर्मो निर्दिष्टः। शुद्धो यथा भवति, तथा पापात् समुद्धरेदित्यर्थः। स्वस्थ इत्युपसंहारः। उक्तं द्विविधमपि धर्मं स्वस्थएव समाचरेत्, न त्वापन्नः। एतदभिप्रेत्य याज्ञवल्क्य आह,—

"क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः।
निस्तीर्य्य तामथात्मानं पावयित्वा न्यसेत् सुधीः"—इति॥

आख्याय सप्तमेऽस्मिन्नध्याये द्रव्यशुद्धिरवशिष्टा ।
सैषा माधवविभुना व्याख्यायि पराशरस्मृतौ विदुषा ॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीर-बुक्कभूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां सप्तमोऽध्यायः ॥०॥

## अष्टमोऽध्यायः ।

सप्तमाध्याये द्रव्यशुद्धिः प्रतिपादिता। तत्रान्ते, शुद्धिं समुद्धरेदित्युक्तम् । तत्रोद्धारप्रकारः प्रकीर्णकादिप्रायश्चित्तरूपश्चतुर्थादिषु त्रिष्वध्यायेषूपवर्णितः । अथावशिष्ट उपवर्णनीयः । षष्ठाध्याये च वैश्यं वा क्षत्रियं वाऽपीत्यादिनोपपातकानां प्रायश्चित्तान्युपवर्णयन् बहुवक्तव्यसद्भावादुपपातकविशेषस्य गोवधस्य प्रायश्चित्तं तत्रोपेक्षितम् । तदिदानीमध्यायद्वयेन विवक्षुरादौ मुनिविप्रतिपत्तिं सूचयितुं पृच्छति,—

**गवां बन्धनयोक्त्रेषु भवेन्मृतिरकामतः ।**
**अकामकृतपापस्य प्रायश्चित्तं कथं भवेत् ॥ १ ॥**

योक्त्राणि पाशाः, बन्धनार्थानि योक्त्राणि बंधनयोक्त्राणि। तेषु बद्धानां गवामितस्ततः सञ्चरणादिना गलनिरुद्धानां कथंचित् मृतिर्भवेत्। सा चाकामकृता, पुरुषेण तन्मरणाय प्रयत्नस्याकृतत्वात्। तादृशस्य गोवधस्य प्रायश्चित्तं वक्तव्यम्। सर्वमुनिसम्मतं मुख्यं प्रायश्चित्ताधिकारं द्योतयितुमकामकृतस्येत्यनुवादः। कामकृतस्य तु प्रायश्चित्तं कैश्चिदेव मुनिभिरभ्युपगम्यते न तु सर्व्वैः। तदाह मनुः,—

"अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः ।
कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्"—इति।

आपस्तम्बोऽपि,—

"अकामकृतपापानां ब्रुवन्ति ब्राह्मणा व्रतम् ।

कामकारकृतेऽप्येके द्विजानां वृषलस्य च"—इति ।

देवलोऽपि,—

"यत् स्यादनभिसन्धाय पापं कर्म सकृत् कृतम् ।

तस्येयं निष्कृतिः प्रोक्ता धर्मविद्भिर्मणीषिभिः ॥

विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम् ।

तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ॥

अभिसन्धिकृते पापे सकृदा नेह निष्कृतिः ।

अपरे निष्कृतिं ब्रूयुरभिसन्धिकृतेऽपि च"—इति ॥

बौधायनस्तु कामकृतस्य प्रायश्चित्ताभावमाह,—

"अमत्या ब्राह्मणं हत्वा दुष्टो भवति धर्मतः ।

ऋषयो निष्कृतिन्तस्य वदन्त्यमतिपूर्व्वके ॥

मतिपूर्व्वं हते तस्मिन् निष्कृतिर्नोपलभ्यते"—इति ।

छागलेयोऽपि,—

"प्रायश्चित्तमकामानां कामात्प्राप्तौ न विद्यते"—इति ।

अङ्गिरास्तु कामकृतस्य द्विगुणं व्रतमाह,—

"अकामतः कृते पापे प्रायश्चित्तं न कामतः ।

स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्व्वके"—इति ॥

एवञ्च कामकृते विप्रतिपत्तावपि[१] अकामकृते तदभावात्ताहृशः सर्व्वसम्मतो मुख्याधिकारी ।

(१) व्याहतमेकार्थं दर्शनं विप्रतिपत्तिः । कामकृते प्रायश्चित्तमस्तीत्येकेषां दर्शनं, नास्तीत्यन्येषाम् । ते एते परस्परविरुद्धे दर्शने एकस्मिन विषये प्रवर्त्तमाने विप्रतिपत्तिं प्रयोजयतः ।

अत्रेदं विचार्य्यते। भवत्वकामकृतस्य प्रायश्चित्तसद्भावे मुनीनामविवादः, कामकृतस्य तूक्तरीत्या मुनिविप्रतिपत्तौ को निर्णय इतीदं विचार्य्यते।

अत्र केचिन्निर्णयमाहुः। द्विविधा हि पापस्य शक्तिः; नरकोत्पादिका, व्यवहारविरोधिका चेति। अतस्तन्निवर्त्तकस्य प्रायश्चित्तस्यापि शक्तिर्द्विधा भिद्यते; नरकनिवारिका, व्यवहारजननी चेति। तत्र प्रायश्चित्ताभाववादिनां मुनीनां नरकनिवारणाभावोऽभिप्रेतः, सद्भाववादिनां तु व्यवहारजननी शक्तिरभिप्रेता। अयञ्च निर्णयो याज्ञवल्क्येन विस्पष्टमभिहितः,—

"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्।
कामतो व्यवहार्य्यस्तु वचनादिह जायते"—इति॥

अस्यायमर्थः। यदेनो ब्रह्मघातादिकमज्ञानकृतं, तद्विहितैर्द्वादशवार्षिकादिभिरपैति। कामतस्तु कृतं चेत्, स पुमान् शिष्टैर्व्यवहार्य्यः केवलमिह लोके भवति, न तु तस्य नरकापादकमेनः प्रायश्चित्तैरपैति। नन्वेवं सति प्रायश्चित्तं पापस्य काञ्चिच्छक्तिमपनुदति काञ्चिन्नेत्यर्द्धजरतीयं प्रसज्येत। न हि कुक्कुट्या एको भागः पच्यते अपरोभागः प्रसवाय कल्प्यते इति क्वचिद्दृष्टम्। न। वचनादर्द्धजरतीयस्याप्यङ्गीकार्य्यत्वात्। "किं हि वचनं न कुर्य्यात् नास्ति वचनस्यातिभार."—इति न्यायात्। अन्यथा यौक्तिकंमन्यः पापशक्तिं पायश्चित्तशक्तिं च केन दृष्टान्तेन समर्थयीत। वचनञ्च कामकृतानां द्विगुणं व्रतं दर्शयति,—

"विहितं यदकामानां कामात्तद्द्विगुणं भवेत्"—इति।

अतो द्विगुणप्रायश्चित्तेनेह लोके व्यवहारः सिध्यति। यस्तु व्यवहारमनपेक्ष्य परलोकनिर्व्वाहमेव केवलमपेक्षते, तस्य बुद्धि-पूर्व्वकेषु महापातकेषु मरणान्तिकमेव प्रायश्चित्तम्। तत्र शाता-तपः। "अकामावाप्तौ प्रायश्चित्तं, कामकारकृते त्वात्मानमवसा-दयेत्"—इति। स्मृत्यन्तरेऽपि,—

"यः कामतो महापापं नरः कुर्य्यात् कथञ्चन।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते"—इति॥

मनुरपि,—

"प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः।
लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयाऽऽत्मनः"—इति॥

तस्मात् कामकारिणो मरणेन नरकपातनिवृत्तिः, व्रतचर्य्यया तु व्यवहारसिद्धिरिति निर्णयः।

अपरे पुनरेवमाहुः। यदुक्तं, मरणान्तिकप्रायश्चित्तेन नरक-निवृत्तिरिति, तत्तथैव युक्तम्। यदुक्तं, व्रतचर्य्यया व्यवहारसिद्धिरेव न तु नरकनिवृत्तिरिति, तद्विपर्य्येति। चीर्णव्रतस्य नरकस्तावन्निव-र्त्तते, इह लोके तु तस्य न शिष्टैः सह व्यवहारोऽस्ति। एतच्च, अव्यवहार्य्यः,—इति याज्ञवल्क्यवचने पदच्छित्वा योजनीयम्। कामतश्चेत् पापं कृतं, स पापी कृतप्रायश्चित्तोऽप्यव्यवहार्य्य इह लोके जायते। तच्चाव्यवहार्य्यत्वं वचनबलादवगन्तव्यं, वचनञ्च मानवमेतत्,

"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्"—इति॥

अतः कृतप्रायश्चित्ता महापातकिनः शुद्धा अपि परलोके, शिष्टैरिह वहिः कार्य्याः। ननूपपातकिनामपि कृतप्रायश्चित्तानां वहिष्कार एवोचितः* । तथा वैयासिकं न्यायसूत्रम्। "वहिस्तूभयथापि स्मृतेराचाराच्च" (वे० ३ अ० ४ पा० ४३ सू०)—इति। अस्यायमर्थः। यद्युपपातकं यदि वा महापातकं, उभयथाऽपि कृतप्रायश्चित्ताः शिष्टैर्व्वहिः कार्य्याः। "प्रायश्चित्तं न पश्यामि[१]"—इति निन्दास्मृतेः। शिष्टाचाराच्चेति। मैवम्। अयं हि वहिष्कार-ऊर्द्धरेतोविषयः, न तु गृहस्थविषयः। ऊर्द्धरेतोविचाराणामेव तत्र प्रस्तुतत्वात्। इदञ्च कौशिकेन स्पष्टीकृतम्,—

"नैष्ठिकानां वनस्थानां यतीनां चावकीर्णिनाम्।
शुद्धानामपि लोकेऽस्मिन् प्रत्यापत्तिर्न विद्यते"—इति॥

तदेवमैहिकव्यवहाराय परलोकाय वा कामकृतानां महापातकानामुपपातकानां चास्त्येव प्रायश्चित्तमिति सिद्धम्।

प्रायश्चित्तं कथं भवेदिति सेतिकर्त्तव्यताकस्य प्रायश्चित्तस्य पृष्टत्वात् परिषदुपसत्तिरूपामाद्यामितिकर्त्तव्यतामाह,—

**वेदवेदाङ्गविदुषां धर्मशास्त्रं विजानताम्।**
**स्वकर्म† रतविप्राणां स्वकं पापं निवेदयेत् ॥२॥ इति॥**

---

* एवोदितः,—इति मु०।
† स्वधर्म्म,—इति मु०। एवं परत्र।

---

(१) आरूढ़ो नैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा"—इति समुदायः।

नामधारकविप्राणां परिषत्त्वं नास्तीति वक्ष्यमाणमर्थं हृदि निधाय तद्व्यावृत्तिसमर्थैर्विशेषणैः परिषद्योग्या ब्राह्मणा विशेष्यन्ते । यद्यपि मन्वादिधर्मशास्त्रज्ञानमात्रेण ब्राह्मणाः प्रायश्चित्तं विधातुं* समर्थाः, तथापि "शुनाऽऽलीढं हविर्यथा"—इति न्यायेन अनधीतवेदैः स्वकर्मानुष्ठानरहितैर्निर्दिष्टं प्रायश्चित्तं न पापापनोदनक्षमम् । तस्मात्, स्वकर्मनिष्ठान् वेदपारगांस्तानुपेत्य तेषामग्रे चिकीर्षितप्रायश्चित्तनिमित्तं पापमशेषेण निवेदयेत् । सेयं परिषदुपसत्तिः । तामेतामुपसत्तिमङ्गिरा अपि स्पष्टं दर्शयति,—

"अत ऊर्द्ध्वं प्रवक्ष्यामि उपस्थानस्य लक्षणम् ।
उपस्थितो हि न्यायेन व्रतादेशनमर्हति ॥
सद्योनिःसंशये पापे न भुञ्जीतानुपस्थितः ।
भुञ्जानो वर्द्धयेत् पापं परिषद् यत्र विद्यते† ॥
संशये तु न भोक्तव्यं यावत् कार्य्यविनिश्चयः‡ ।
प्रमादश्च न कर्त्तव्यो यथैवासंशयस्तथा ॥
कृत्वा पापं न गूहेत गुह्यमानं विवर्द्धते ।
स्वल्पं वाऽथ प्रभूतं वा धर्मविद्भ्यो निवेदयेत् ॥
ते हि पापे कृते वैद्या हन्तारश्चैव पाप्मनाम् ।
व्याधितस्य यथा वैद्या बुद्धिमन्तो रुजापहाः ॥
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः ॥

---

* कर्तुं,—इति शा० स० ।

† परिषद्यत्र न विद्यते,—इति शा० ।

‡ कार्य्योविनिश्चयः,—इति मु० ।

मृदुरार्जवसम्पन्नः शुद्धिं याचेत मानवः।
सचेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः॥
क्षत्रियो वाऽथ वैश्यो वा ततः पर्षदमाव्रजेत् * ।
उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं व्रजेत्॥
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत्"—इति ।

यथोक्तविशेषणरहितानां परिषत्त्वं निषेद्धुं तेषां स्वरूपमाह,—

**सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्य्ययोः।**
**अज्ञानात् कृषिकर्त्तारो ब्राह्मणा नामधारकाः॥३॥**

तत्सवितुर्व्वरेण्यमिति सवितृप्रतिपादकत्वात् सावित्री, णिकार-यकारयोर्व्विश्लेषेण चतुर्व्विंशत्यक्षरत्वाद्गायत्री। "चतुर्व्विंशत्यक्षरा गायत्री"—इति श्रुतेः[१]। सावित्र्यादीनामज्ञानाच्च मुख्या ब्राह्मणाः। ब्रह्म वेदः, तमधीत्यार्थं चावगत्य येऽनुतिष्ठन्ति, मुख्यास्ते ब्राह्मणाः। तदाहाङ्गिराः,—

* पविषदं व्रजेत्,—इति मु०।

(१) अत्रेदमवधेयम्। "गायत्र्या वसवः (३अ० ३सू०)" इति पिङ्गलसूत्रे गायत्र्याः पाद अष्टाक्षराणि भवन्तीत्युक्तम्। "इयादिपूरणः (३अ० २सू०)"—इति तत्सूत्रेण, यत्र गायत्र्यादौ छन्दसि पादस्याक्षरसंख्या न पूर्य्यते, तत्र इयादिभिः सा पूरयितव्या,—इत्युक्तम्। एवञ्च प्रकृते, 'तत्सवितुर्वरेण्यं'—इति पादस्य सप्ताक्षरत्वात् णिकार-यकारयोर्विश्लेषं कृत्वा इयेन पादाक्षरसंख्या पूरयितव्या भवति। तथा च सति, तत्सवितुर्वरेणियमित्यष्टाक्षराणि सम्पद्यन्ते।

"जन्मशारीरविद्याभीराचारेण श्रुतेन च।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते"—इति॥

ये तु सावित्रीं सम्यक् न जानन्ति दूरे तदनुष्ठानं ते विशिष्टमातापितृजन्यात्रपि ब्राह्मणनाममात्रं धारयन्ति, न तु यथोक्तब्राह्मणशब्दार्थत्वं तेषु विद्यते। अतएव, याजनाध्यापनादिजीवनहेत्वसम्भवाज्जीवनाय कृषिं कुर्व्वन्ति। तेषु ब्राह्मणशब्दार्थत्वाभावं व्यास आह,—

"ब्रह्मबीजसमुत्पन्नो ब्रह्मसंस्कारवर्जितः* ।
जातिमात्रोपजीवी यः सोऽब्राह्मण इति स्मृतः"—इति॥

नामधारकब्राह्मणब्रुवस्यापि न मुख्यं ब्राह्मण्यम्। ब्राह्मणब्रुवस्य चतुर्व्विंशतिमते दर्शितः,—

"गर्भाधानादिसंस्कारैर्वेदोपनयनैर्युतः।
नाध्यापयति नाधीते स भवेद् ब्राह्मणब्रुवः"—इति।

अमुख्यब्राह्मणानां बहुव्यवहारदर्शनेन प्रायश्चित्तविशेषपरिज्ञानेऽपि परिषत्त्वयोग्यत्वं नास्तीत्याह,—

**अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते॥४॥ इति॥**

सौम्यप्राजापत्यादिव्रतहीना अव्रताः(१)। अनधीतवेदा अमन्त्राः।

---

* मन्त्रसंस्कारवर्ज्जितः,—इति मु०।

---

(१) सौम्यप्राजापत्यादीनि वेदाध्ययनार्थानि व्रतानि वेदव्रततया प्रसिद्धानि गृह्यसूत्रादावुक्तानि।

नन्वध्यात्मविद्यायुक्तस्यैकस्यैव परिषत्त्वमस्ति, "एको वाऽध्यात्मवित्तमः"—इति स्मरणात्। अध्यात्मविद्यारहितस्य लेकस्य परिषत्त्वाभावेऽपि चतुर्णां परिषत्त्वं स्मर्य्यते, "चत्वारो वेदधर्मज्ञाः परिषत्"—इति। अनयैव दिशाऽध्ययनादिरहितानां पञ्चषाणां परिषत्त्वाभावेऽपि शतसहस्रादिसङ्ख्यायुक्तानां परिषत्त्वं भविष्यतीत्याशङ्क्य, तन्निवारणाय, सहस्रशः समेतानामित्युक्तम्। अध्ययनादिहीनत्वनास्तिकादीनामपि परिषत्त्वं नास्ति। तदुक्तं चतुर्व्विंशतिमते,—

"वेदपाठाद्यनियता धर्मशास्त्रविवर्जिताः।
परिषत्त्वं न तेषां स्यान्नास्तिकानां विशेषतः॥
अनाहिताग्नयोऽज्ञानात् केवलं वेदपारगाः।
पिशुनाः क्रूरकर्माणः परिषत्त्वं न विद्यते॥
शास्त्राज्ञा* दुष्टकर्माणः प्रतिकूलास्त्वसूयकाः।
हैतुका भिन्नमर्यादाः परिषत्त्वे विवर्जिताः"—इति॥

पूर्व्वं धर्मशास्त्रं विजानतामिति विशेषणेन तद्विज्ञानरहितस्य प्रायश्चित्तवक्तृत्वं† नास्तीति यदर्थात् सूचितं, तदेवात्र श्लोकद्वयेन प्रपञ्चयति,—

**यद्वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः।**
**तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति॥ ५॥**

---

* शास्त्रज्ञा,—इति मु०। एतत्पाठे शास्त्रज्ञा अपि दुष्टकर्माणश्चेत् नैव परिषदो भवन्तीत्यर्थो बोध्यः।

† प्रायश्चित्तकर्तृत्वं,—इति मु०।

**अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।**
**प्रायश्चित्ती भवेत् पूतः किल्बिषं परिषद् व्रजेत् ॥ ६ ॥**

अज्ञानं द्विविधं, सत्यपि धर्मशास्त्रपाठे न्यायनिर्णयकौशला-भावेन प्रकृतस्य सूक्ष्मस्य प्रायश्चित्तविशेषस्यापरिज्ञानमेकम् । वृद्ध-व्यवहारेण सत्यपि परिज्ञाने धर्मशास्त्रापरिशीलनमपरम् । तदुभ-यमभिलक्ष्य श्लोकद्वयम् । तमोमूढाः प्रज्ञामान्द्येन सूक्ष्मन्यायेषु विभ्रान्ताः । मूर्खाः पण्डितंमन्याः । अतद्विदः प्रायश्चित्तविशेषम-जानन्तः । तादृशाः पुरुषा यत् पापमुद्दिश्य धर्मं प्रायश्चित्तमन्यथा वदन्ति, तत्पापं शतगुणं* भूत्वा तान् मूर्खान् वक्तॄन् प्राप्नोति । अङ्गिरा एतदेवाह,—

"यत्तु दत्तमजानद्भिः† प्रायश्चित्तं सभां गतैः ।
तत्पापं शतधा भूत्वा दातॄनेवोपतिष्ठति‡"—इति ॥

प्रायश्चित्ती अन्यथा§ कारित्वान्न शुद्ध्यति । यस्तु धर्मशास्त्र-पाठहीनः प्रायश्चित्तविशेषं लोकतोऽवगत्य निर्दिशति, तत्र यथा-शास्त्रानुष्ठातृत्वात् प्रायश्चित्ती पूतो भवति, स तु वक्ता किल्बिषं व्रजेत् । धर्मशास्त्राणामपठितत्वात् । तत्पाठाभावे च विधायक-वचनस्योदाहर्त्तुमशक्यत्वात् । उदाहृत्यैव वचनं प्रायश्चित्तं निर्द्देष्ट-व्यमिति हि पूर्व्वमुक्तम् ;

---

* शतधा,—इति मु० ।

† धर्म्ममजानद्भिः,—इति मु० ।

‡ वक्तॄनेवोपतिष्ठति,—इति मु० ।

§ प्रायश्चित्तमन्यथा,—इति मु० ।

"ऋषिवक्त्रोद्गतान् धर्मान् गायन्तो वेदवित्तमाः"—इति ।

अङ्गिरा अपि,—

"वचः पूर्व्वमुदाहार्य्यं यथोक्तं धर्मवक्तृभिः ।
पश्चात्कार्य्यानुसारेण शक्त्या कुर्य्युरनुग्रहम् ॥
न हि तेषामतिक्रम्य वचनानि महात्मनाम् ।
प्रज्ञानैरपि* विद्वद्भिः शक्यमन्यत् प्रभाषितुम्"—इति ।

धर्मशास्त्रपरिज्ञानस्य न्यायनिर्णयकौशलस्य च सद्भावेऽप्यनवधानादिचित्तदोषशङ्काव्युदासाय स्वसमानैस्त्रिचतुरैः सह संवादोऽपेक्षितइत्यभिप्रेत्याह,—

**चत्वारो वा त्रयो वाऽपि यं ब्रूयुर्वेदपारगाः ।**
**स धर्म इति विज्ञेयो नेतरैस्तु सहस्रशः ॥ ७ ॥ इति ॥**

बहूनामन्योन्यसंवादेन योनिश्चितः, सएव धर्म इति विज्ञेयः, इतरैरन्योन्यसंवादमनाद्रियमाणैः सहस्रसङ्ख्याकवचनपाठपुरःसरमभिहितोऽपि विसंवादशङ्काया अनिराकृतत्वान्नासौ धर्मत्वेन स्वीकार्य्यः ।

सत्यपि त्रिचतुराणां परस्परसंवादे विप्रकीर्णेष्वनेकेषु धर्मशास्त्रेषु क्वापि कस्यचिद्विशेषस्य सम्भवात् प्रायश्चित्तनिर्द्देशवेलायां पुनः शास्त्राणि पर्य्यालोच्यैव निर्दैष्टव्यमित्याह,—

**प्रमाणमार्गं मार्गन्तोये धर्मं प्रवदन्ति वै ।**
**तेषामुद्विजते पापं सद्भूतगुणवादिनाम् ॥ ८ ॥ इति ॥**

---

* प्रज्ञानेनैव,—इति मु० ।

प्रमाणमार्गो धर्मशास्त्रतात्पर्य्यं, तस्य मार्गः न्यायेन निष्कर्षः, तं कुर्व्वन्तएव ये धर्मं प्रवदन्ति, तेभ्यः पापमुद्विजते नाशयोग्यतामापद्यते,—इति यावत् । तत्र हेतुः, सद्भूतइति । सद्भूतः सत्यभूतोऽन्यथाभावमप्राप्तः, परस्परसंवादेनानवधानादिदोषाभावात्, पुनः शास्त्रपर्य्यालोचनेन निगूढरहस्यावगमाच्च । गुणो धर्मः, श्रेयोहेतुत्वात्[१] । तादृशधर्मवादित्वात्तेभ्यः पापस्योद्वेगो युक्तः । परस्परसंवादः पुनर्द्धर्मशास्त्रपाठस्याङ्गिरसा दर्शितः,—

"तस्मिन्नुत्पादिते पापे यथावद्धर्मपाठकाः ।
ते तथा तत्र जल्पेयुर्विमृशन्तः परस्परम्"—इति ।

पापे पापकारिणि पुरुषे ।

ननु परिषदुद्विग्नं पापं यदि कर्त्तर्य्येवावतिष्ठते, तदा प्रायश्चित्तमनर्थकं, अथ परिषदं प्राप्नुयात् ; तर्हि कथमुद्वेगइत्यत आह,—

**यदश्मनि स्थितं तोयं मारुतार्केण शुष्यति ।**
**एवं परिषदादेशान्नाशयेत्तस्य दुष्कृतम् ॥ ६ ॥**

---

(१) श्रेयोहेतोरेव धर्म्मत्वस्य मीमांसकैरभ्युपगमादित्याशयः । तथाहि, "चोदनालक्षणोऽर्थोधर्म्मः (मी० १अ० १पा० २सू०)"—इति सूत्रे भगवता भाष्यकारेण शवरस्वामिनोक्तम् । "तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः । एवं तर्हि श्रेयस्करोजिज्ञासितव्यः किं धर्म्मजिज्ञासया । उच्यते । यएव श्रेयस्करः सएव धर्म्मशब्देनोच्यते"—इत्यादि । अन्यत्राप्युक्तम् । "विहितक्रियया साध्योधर्म्मः पुंसोगुणोमतः"—इति । "कार्य्यनियोगापूर्व्वपर्य्यायकैः शब्दैरुच्यमानः स्वर्गादिफलसाधनोधात्वर्थसाध्यात्मगुणोधर्म्मः"—इति च ।

**नैव गच्छति कर्त्तारं नैव गच्छति पर्षदम्।**
**मारुतार्काग्निसंयोगात् पापं नश्यति तोयवत्॥१०॥**

निम्ने महति वा पाषाणे वर्षधाराभिः स्थितमुदकं मारुतार्कादिसंयोगोविनाशं प्रापयति, एवमियं परिषत् शास्त्रीयस्य प्रायश्चित्तस्यादेशात्तस्य दुष्कृतिं नाशयति। न हि, शिलास्थमुदकमुत्तरकाले यथापूर्वं शिलायामवतिष्ठते, नापि मारुतादावासज्यते, किन्तु शुष्यत्येव केवलं, एवमिदमपि पापं न कर्त्तर्य्यवतिष्ठते नापि परिषदं प्राप्नोति, किन्तु स्वरूपनाशमेव प्राप्नोति। एतदेव चतुर्व्विंशतिमतेऽप्यभिहितम्,—

"यथा भूमिगतं तोयमर्कपादैर्विनश्यति* ।
एवं परिषदादिष्टं नश्यते तस्य दुष्कृतम्॥
नैव गच्छति कर्त्तारं नैव गच्छति पर्षदम् ।
मारुतार्कसमायोगात् पापं नश्यति तोयवत्"—इति॥

अङ्गिरास्तु प्रश्नपूर्वकमेतदेव विशदयति,—

"प्रायश्चित्ते यदा चीर्णे ब्राह्मणे दग्धकिल्बिषे† ।
सर्वं पृच्छामि तत्त्वेन तत्पापं क्व नु तिष्ठति॥
नैव गच्छति कर्त्तारं नैव गच्छति पर्षदम् ।
मारुतार्कसमायोगाज्जलवत्संप्रलीयते ।
यथाऽश्मनि स्थितं तोयं नाशमेत्यर्कमारुतैः॥

---

* विशुष्यति,—इति मु० ।

† ब्राह्मणैर्दग्धकिल्बिषैः,—इति मु० ।

तद्वत् कर्त्तरि यत्पापं नाशयेद्विदुषां सभा ।
तेषां नेत्राग्निदग्धं यत् पापं तस्य तु धीमतः ॥
नश्यते नात्र सन्देहः सूर्य्यदृष्टं हिमं यथा"-इति ।

अथ मुख्यानुकल्पभेदेन परिषद्भेदानाह,—

चत्वारो वा त्रयोवाऽपि वेदवन्तोऽग्निहोत्रिणः ।
ब्राह्मणानां समर्थाये परिषत् साऽभिधीयते ॥ ११ ॥
अनाहिताग्नयो ये च वेदवेदाङ्गपारगाः ।
पञ्च त्रयो वा धर्मज्ञाः परिषत् सा प्रकीर्त्तिता ॥१२॥
मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम् ।
वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत् ॥ १३ ॥
पञ्च पूर्व्वं मया प्रोक्तास्तेषाञ्चासम्भवे त्रयः ।
स्ववृत्तिपरितुष्टाये परिषत्सा प्रकीर्त्तिता ॥ १४ ॥

ग्राममध्ये विद्यमानानां वेदविद्यादिगुणयुक्तानां ब्राह्मणानां मध्ये येऽत्यन्तं समर्थास्ते चत्वारो मुख्या परिषत् । तदसम्भवे त्रयोवा परिषत्त्वेन ग्राह्याः । एतत् पक्षद्वयमाहिताग्निष्वभिहितम् । तदसम्भवे अनाहिताग्नयः । तत्रापि पञ्चेति मुख्यः कल्पः । त्रयइत्यनुकल्पः । तत्रापि पक्षद्वयस्यासम्भवे सत्येकएव परिषद्भवेत् । तमेकं विशिष्टं* मुनीनामित्याद्युक्तम् । आत्मनि ब्रह्मणि विद्याऽनुभवो येषान्ते आत्मविद्याः । तथाविधाः कृतकृत्याः सन्तोऽपि लोकसंग्रहाय यज्ञैरिष्टवन्तो यज्ञयाजिनः । वेदानामृगादीनाञ्चतुर्णामध्ययनायानुष्ठितानि तत्त-

* इत्थमेव पाठः सर्व्वत्र । मम तु, "तमेकं विशिनष्टि"—इति पाठः प्रतिभाति ।

द्वेदोक्तानि व्रतानि वेदव्रतानि, तत्तद्व्रतसहितेषु वेदेषु समाप्तेषु यथाविधि स्नाताः। "शिरोव्रतेन स्नातानाम्"—इति वा पाठः। आथर्व्वणिकानां वेदव्रतेषु मुख्यं व्रतं शिरोव्रतम्। तथाचाथर्व्वणिका आमनन्ति,—

"क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः
स्वयं जुह्वत्त एकर्षिं श्रयन्तः।
तेषामेवैतां ब्रह्मविद्यां वदेत
शिरोव्रतं विधिवद् यैस्तु चीर्णम्"—इति॥

तस्मिन् शिरोव्रते सत्यनन्तरमध्ययनं परिसमाप्य यथाविधि स्नाताः। तेषामेतेषां यथोक्तसर्वगुणसम्पन्नानां मध्ये यः कोऽप्येकः परिषद्भवेत्। अत्र साग्निकानामनग्निकानां द्वौ द्वौ पक्षौ, अध्यात्मविदेकः पक्षः,—इति पञ्च पक्षा मया प्रोक्ताः, तेषां सर्वेषामसम्भवे केचन विद्यमानाः श्रेष्ठास्त्रयः। ते च यद्यायुधजीवनाद्यधर्मवृत्तिमनुपजीव्य यथासम्भववृत्तिमात्रेण परितुष्टास्तेषामपि परिषत्त्वमविरुद्धम्। अङ्गिरसाऽपि परिषद्विकल्पा दर्शिताः,—

"चत्वारोवा त्रयोवाऽपि वेदवन्तोऽग्निहोत्रिणः।
ये सम्यङ्नियता विप्राः कार्य्याकार्य्यविनिश्चिताः॥
प्रायश्चित्तप्रणेतारः सप्त तेऽपि प्रकीर्त्तिताः।
एकविंशतिभिस्त्वन्यैः परिषत्त्वं समागतैः॥
सावित्रीमात्रसारैस्तु चीर्णवेदव्रतैर्द्विजैः।
यतीनामात्मविद्यानां ध्यायिनामात्मयाजिनाम्॥
शिरोव्रतैस्स्नातानामेकोऽपि परिषद्भवेत्।

एषां* लाघवकार्य्येषु मध्यमेषु तु मध्यमाः ॥
महापातकचिन्तासु शतशोभूयएवच"—इति ।

बृहस्पतिरपि,—
"लोकवेदाङ्गधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टाः विप्राः स्युः सा यज्ञसदृशी सभा"-इति ॥

नामधारकविप्राणां परिषत्त्वं नास्तीति यत् पूर्वमुदाहृतं, तदेव दृष्टान्तेन दृढीकर्त्तुं सिंहावलोकनन्यायेन पुनः परामृशति,—

**अत ऊर्द्धन्तु ये विप्राः केवलं नामधारकाः ।**
**परिषत्त्वं न तेष्वस्ति सहस्रगुणितेष्वपि ॥१५॥**

अत ऊर्द्धं वर्णितेषु परिषत्पक्षेषु अवगम्यमानेभ्यो† गुणवद्भ्यो-ब्राह्मणेभ्य ऊर्द्धं, तद्व्यतिरिक्ता गुणरहिता इति यावत् ॥

गुणरहितेषु ब्राह्मणेषु ब्राह्मणइति नाममात्रं केवलं वर्त्तते, न तु ब्राह्मणशब्दप्रवृत्तिनिमित्तं मुख्योऽर्थोऽस्तीत्येवमर्थं दृष्टान्ताभ्यां विशदयति,—

**यथा काष्ठमयोहस्ती यथा चर्ममयोमृगः ।**
**ब्राह्मणस्त्वनधीयानस्त्रयस्ते नामधारकाः ॥१६॥ इति॥**

हस्तित्वं मृगत्वं जातिद्वयं तत्तच्छब्दप्रवृत्तिनिमित्तं, न चैतत्का-ष्ठमयचर्ममययोर्विद्यते, तथापि हस्तिमृगनामधाद‍ृश्यमात्रेण प्रयुज्यते । तद्वद्वेदाध्ययनहीने ब्राह्मणशब्दप्रयोगः । ननु ब्राह्मणशब्दस्यावयवार्थ-

---

* इत्थमेव पाठः सर्व्वत्र । मम तु 'एवं'—इति पाठः प्रतिभाति ।
† उपन्यस्यमानेभ्यो,—इति मु० ।

स्तस्मिन् मा भूत्, जातिस्तु विद्यते, विशिष्टमातापितृजन्यत्वं ब्राह्मणत्वजातिः, तथा च ब्राह्मणशब्दस्य तस्मिन् यौगिकत्वाभावेऽपि रूढ़ि[१] सद्भावाद्विषमौ दृष्टान्तावित्याशङ्क्याह,—

**ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः।**
**यथा हुतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा॥ १७॥**

ग्रामशब्दोहि जननिवासस्थाने भूभागविशेषे मुख्यया वृत्त्या वर्त्तते, कूपशब्दस्च जलाधारे खाते। होमशब्दस्च शास्त्रसंस्कृतवह्नौ हविःप्रक्षेपमाह[२]। तत्र, जनविशिष्टस्थानं मुख्यो ग्रामः। जनशून्यग्रामस्तु* ग्रामाभासः। कूपहोमयोरप्याभासत्वमेवं योजनीयम्।

* जनशून्यस्थानं तु,—इति मु०।

(१) योगोऽवयवशक्तिलभ्योऽर्थः। रूढ़िः समुदायशक्तिलभ्योऽर्थः। योगार्थप्रतिपादकोयौगिकः, रूढ्यर्थप्रतिपादकोरूढ़ इत्युच्यते। पाचकादिशब्दोयौगिकः, वृक्षादिशब्दोरूढ़ः।

(२) अत्र मीमांसासूत्रम् (४ अ० २ पा० २८ सू०)। "तदुक्ते श्रवणात् जुहोतिरासेचनाधिकः स्यात्"—इति। "तदुक्ते यजत्युक्तेऽर्थे आसेचनाधिके। तस्मात् यजतिरेवासेचनाधिको जुहोतिः"—इति भाष्यम्। यजतिश्च, "यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् (मी० ४ अ० २ पा० २७ सू०)—इत्युक्तलक्षणः। आसेचनञ्च विशिष्टदेशप्रक्षेपः। विशिष्टश्च देशः संस्कृतोऽग्निरेवौत्सर्गिकः। "यज्जुहोति तदाहवनीये"—इति श्रुतेः। "पदे जुहोति, वर्त्मनि जुहोति"—इत्यादि विशेषशास्त्रात् क्वचित् पदवर्त्मादिलक्षणोऽपि। अत्र चौत्सर्गिकं नियममनुसृत्य "शास्त्रसंस्कृतवह्नौ"—इत्युक्तमिति ध्येयम्।

तैरेतैर्दृष्टान्तैरयं नामधारकोजातिमात्रसद्भावेऽपि ब्राह्मणाभासः न तु मुख्यः। पङ्कजशब्दस्य च यद्यपि जातिः प्रवृत्तिनिमित्तं, तथाप्यवयवार्थस्तस्मिन्निमित्ते[(१)]ऽन्तर्भवत्येव। ततोयोगरूढः[(२)] इति व्यवह्रियते। एवं ब्राह्मणशब्दस्यापि योगरूढत्वात् जातिसद्भावेऽपि योगहीनत्वादाभासत्वं द्रष्टव्यम्।

ननु मुख्यसम्भवे सत्यमुख्यं न ग्राह्यं, तदसम्भवे त्वमुख्यमपि ग्राह्यम्,—इति लोकवेदस्थितिः। तथा चाध्ययनादिसम्पन्नमुख्यब्राह्मणानामसम्भवे सति ब्राह्मणाभासानामपि क्वचित् परिषत्त्वं स्यादित्याशङ्क्याह,—

**यथा षण्डोऽफलः स्त्रीषु यथा गौरूषराऽफला।**
**यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥१८॥**

अमुख्यमपि यत्र कार्य्यक्षमं भवति, तत्र मुख्यासम्भवे तद्-

---

(१) प्रवृत्तिनिमित्ते इत्यर्थः।

(२) यत्र योगार्थरूढ्यर्थयोः परस्परमन्वयबोधः स योगरूढः। यथा पङ्कजादिशब्दः। अत्र हि पङ्कशब्द-जनधातु-डप्रत्ययानामवयवानां शक्तिभिः पङ्कजनिकर्त्ताऽर्थोलभ्यते। सएव योगार्थः। पङ्कजशब्दस्य समुदायशक्त्या च पद्मत्वजातिविशिष्टोऽर्थो लभ्यते। सएव रूढ्यर्थः। तयोः परस्परमन्वयः। तथाच पङ्कजनिकर्तृभिन्नं पद्ममिति पङ्कजपदस्यान्वयबोधः। तथा च सति, न पङ्कजनिकर्तृरूपमवयवार्थमादाय कुमुदादौ, नापि पद्मत्वविशिष्टरूपसमुदायार्थमादाय स्थलपद्मादौ पङ्कजशब्दस्य प्रयोगः, किन्तु जलपङ्कजएव।

पादेयम्। यथा वैदिके कर्मणि सोमाभावे पूतिकाभिषवः[१], यथा वा लोके शाल्यभावे कोद्रवादिः। तद्वद्ब्राह्मणाभासस्यापि कार्य्यक्षमत्वे स्यात् क्वचिदुपादेयत्वं, न त्वध्ययनहीनस्य प्रायश्चित्तविधानक्षमताऽस्ति। न हि, पुंस्त्वोपेतस्य वरस्यासम्भवेऽपि षण्ढः प्रजामुत्पादयन्नुपलभ्यते, नापि भूमिरूषरा क्वचित् फलति, नाप्यज्ञः प्रतिगृह्णन् दाने फलहेतुः। एवमसावपि ऋगादिमन्त्रहीनो न पापनिवृत्तिफलहेतुः।

ननु नामधारकः षण्ढादिवदफलश्चेत्तर्हि संस्कारैरपि तस्य कोऽतिशयः स्यात्। न हि, स्वदारसहस्रेणापि षण्ढः प्रजनयितुं प्रभवति, इत्याशङ्क्य, दृष्टान्तेन संस्कारकृतोत्कर्षं सम्भावयति,—

**चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः।**
**ब्राह्मण्यमपि तद्वद्धि संस्कारैर्मन्त्रपूर्व्वकैः॥ १९॥**

चित्रकरः प्रथमं पटादौ मसीरेखाभिः सर्व्वावयवपूर्णानि मनुष्यादिरूपाणि लिखति। न च तानि तावता दर्शनीयत्वमापद्यन्ते। पुनस्तान्येव रूपाणि नानाविधवर्णप्रक्षेपेणोन्मीलितानि दर्शनीयतामापद्यन्ते। एवं जातिब्राह्मण्यं शास्त्रीयसंस्कारैरुत्कृष्यते। मन्त्रसंस्कारेण विद्यादयोऽप्युपलक्ष्यन्ते। अतएवाङ्गिराः,—

---

(१) "यदि सोमं न विन्देत्, पूतीकानभिषुणुयात्"—इति श्रुतेरिति भावः। यथा च पूतीकस्य सोमप्रतिनिधित्वं, न पुनः सोमालाभनिमित्ते द्रव्यान्तरविधिः, तथा व्यक्तं मीमांसादर्शन-षष्ठाध्याय-तृतीयपादगत-त्रयोदशाधिकरणे।

"जन्मशरीरविद्याभिराचारेण श्रुतेन च ।
धर्म्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ।
चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्व्वकैः"- इति ॥

ननु यत्र संस्कृता बहवो न सन्ति तत्रैकेन संस्कृतेन सहेतरे नामधारकाः प्रायश्चित्तविधायिनः स्युरित्याशङ्क्याह,—

**प्रायश्चित्तं प्रयच्छन्ति ये द्विजानामधारकाः ।**
**ते द्विजाः पापकर्माणः समेतानरकं ययुः ॥ २० ॥**

समेताः एकेन संस्कृतेन सङ्गताः । ययुः यान्तीत्यर्थः । यद्यपि संस्कृतः स्वयं नरकं नार्हति, तथाप्यनर्हैः सहैकस्यां परिषद्युपवेशनात्तस्य नरकप्राप्तिः । एतच्च चतुर्व्विंशतिमते स्पष्टीकृतम्,—

"प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः ।
ते सर्व्वे पापकर्माणः, समेतोनरकं व्रजेत्"—इति ॥

समेतोनामधारकैः सङ्गतः । तावतैवापराधेन मन्त्रसंस्कृतोऽपि नरकं प्राप्नोति ।

ननु संस्कृतानां बहूनामपि गृहिणां कथं परिषत्त्वं स्यात्, नामधारकवत्तेषामिन्द्रियरतत्वादित्याशङ्क्याह,—

**ये पठन्ति द्विजावेदं पञ्चयज्ञरताश्च ये ।**
**त्रैलोक्यं तारतन्त्यैते पञ्चेन्द्रियरता अपि ॥ २१॥**

वेदोहि निखिलपापापनयने समर्थः । तथा च तैत्तिरीय-

आम्नाते वज्ज्यादिपरम्परया प्राप्तं पापं स्वाध्यायोऽपहन्तीति श्रूयते। "अग्निं वै जातं पाप्मा जग्राह, तं देवा आहुतीभिः पाप्मानम-पान्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिणानां ब्राह्मणेन ब्राह्मणस्य छन्दोभिश्छन्दसां स्वाध्यायेनापहतपाप्मा स्वाध्यायो देवपवित्रं वा-एतत्"—इति। मनुरपि,—

"वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा।
नाशयन्त्याशु पापानि महापातकजान्यपि।
यथैधांस्तेजसा वह्निः प्राप्य निर्दहति क्षणात्।
तथा ज्ञानकृतं पापं कृत्स्नं दहति वेदवित्।
यथा जातबलोवह्निर्दहत्यार्द्रानपि द्रुमान्।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः"—इति॥

ये तु श्रद्धालवएव सन्तः प्रज्ञामान्द्यादिदोषेण पठितं वेदं धारयितुमसमर्थाः, तेऽपि पञ्चयज्ञानुष्ठानात् क्षीणपापाएव। पञ्च-यज्ञानां पापक्षयहेतुत्वञ्च प्रथमाध्याये प्रपञ्चितम्। अतश्च पञ्चे-न्द्रियप्रसक्तानामपि क्षीणपापत्वेन परिषत्त्वमविरुद्धम्।

नन्वेवमपि पञ्चयज्ञादिभिः परिशुद्धेषु गृहिषु परकीयं पापमनु प्रविशति, परान्नभोजनादेस्तत्प्रापकत्वात्,

"दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति"।

"अन्नादे भ्रूणहा मार्ष्टि"—इत्यादि स्मरणादित्यत आह,—

**संप्रणीतः श्मशानेषु दीप्तोऽग्निः सर्व्वभक्षकः।**
**एवं च वेदविद्विप्रः सर्व्वभक्ष्योऽपि दैवतम्॥२२॥**

न ह्यग्निः श्मशाने नीतः श्वादिभक्षणे प्रयुक्तः * इत्येतावता देवत्वं परित्यजति। एवं वेदविदोभूदेवस्य अभक्ष्याभोज्यादिदोष-मात्रेण भूदेवत्वं नापैति। एकैकस्य मन्त्रस्याभक्ष्यभक्षणाद्यशेषदोषनिवर्त्तकत्वात्। तथाच मन्त्रलिङ्गम्,—

"यदन्नमद्म्यनृतेन देवा-
दास्यन्नदास्यन्नुत वा करिष्यन्।
यद्देवानाञ्चक्षुष्यागोऽस्ति यदेव किञ्च
प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु।
यदन्नमद्मि बहुधा विरूपं
वासो हिरण्यमुत गामजामविम्"—इत्यादि।

अनृतेन परकीयादौ स्वकीयत्वादिवचनेन। दास्यन्नर्हेभ्यो नष्टशौचाचारादिभ्यः स्नेहानुबन्धेन हव्यकव्ययोः प्रयच्छन्। अदास्यन्नतिथ्यादिभ्यो योग्येभ्योऽप्रयच्छन्। करिष्यन्नन्नभक्षणव्यतिरिक्तमविहितं प्रतिषिद्धं वा कुर्व्वन्। चक्षुष्यागोनग्नपरयोषिदवलोकनादि। तथा, देवानामागः विष्णवाद्यं देवं दृष्ट्वाऽप्यनमस्कारादि। यदेव किञ्च अश्वमहिषकालपुरुषाद्यप्रतिग्राह्यं यत् किञ्चित् प्रतिजग्राहं प्रतिगृहीतवानस्मि। बहुधा विरूपं गणान्नगणिकान्नादिरूपेणानेकदोषयुक्तं यदन्नमद्मि भक्षितवानस्मि। यथोक्तात् सर्व्वस्माद्दोषजातात् मामनृणं पूतमग्निः करोत्विति मन्त्रार्थः। तथा, पवमानसूक्तादिमहिमानमधीयते,—

"क्रयविक्रयाद्योनिदोषादभक्ष्यभोजनात् प्रतिग्रहात्।
असद्भोजनाच्चापि नृशंसं तत् पावमानीभिरहं पुनामि"—इति।

* श्वादिभक्षकः,—इति श्रा० स०।

तथा सामविधाने सामगाः पठन्ति। "अभोज्यभोजने कृते पन्था अधोदिवदिति"। साम गायेदिति शेषः। मनुरपि,—

"प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा वाऽन्नं विगर्हितम्।
जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्॥
हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः।
ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किञ्चन"—इति॥

ननूक्तरीत्या वेदविदः स्वकीयपापमपनयन्तु नाम, तथापि त्रैलोक्यं तारयन्त्येते,—इति यदुक्तं, तत् कथमित्याशङ्क्य दृष्टान्तेन तदुपपादयति,—

**अमेध्यानि तु सर्व्वाणि प्रक्षिप्यन्ते यथोदके।**
**तथैव किल्बिषं सर्व्वं प्रक्षिपेच्च द्विजोत्तमः॥ २३॥**

गङ्गादिजले स्नातुं प्रविष्टाः शरीरात् स्वेदादीन्यमेध्यानि प्रक्षिपन्ति, नैतावता तज्जलमपूतं भवति, प्रत्युत मलोपेतान् पुरुषान्मलापनयनेन पुनाति। एवं प्रायश्चित्ती स्वकीयमशेषं पापं वेदवित्सु प्रक्षिपति। तत्र प्रक्षेपणं नाम, तदपनयनाय तेषामग्रे निवेदनम्। ते च तदपनयाङ्गीकारमात्रेण न दुष्यन्ति। प्रत्युत तदपनयसमर्थं शास्त्रीयमुपायमुपदिश्य पापिनमुद्धरन्ति। तस्मात्तारयन्तीत्युपपन्नम्।

ननु वेदविद्यायास्चेदीदृशो* महिमा, तर्हि वेदविदां दैनन्दिनगायत्र्युपास्त्यादिष्वलसानामपि परिषत्त्वं प्रसज्यतेत्यत आह,—

* वेदविदस्चेदीदृशो,—इति मु०।

**गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत् ।**
**गायत्रीब्रह्मतत्त्वज्ञाः संपूज्यन्ते जनैर्द्विजाः ॥ २४ ॥ इति ॥**

गायत्री च ब्रह्म च गायत्रीब्रह्मणी, तयोस्तत्त्वं गायत्रीब्रह्मतत्त्वम् । तत्र गायत्र्यास्तत्त्वमङ्गन्यासकलावर्णयतिविशेषध्यानादि* । ब्रह्मणस्तत्त्वं वेदोक्तनिःशेषानुष्ठानादि । तदुभयं यथावदवगत्यानुतिष्ठन्तस्तत्त्वज्ञाइह विवक्षिताः । यद्वा, ब्रह्म परमात्मा, तस्य तत्त्वं वेदान्तप्रतिपाद्यं स्वरूपं, तद्गायत्र्यां भर्गशब्दवाच्यत्वेनावगत्योपासते ये, ते गायत्रीब्रह्मतत्त्वज्ञाः ।

ननु यस्मिन् ग्रामे जितेन्द्रियः शास्त्रोक्तस्वधर्म्मवर्त्ती शूद्रोविद्यते, तत्र पञ्चेन्द्रियरताद्दुःशीलाद्वरन्तस्यैव शूद्रस्य परिषत्त्वमित्यत आह,—

**दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रोजितेन्द्रियः ।**
**कः परित्यज्य गां दुष्टां दुहेत् शीलवतीं† खरीम् ॥ २५ ॥ इति ॥**

कः परित्यज्य,—इत्यादि दृष्टान्तः । जातिशीलयोर्मध्ये जात्युत्कर्षएव प्राधान्येनोपादेयः । शीलं तु यथासम्भवम् । अतएव चतुर्विंशतिमते शूद्रोपदेशस्यानुपादेयत्वं प्रपञ्चयति,—

"श्वचर्मणि यथा क्षीरमपेयं ब्राह्मणादिभिः ।
तद्वत् शूद्रमुखाद्वाक्यं न श्रोतव्यं कथञ्चन ॥
पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च ।

---

* वर्णविशेषध्यानादि,—इति मु० ।

† क्षीरवतीं,—इति मु० ।

वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा ।
शूद्रोऽज्ञानावलेपात्तु ब्राह्मणान् भाषते यदि ।
स याति नरकं घोरं यावदाहूतसंप्लवम् ।
कृष्णसर्पं द्विजं दुष्टं शूद्रस्य प्रतिपादकम् ।
गर्द्दभं जारजातञ्च* दूरतः परिवर्जयेत्”—इति ।

ननु दुःशीलानां परिषत्त्वाभ्युपगमे तन्निर्दिष्टप्रायश्चित्तस्यान्यथाभावः शक्यते† इत्यतआह,—

**धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः ।**
**क्रीड़ार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः ॥२६॥ इति॥**

यथा, युद्धार्थं रथमारुह्य खड्गं धृत्वा समागतस्य योद्धुं मुहूर्त्तमात्रं विलम्बितेऽपि युद्धे खड्गचालनादिरूपा युद्धोचितलीला प्रवर्त्तते, तद्वत्, प्रस्तुताद्वेदादिरूपाद्रथाद्धर्मशास्त्रवेदी यो निपुणोब्राह्मणः स इन्द्रियपरतन्त्रोऽपि चिरं शास्त्रवासनावासितत्वात् क्रीड़न्नपि यथा शास्त्रमेव ब्रूते, किमु वक्तव्यं बुद्धिपूर्व्वं परिषद्युपविश्य,

“अब्रुवन्विब्रुवन् वाऽपि नरो भवति किल्विषी” ।

इत्यादिशास्त्रस्यावगत्यान्यथा न ब्रूते,—इति ।

इत्थं योग्यायोग्यपरिषदौ विविच्य तत्र योग्यायाः परिषदोऽपचितं विशेषणजातं दर्शयति,—

---

* गर्भञ्च जारजातन्तु,—इति मु० ।

† धर्म्मं निश्चित्य प्रायश्चित्तस्यान्यथाभावः शक्यते,—इति मु० ।

**चातुर्व्वैद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।**
**त्रयश्चाश्रमिणो मुख्याः पर्षदेषा दशावरा ॥२७॥ इति॥**

तत्र चातुर्व्वैद्यादिशब्दार्थानङ्गिरा विवृणोति,—

"चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः ।
स्वैस्वैरङ्गैर्विनाऽप्येते चातुर्व्वैद्या इति स्मृताः ॥
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।
त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद्द्विजः ।
शब्दे छन्दसि कल्पे च शिक्षायाञ्च सुनिश्चितः ।
ज्योतिषामयने चैव सनिरुक्तोऽङ्गविद्भवेत्[(१)] ।
वेदविद्याव्रतस्नातः कुलशीलसमन्वितः[(२)] ॥

---

(१) शब्दे शब्दशास्त्रे व्याकरणे इति यावत् । छन्दसि छन्दःशास्त्रे पिङ्गलादिप्रणीते। कल्पे श्रौतसूत्रापरनामधेये वैदिकयज्ञाद्यनुष्ठानप्रतिपादके आश्वलायनादिप्रणीते नानाशाखागतलिङ्गादिकल्पिते कल्पसूत्राख्ये ग्रन्थे । शिक्षा पाणिन्यादिप्रणीता वर्णोच्चारणादिनियामिका । ज्योतिषामयनं ज्योतिःशास्त्रम् । निरुक्तं यास्कादिप्रणीतं नैघण्टुककाण्डव्याख्यानरूपं वैदिकशब्दानां व्युत्पादकं शास्त्रम् । एतावन्त्येवाङ्गानि वेदस्य । तदुक्तम् । "शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां चितिः। छन्दसां विचितिश्चैव षडङ्गो वेद इष्यते" इति ।

(२) यः खलु समाप्य वेदमसमाप्य व्रतानि समावर्त्तते, स वेदविद्यास्नातः। यः पुनरसमाप्य वेदं समाप्य व्रतानि समावर्त्तते, स व्रतस्नातः । यस्तु वेदं व्रतानि च समाप्य समावर्त्तते, सोऽयं वेदविद्याव्रतस्नातः । शीलं त्रयोदशविधं हारीतोक्तम् । तथाच हारीतः । "ब्राह्मणता देवपि-

अनेकधर्म्मशास्त्रज्ञः प्रोच्यते धर्म्मपाठकः।

ब्रह्मचर्य्याश्रमादूर्द्ध्वं विप्रोऽयं वृद्ध उच्यते"—इति ॥

चातुर्वैद्यत्वाद्युक्तविशेषणविशिष्टागार्हस्थ्याद्यन्यतमाश्रमवर्त्तिनोदश-संख्यकाः परिषच्छब्दवाच्याः। दशसंख्या अवरायस्यां परिषदि, सा दशावरा। दशत्वमवरः पक्षः, ततोऽप्यर्वाचीनः पक्षो नास्तीत्यर्थः। ये तु "चत्वारोवा त्रयो वाऽपि"—इत्यादिपक्षाः पूर्व्वमुपन्यस्ताः, ते स सर्व्वेऽपि गोवधादर्वाचीनविषये द्रष्टव्याः। सेयं दशसंख्योपेता परिषद्ब्राह्मणस्य प्रायश्चित्तित्वे सत्यवगन्तव्या। यदा क्षत्रियवैश्यौ प्रायश्चित्तिनौ भवतः, तदा विशेषमङ्गिरा आह,—

"परिषद्या ब्राह्मणानां सा राज्ञां द्विगुणा मता।

वैश्यानां त्रिगुणा चैव परिषच्च व्रतं स्थितम् ॥

ब्राह्मणो ब्राह्मणानान्तु क्षत्रियाणां पुरोहितः।

वैश्यानां याजकश्चैव सएव व्रतदः स्मृतः * ॥

अगुरुः क्षत्रियाणाञ्च वैश्यानां चाप्ययाजकः।

प्रायश्चित्तं समादिश्य तच्छक्त्रं समाचरेत्"—इति।

यथा क्षत्रियवैश्ययोः परिषद्वृद्धिः, तथा व्रतमपि वर्द्धते। इयञ्च व्रतवृद्धिरुत्तमजातिहनने द्रष्टव्या। इतरविषये व्रतह्रासस्याभिधानात्। तथा च चतुर्व्विंशतिमते दर्शितम्,—

---

* एते व्रततराः स्मृताः,—इति मु०।

---

दृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्ततेति त्रयोदशविधं शीलम्"—इति।

"प्रायश्चित्तं यदाख्यातं ब्राह्मणस्य महर्षिभिः ।
पादोनं क्षत्रियः कुर्य्यादर्द्धं वैश्यः समाचरेत् ।
शूद्रः समाचरेत् पादमशेषेष्वपि पापसु"—इति ।

इत्थं प्रायश्चित्तिना कर्त्तव्यमुपस्थानं उपस्थेया परिषच्चेत्युभयं निरूपितम् । अथ व्रतादेशनं निरूपणीयं, तस्योपस्थानानन्तरभावित्वात् । अनन्तरभावश्चाङ्गिरसा दर्शितः,—

"उपस्थानं व्रतादेशः स्वीयाशुद्धिप्रकाशनम् ।
प्रायश्चित्तं चतुष्कञ्च विहितं धर्मकर्तृभिः"—इति ।

तदेतद्व्रतादेशनं राजानुमत्या कर्त्तव्यमित्याह,—

**राज्ञश्चानुमते स्थित्वा प्रायश्चित्तं विनिर्दिशेत् ।**
**स्वयमेव न कर्त्तव्यं कर्त्तव्या स्वल्पनिष्कृतिः ॥ २८ ॥**

अत्र गोवधस्य प्रकृतत्वात् तमारभ्याधिकेषु पापेषु राजानुज्ञयैव व्रतं निर्दिशेत् । न तु राजानं वञ्चयित्वा स्वयं तत् कर्त्तव्यम् । गोवधादल्पेषु तु पापेषु विनाऽपि राजानुज्ञां निष्कृतिर्दातुं शक्यते । एतच्च देवलोऽप्याह,—

"याचितस्तेन चेत् पापे ब्राह्मणः पापभीरुणा ।
निष्कृतिं व्यवहारार्थं कुर्य्यात्तस्मै नृपाज्ञया ॥
स्वयं च ब्राह्मणैः कृच्छ्रमल्पदोषे विधीयते ।
राजा च ब्राह्मणश्चैव महत्सु सुपरीक्ष्य च"—इति ॥

हारीतोऽपि—

"राज्ञोऽनुमतिमाश्रित्य प्रायश्चित्तानि दापयेत् ।

स्वयमेव न कुर्वीत कर्त्तव्यं स्वल्पमेवच*"—इति ॥

यथा परिषद्राजानं नातिक्रमेत्, तथा राजाऽपि परिषदं नातिक्रमेदित्याह,—

**ब्राह्मणांस्तानतिक्रम्य राजा कर्त्तुं यदिच्छति।**
**तत्पापं शतधा भूत्वा राजानमनुगच्छति ॥२९॥ इति ॥**

कर्त्तुं प्रायश्चित्तं कारयितुम्। अन्तर्भावितणिजर्थस्य विवक्षितत्वात्। इदानीं परिषदा समाचरणीयान् नियमविशेषानाह,—

**प्रायश्चित्तं सदा दद्याद्देवतायतनाग्रतः।**
**आत्मकृच्छ्रं ततः कृत्वा जपेद्वै वेदमातरम् ॥३०॥ इति ॥**

दद्यादित्यत्रायोगव्यवच्छेदो विवक्षितः, परिषदुपविश्यादाने प्रत्यवायस्मरणात्। तदाहाङ्गिराः,—

"आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः।
जानन्तोन† प्रयच्छन्ति ते तेषां समभागिनः॥
तस्मादार्त्तं समासाद्य ब्राह्मणन्तु विशेषतः।
जानद्भिः परिषदः पन्था न हातव्यः पराङ्मुखैः॥
तस्य कार्य्या व्रतादेशः पावनार्थं हितैप्सुभिः‡।
अज्ञानामुपदेष्टव्यं क्रमशः सर्व्वमेवच॥
यथाऽभ्युद्धरते कश्चिद्भयार्त्तं ब्राह्मणं क्वचित्॥

---

* स्वयमेव न कर्त्तव्यं स्वल्पमेव परीक्ष्य च—इति मु०।

† तानेतान्न,—इति शा० स०।

‡ प्राणार्थं हितकर्त्तृभिः,—इति मु०। त्राणार्थं?

एवं पापात् समुद्धृत्य तेन तुल्यं फलं लभेत्"—इति।

सर्व्वथा दद्यादित्ययं नियमो यथाविध्युपपन्नविषयः। तथा च हारीतः,—

"यत्नादेव पुरस्कृत्य विप्रांस्तत्र दशावरान्।
प्रणिपत्य च भक्त्या च प्रायश्चित्तं विनिर्दिशेत्"—इति॥

विनिर्दिशेत् याचेत,—इति यावत्। यथाविध्युपपत्त्यभावे प्रायश्चित्तं न देयम्। तदाहाङ्गिराः,—

"अनर्च्चितैरनाहूतैरपृष्टैश्च यथाविधि।
प्रायश्चित्तं न दातव्यं जनद्भिरपि च द्विजैः"—इति॥

ज्ञानेनाज्ञानेन वा प्रायश्चित्तस्यान्यथानिर्देशे प्रत्यवायं स एवाह,—

"अजानन्यस्तु विब्रूयाज्जानन्यश्चान्यथा वदेत्।
उभयोर्हि तयोर्दोषः पक्षयोरुभयोरपि"—इति॥

विधित्सितस्य प्रायश्चित्तस्य गौरवलाघवनिर्णयाय देशकालादयः परीक्षणीयाः। तदाह बौधायनः,—

"शरीरं बलमायुश्च वयः कालञ्च कर्म च।
समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तं प्रकल्पयेत्"—इति।

हारीतोऽपि,—

"यथावयो यथाकालं यथाप्राणं च ब्राह्मणे।
प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः॥
येन शुद्धिमवाप्नोति न च प्राणैर्वियुज्यते।
आर्त्तिं वा महतीं याति न चैतद् व्रतमादिशेत्"—इति॥

विश्वामित्रोऽपि,—

"जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्"—इति॥

परिषद्धर्मप्रश्नादीतिकर्त्तव्यता अङ्गिरसा दर्शिता,—

"ततस्ते प्रणिपातेन दृष्ट्वा तं समुपस्थितम्।
विप्राः पृच्छन्ति तत् कार्य्यमुपविश्यासने स्थितम्॥
किन्ते कार्य्यं किमर्थं वा सदा मृगयसे द्विजान्।
पर्षदि ब्रूहि तत् सर्व्वं यत्कार्य्यं हितमात्मनः॥
सत्येन द्योतते राजा वरिः सत्येन तद्यथा*।
सत्येन द्योतते वह्निः सर्व्वं सत्ये प्रतिष्ठितम्॥
भुर्भूवःस्वस्त्रयोलोकास्तेऽपि सत्ये प्रतिष्ठिताः।
अस्माकं चैव सर्व्वेषां सत्यमेव परं बलम्॥
यदि चेद्वक्ष्यसे सत्यं नियतं प्राप्स्यसे शुभम्।
यद्यागतोऽस्यसत्येन न तु शुद्ध्यति केनचित्॥
सत्येन तु विशुद्ध्यन्ति शुद्धिकामाश्च मानवाः।
तस्मात् प्रब्रूहि तत् सत्यमादिमध्यावसानिकम्।
एवं तैः समनुज्ञातः सर्व्वं ब्रूयादशेषतः॥
तस्मिन्निवेदिते कार्य्ये निष्क्रान्तोयस्तु† कार्य्यवान्।
तस्मिन्नुत्सारिते पापे यथावद्धर्म्मपाठकाः।
ते तथा तत्र जल्पयेयुर्व्विमृशन्तः परस्परम्।

---

* सत्येन द्योतते वायुः सत्येन द्योतते रविः,—इति मु०।

† यत्र,—इति मु०।

आपद्धर्म्मेषु यत्प्रोक्तं यच्च सानुग्रहं भवेत् ॥
परिषत्सम्पदश्चैव कार्य्याणाञ्च बलाबलम् ।
प्राप्य देशञ्च कालञ्च यच्च कार्य्यान्तरं भवेत् ॥
पर्षत् सञ्चिन्त्य तत्सर्व्वं प्रायश्चित्तं विनिर्द्दिशेत् ।
सर्व्वेषां निश्चितं यत्स्याद्यच्च प्राणान्न घातयेत् * ॥
आहूय श्रावयेदेकः पर्षदा यो नियोजितः ।
शृणुष्व भो इदं विप्र, यत्ते आदिश्यते व्रतम् ॥
तत्तत् यत्नेन कर्त्तव्यमन्यथा ते वृथा भवेत् ।
यदा च ते भवेत् चीर्णं तदा शुद्धिप्रकाशकम् ॥
कार्य्यं सर्व्वं प्रयत्नेन शक्त्या विप्राभिभाषितम्"—इति ।

एतच्च सर्व्वं कस्यचित् देवतायतनस्य शैवस्य वा वैष्णवस्य वा पुरः स्थित्वा निर्द्देष्टव्यम् । देवतायतनाग्रतः,—इत्येतत् पुण्यतीर्थादेरप्युपलक्षणम् । एवं प्रायश्चित्तं निर्दिश्यानन्तरं निर्देष्टारः सर्व्वेऽप्यात्मविशुद्ध्यर्थं तत्तत्प्रायश्चित्तानुसारेण स्वल्पमधिकं वा किञ्चित् कृच्छ्रं चरित्वा तदन्ते वेदमातरं गायत्रीं यथाशक्ति जपेयुः,—इति ॥ एतदेव हारीतोऽप्याह,—

"प्रायश्चित्तन्तु निर्दिश्य कथं पापात् प्रमुच्यते ।
यत्पवित्रं विजानीयात् जपेद्वा वेदमातरम्"—इति ॥

वेदवेदाङ्गविदुषामित्यारभ्य जपेद्वै वेदमातरमित्यन्तेन ग्रन्थसन्दर्भेन यत्परिषन्निरूपणं, तत्सर्व्वमतीताध्यायोक्तेषु आगाम्यध्याये वक्ष्यमाणेषु च प्रायश्चित्तेषु समानमवगन्तव्यम् । अध्यायादौ यत्पृष्टं

* पातयेत्,—इति मु० ।

गोवधप्रायश्चित्तं, तदिदानीमाऽध्यायपरिसमाप्तेर्निरूपयति। तत्र सशिखमित्यादिना बहुविधमितिकर्त्तव्यमाह,—

**सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम्।**
**गवां मध्ये वसेद्रात्रौ दिवा गाश्चाप्यनुव्रजेत्॥३१॥ इति॥**

शिखाऽपि यथा न परिशिष्यते, तथा वपनं कुर्य्यात्। सन्ध्यात्रये च नद्यादाववगाहेत। रात्रौ गोष्ठे गोमध्ये शयीत। दिवसे तु चरन्तीर्गाः अनुचरेत्।

इति कर्त्तव्यतान्तरमाह,—

**उष्णे वर्षति शीते वा मारुते वाति वा भृशम्।**
**न कुर्व्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः॥३२॥ इति॥**

निदाघसन्तापे प्रथमतोगवाञ्छायायां सम्पाद्य पश्चात् स्वयं छायायामुपविशेत्। एवं वर्षादौ। वर्षति सति वृष्टिपीड़ितानां गवां शालादिसम्पादनेन रक्षां कुर्य्यात्। तथा, हेमन्तशिशिरयोर्निशि निवासाय शीतरहितं स्थानं सम्पादयेत्। तथा, यदा कदाचित् मारुते भृशं वाति सति, स्थानादिसम्पादनेन तदुपद्रवात् संरक्षेत्। यदा गवां रक्षां कर्त्तुं न शक्नुयात्, तदा स्वात्मनोऽपि रक्षां न कुर्य्यात्।

अन्यदितिकर्त्तव्यमाह,—

**आत्मनो यदिवाऽन्येषां गृहे क्षेत्रे खलेऽथवा।**
**भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम्॥३३॥इति॥**

स्वकीयेषु परकीयेषु वा गृहादिषु सञ्चितं शस्यादिकं यदि काचिद्गौर्भक्षयेत्, तदा तां पश्यन्नपि निवारकाणामग्रे न कथयेत् । तथा, वत्सोयदि दोहकालादन्यत्र स्तनं पिवेत्, तदा तमपि वत्सं न कथयेत् ।

पुनरप्यन्यदितिकर्त्तव्यमाह,—

**पिवन्तीषु पिवेत्तोयं संविशन्तीषु संविशेत् ।**
**पतितां पङ्कलग्नां वा सर्व्वप्राणैः समुद्धरेत् ॥ ३४ ॥ इति ॥**

स्वयमत्यन्ततृष्णार्त्तोऽपि गवामुदकपानात् पूर्व्वमुदकं न पिवेत् । तथा, चिरस्थितिगतिभ्यां पादयोर्व्यथां प्राप्यापि गोसंवेशनात् प्राक् स्वयं न संविशेत् । यत्र क्वापि रोगार्त्ता सती भूमौ पतिता वा, जलपानार्थं गत्वा पङ्के मग्ना वा गौर्यदा दृष्टा, तदानीमेव स्वप्राणेषु लोभं* परित्यज्य सर्व्वेणापि प्रयत्नेन तां गामुद्धरेत् ।

ननु स्वप्राणेष्वलुब्धस्य प्रक्रान्तव्रतसमाप्त्यभावे दुरितक्षयो न स्यादित्यत आह,—

**ब्राह्मणार्थे गवार्थे वा यस्तु प्राणान् परित्यजेत् ।**
**मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च ॥ ३५ ॥ इति ॥**

अनुष्ठेयेभ्यः† सर्व्वेभ्यो व्रतेभ्यः इदमधिकं व्रतं यद्गोब्राह्मणार्थे मरणम् । तत्र कुतो व्रतभङ्गशङ्काऽवकाशः । स्वयं मरणमभ्युपगम्य

* लौल्यं,—इति ख्रा० ।

† अनुष्ठितेभ्यः,—इति मु० ।

गोब्राह्मणरक्षणे प्रवृत्तो* यदि कथञ्चिज्जीवेत्, तदा गोब्राह्मणयोः सङ्गोप्ता† जीवन्नपि ब्रह्महत्याया मुक्तो भवति।

अङ्गानि विधायाङ्गिनं व्रतविशेषं विदधाति,—

**गोवधस्यानुरूपेण प्राजापत्यं विनिर्दिशेत्।**
**प्राजापत्यं ततः कृच्छ्रं विभजेच्च चतुर्व्विधम्॥ ३६॥ इति॥**

एकभक्तादिरूपं प्राजापत्यव्रतं गोवधस्य प्रायश्चित्तं, तच्च व्रतं वक्ष्यमाणप्रकारेण चतुर्व्विधम्। तत्र गोवधस्य तारतम्यं न्यायागमाभ्यां निश्चित्य‡ तत्तारतम्यानुसारेणान्यतमं प्राजापत्यव्रतविशेषं निर्दिशेत्। यतो वधतारतम्यानुसारेण प्रायश्चित्ततारतम्यं§ विनिर्देश्यं, ततो व्रततारतम्यानुगतं|| प्राजापत्यव्रतं चतुर्व्विधं यथा भवति, तथा विभजेत॥

इदानीं विभागं प्रकटयति,—

**एकाहमेकभक्ताशी एकाहं नक्तभोजनः।**
**अयाचिताश्येकमहरेकाहं मारुताशनः॥ ३७॥**
**दिनद्वयं चैकभक्तो द्विदिनं चैकभोजनः।**
**दिनद्वममयाची स्याद्द्विदिनं मारुताशनः॥ ३८॥**

---

* प्रवृत्तौ,—इति श्रा०।

† स गोप्ता,—इति मु०।

‡ गोवधस्य तारतम्याभ्यां योग्यायोग्याभ्यां निश्चित्य,—इति मु०।

§ प्राजापत्यव्रतविशेषतारतम्यं,—इति मु०।

|| व्रततारतम्याय,—इति मु०।

त्रिदिनं चैकभक्ताशी त्रिदिनं नक्तभोजनः ।
दिनत्रयमयाची स्यात् त्रिदिनं मारुताशनः ॥ ३९ ॥
चतुरहं चैकभक्ताशी चतुरहं नक्तभोजनः ।
चतुर्दिनमयाची स्याच्चतुरहं मारुताशनः ॥ ४० ॥ इति ॥

एकभक्तनक्तायाचितोपवासाः प्राजापत्यस्वरूपम् । सोऽयमाद्यः कल्पः । द्विगुणीभूतैकभक्तादिचतुष्टयं यत्, तत् द्वितीयः कल्पः । त्रिगुणीभूतैकभक्तादिचतुष्टयं तृतीयः कल्पः। चतुर्गुणीभूतैकभक्तादिचतुष्टयं चतुर्थः कल्पः । तएते चत्वारः कल्पा बधभेदेषु योजनीयाः । तद्यथा । एकहायनस्य बधे प्रथमः । द्विहायनस्य बधे द्वितीयः । त्रिहायणस्य बधे तृतीयः । उपरितनवयस्कस्य बधे चतुर्थः ।

यथोक्तव्रतचरणानन्तरकर्त्तव्यमाह,—

प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्‌ब्राह्मणभोजनम् ।
विप्राणां दक्षिणां दद्यात् पवित्राणि जपेद्‌द्विजः ॥ ४१ ॥
इति ॥

पवित्राणि पवमानसूक्तादीनि । भोजनदक्षिणा जपाः शक्त्यनुसारेण द्रष्टव्याः ।

उपस्थानव्रतादेशनचर्य्यात्मकान् त्रीन् प्रायश्चित्तपादानभिधाय शुद्धिप्रकाशनरूपञ्चतुर्थपादमाह,—

ब्राह्मणान् भोजयित्वा तु गोघ्नः शुद्धो न संशयः । इति।

स्वकीयविशुद्धिख्यापनार्थं स्वबन्धूनशेषान् ब्राह्मणान् भोजयेत् ।

एतावता चतुष्पादप्रायश्चित्तस्यानुष्ठितत्वात् अस्य शुद्धौ नास्ति कश्चित् संशयः।

सशिखमित्यादिना साङ्गं प्रायश्चित्तं यदुक्तं, तदेव च्यवन आह। "प्राजापत्यव्रतं गोवधे प्रायश्चित्तं, नखाणि रोमाणि छित्वा, सशिखं वपनं कृत्वा, त्रिषवणस्नानं गवामनुगमनं सह शयनं, समूत्रवणानि रथ्यासु चारयेत्*, व्रतान्ते ब्राह्मणभोजनम्"—इति। आचार्य्येणैकहायनादिचतुर्व्विधवध्यभेदमभिप्रेत्य व्रते पञ्चचतुष्टयमुपन्यस्तम्, तदेव भङ्ग्यन्तरेण वृद्धप्रचेता† आह,—

"एकवर्षे हते वत्से कृच्छ्रपादो विधीयते।
अबुद्धिपूर्व्वे पुंसां स्यात् द्विपादस्तु द्विहायने॥
त्रिहायणे त्रिपादः स्यात् प्राजापत्यमतः परम्"—इति॥

ननु आचार्य्योक्तादगोवधप्रायश्चित्तादधिकानि बहुविधानि गोवधप्रायश्चित्तानि नानामुनिभिर्दर्शितानि। तत्र कानिचित्कालेनाधिकानि। तद्यथा, एकमास-द्विमास-त्रिमासादिव्रतानि कालतोऽधिकानि। तथा, कानिचिद्दानेनाधिकानि। तद्यथैकगोदानमारभ्य सहस्रगोदानपर्य्यन्तानि। कानिचित्कायक्लेशेनाधिकानि। तद्यथा, द्वादशरात्रोपवासादीनि। वाढं, तत्र निमित्तगौरवं व्रतगौरवं च पर्य्यालोच्य न्यायेन विषयव्यवस्था कल्पनीया। तां च‡ वयं प्रदर्शयामः। तत्र याज्ञवल्क्यो व्रतचतुष्टयमाह,—

* सम्यक् व्रणानि दद्यात् सुचारयेत्,—इति मु०।

† वृहत्प्रचेता,—इति मु०।

‡ तानि च,—इति सो० स० शा० पुस्तकेषु।

"पञ्चगव्यं पिवेद्गोघ्नो मासमासीत संयतः ।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति ॥
कृच्छ्रं चैवातिकृच्छ्रञ्च चरेद्वाऽपि समाहितः ।
दद्यात् त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः"—इति ॥

तत्र गोस्वामिभेदमुपजीव्य व्यवस्था। जातिमात्रब्राह्मणस्वामिके त्रिरात्रोपवासो वृषभैकादशगोदानं च। क्षत्रियस्वामिके पञ्चगव्याशनम्। वैश्यस्वामिके मासमतिकृच्छ्रम्। शूद्रस्वामिके कृच्छ्रम्। विष्णुर्व्रतत्रयमाह,—

"गोघ्नस्य पञ्चगव्येन मासमेकं पलत्रयम्* (१) ।
प्रत्यहं स्यात्† पराको वा चान्द्रायणमथापि वा"—इति ॥

एतत्त्रयमपि क्षत्रियस्वामिकविषयम्। यत्तु शङ्खलिखिताभ्यामुक्तम्। "गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत्‡ सशिखं वपनं कृत्वा गोचर्मणा प्रावृतो गां चानुगच्छन् गोष्ठेशयो गां दद्यात्"—इति। एतत्तु वैश्यस्वामिकविषयम्। यत्तु सम्वर्त्तेनोक्तम्,—

"गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिन्तत्त्वतः शुभाम् ।

---

* निरन्तरम्,—इति शा ।

† प्राजापत्यं,—इति शा० ।

‡ पञ्चगव्याहारमात्रमुपवसन्,—इति मु० ।

---

(१) पलपरिमाणमुक्तं ज्योतिषे। "पलन्तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम्। तोलकत्रितयं ज्ञेयं ज्योतिर्विद्भिः स्मृतिसम्मतम्"—इति ; द्वादशभी रक्तिकाभिरेकोलौकिकोमाषको भवति, अष्टभिश्च माषकैरेकं तोलकम्।

गोघ्नः कुर्व्वीत संस्थानं गोष्ठे गोरूपसन्निधौ* ॥
तत्रैव क्षितिशायी स्यान्मासार्द्धं संयतेन्द्रियः।
सक्तुयावकभैक्षाशी पयोदधि घृतं शकृत् ॥
एतानि क्रमशोऽश्नीयात् द्विजस्तत्पापमोचकः।
शुद्ध्यते सार्द्धमासेन नखरोमविवर्जितः ॥
स्नानं त्रिषवणं कुर्य्याद्गवामनुगमं तथा।
एतत्समाहितः कुर्य्यात् स नरो वीतमत्सरः ॥
सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः।
ततश्चीर्णव्रतः कुर्य्यात् विप्राणां चैव भोजनम् ॥
भुक्तवत्सु च विप्रेषु गां प्रदद्याद्विचक्षणः।
वृषभं तिलधेनुं(१) वा ततो मुच्येत किल्बिषात्"—इति ॥

यच्च सुमन्तुनोक्तम्। "गोघ्नस्य गोप्रदा गोष्ठे शयनं द्वादशरात्रं पञ्चगव्यप्राशनं गवां चानुगमनम्"—इति। तत् शूद्रस्वामिकविषयम्। यत्तु मनुनोक्तम्†,—

* गोरूपसंश्रितः,—इति मु०।
† संवर्त्तेनोक्तम्,—इति मु०।

(१) तिलधेनुश्च वराहपुराणे उक्ता। "तिलधेनुं प्रवक्ष्यामि सर्व्वपापप्रणाशिनीम्। यां दत्वा पापकर्म्मापि मुच्यते नरकार्णवात्। चतुर्भिः सेतिकाभिश्च प्रस्थएकः प्रकीर्त्तितः। ते षोड़श भवेद्धेनुश्चतुर्भिर्वत्सको भवेत्। इक्षुदण्डमयाः पादा दन्ताः पुष्पमयास्तथा। नासा गन्धमयी तस्या जिह्वा गुड़मयी तथा। पृष्ठे ताम्रमयी सा स्याद्घण्टाभरणभूषिता। ईदृशीं कल्पयित्वा तु स्वर्णशृङ्गीं प्रकल्पयेत्। कांस्योपदोहां रौप्यक्षुरां पूर्व्वधेनुविधानतः"—इति। सेतिका कुड़वः, स च द्वादशप्रसृतिपरिमितः।

"उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत् ।
कृतवापो वसेद्गोष्ठे चर्मणाऽऽर्द्रेण संवृतः ॥
चतुर्थकालमश्नीयादक्षारलवणं[१] मितम् ।
गोमूत्रेण चरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥
दिवाऽनुगच्छेत्ता गास्तु तिष्ठन्नूर्द्ध्वं रजः पिबेत् ।
शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनी[२] भवेत् ॥
तिष्ठन्तीषु च तिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् ।
आसीनास्वपि चासीनो नियतो वीतमत्सरः ॥
आतुरामभियुक्तां वा चौरव्याघ्रादिभिर्भयैः[३] ।
पतितां पङ्कलग्नां वा सर्व्वप्राणैर्विमोचयेत् ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्व्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥
आत्मनो यदि वाऽन्येषां गृहे क्षेत्रे खलेऽपि वा ।

---

(१) "मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः"—इति कात्यायनेन प्रत्यहं कालद्वये भोजनविधानात् भोजनकालत्रयमतिक्रम्य चतुर्थकालं प्राप्य अश्नीयात् । तेन पूर्व्वदिने उपोष्य परदिने रात्रौ भुञ्जीतेत्यर्थः । अक्षारलवणं क्षारलवणभिन्नम् । क्षारं राजिकादि, लवणं सैन्धवादि । अक्षारलवणमकृत्रिमलवणं, तच्च सैन्धवादीति केचित् ।

(२) वीरासनमुक्तं विष्णुधर्म्मोत्तरे । "उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि । एतद्वीरासनं प्रोक्तमनाश्रित्योपवेशनम्"—इति ।

(३) भयैर्भयनिमित्तैश्चौरव्याघ्रादिभिरभियुक्तामाक्रान्तामित्यर्थः ।

भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम्॥
अनेन विधिना यस्तु गोघ्नो गा अनुगच्छति।
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति॥
वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः।
अविद्यमाने सर्व्वस्वं वेदविद्भ्यो निवेदयेत्"—इति॥

एतत् ब्राह्मणपरिगृहीताया बुद्धिपूर्वकवधविषये द्रष्टव्यम्। यत्त्वङ्गिरसोक्तम्,—

"उपपातकसंयुक्तो गोघ्नो भुञ्जीत यावकम्।
अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनम्[(१)]॥
कृतवापो वसेत् गोष्ठे चर्मणा तेन संवृतः।
द्वौ मासौ स्नानमप्यस्य गोमूत्रेण विधीयते॥
पादशौचक्रिया कार्य्या अद्भिः कुर्व्वीत केवलम्।
व्रतिवद्धारयेद्दण्डं समन्त्रां चैव मेखलाम्॥
गाश्चैवानुव्रजेन्नित्यं रजश्चासां सदा पिबेत्*।
तिष्ठन्तीषु च तिष्ठेच्च व्रजन्तीष्वप्यनुव्रजेत्॥
शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनी भवेत्।
गोमतीं च जपेद्विद्यामोंकारं वेदमेव च॥
आतुरामभियुक्ताश्च रोगव्याघ्रादिभिर्भयैः†।

* विषेत्,—इति मु०।

† आतुरामतिभीतां वा चोरव्याघ्रादिभिर्भयैः,—इति मु०पुस्तके पाठः।

(१) दिनद्वयमुपोष्य तृतीयदिने रात्रौ भुञ्जीतेत्यर्थः।

पतितां पङ्कलग्नाञ्च सर्व्वप्राणैर्विमोचयेत् ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्व्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥
आत्मनोयदि वाऽन्येषां गेहे क्षेत्रेऽथ वा खले ।
भक्षयन्तीं न कथयेत् पिवन्तं चैव वत्सकम् ॥
अनेन विधिना गोघ्नो यस्तु गा अनुगच्छति ।
स तद्वधकृतं द्वाभ्यां मासाभ्यां तु व्यपोहति ॥
वृषभैकादशागाश्च दद्यात्सुचरितव्रतः ।
अविद्यमाने सर्व्वस्वं वेदविद्भ्यो निवेदयेत्"—इति ॥

एतत् ब्राह्मणस्वामिककामकृतगोवधएव तारुण्यादिगुणवद्विषयं द्रष्टव्यम् । अत्र जप्यां गोमतीविद्यां यम आह,—

"गोमतीं कीर्त्तयिष्यामि सर्व्वपापप्रणाशिनीम् ।
स्तोत्रं मे वदतो विप्राः, शृणुध्वं सुसमाहिताः ॥
गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
अन्नमेव परं गावो देवानां हविरुत्तमम् ।
पावनं सर्व्वभूतानां रक्षन्ति च वहन्ति च ॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि ।
ऋषीणामग्निहोत्रेषु गावो होमप्रयोजिकाः ॥
सर्व्वेषामेव भूतानां गावः शरणमुत्तमम् ।
गावः पवित्रं परमं गावो मङ्गलमुत्तमम् ॥
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः ।

नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च॥
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः"।

यत्तु हारीतेनोक्तम्। "गोघ्नस्तच्चमूर्द्धलांगूलां परिधाय गामनुतिष्ठेत् तिष्ठमानासु आसीनाखासीनः संवेशमानासु संविशन् संवीतांगोवीतमत्सरः शीतवातोष्णातिवर्षेषु नात्मनस्त्राणं कुर्य्यात् गोरक्षत्वा चोरपङ्कव्याघ्रादिभ्यो* भयेभ्यो मोचयेदेवं सुचरित-प्रायश्चित्तो वृषभमेकादश गाश्च दत्त्वा त्रयोदशमासेन पूतो भवति"—इति। यदपि वशिष्ठेन,—

"गां चेद्धन्यात्तस्याश्चर्मणाऽऽर्द्रेण वेष्टितः†।
षण्मासकृच्छ्रस्तिष्ठेत वृषभैकादशाश्च गाः"—इति॥

दद्यादिति शेषः। देवलोऽपि। "गोघ्नः षण्मासान् तच्चर्मपरिवृतो गोग्रासाहारो(१) गोव्रतोपवासी गोभिरेव सहाचरन् मुच्यते"—इति। एतत्त्रितयमपि सवनस्थब्राह्मणगोवधे कामकृते द्रष्टव्यम्। यत्तु कात्यायनेनोक्तम्,—

"गोघ्नस्तच्चर्मसंवीतो वसेद्गोष्ठे तथा पुनः।
गाश्चानुगच्छेत् सततं रात्रौ रौवासनादिभिः॥

---

* व्याघ्रादीनां,—इति मु० पुस्तके।
† गां चेद्धन्यात्तस्याश्चर्म्मणार्द्रेण परिवेष्टितः,—इति शा० स० पुस्तकयोः।

---

(१) गोग्रासमाहरतीति गोग्रासाहारो गोग्रासाहर्त्ता इति तदर्थः। "कर्म्मण्यण्"—इत्यणि तत्पदं सिद्धम्।

वर्षशीतातपक्लेशवह्निपङ्कभयादिभिः ।

मोचयेत् सर्वयत्नेन पूयते वत्सरैस्त्रिभिः"—इति ॥

यच्च शङ्खेनोक्तम्,—

"निषाद*शूद्रहत्यायामगम्यागमने तथा ॥

गोवधे च तथा कुर्य्यात् परस्त्रीगमने तथा"—इति ।

गौतमोऽपि ।"गाञ्च वैश्यवत्[१]"—इति । एतत्त्रितयमपि कामकृते सवनस्थब्राह्मणगोवधे द्रष्टव्यम् । यत्तु यमेन,—

"गोसहस्रं शतं वाऽपि दद्यात् सुचरितव्रतः ।

अविद्यमाने सर्व्वस्वं वेदविद्भ्यो निवेदयेत्"—इति ॥

तत् सवनस्थश्रोत्रियगुणवद्गोवधे द्रष्टव्यम् । अतएव प्रचेताः । "स्त्रीगर्भिणीगोगर्भिणीबालवधेषु भ्रूणहा भवति"—इति । अनयैव दिशा व्यासादिवचनेष्वपि प्रायश्चित्तगौरवलाघवे गोगतगुणागुणौ परीक्ष्य विषयव्यवस्था योजनीया । वचनानि तु प्रदर्श्यन्ते । व्यासः,—

"मासं वाऽपि पिबेद्गोघ्नः शुचि गोमूत्रयावकम् ।

दद्याद्वा दशकं चैव धेनूनां ब्राह्मणाय वा†"—इति ॥

---

* पादाम्बु,—इति मु० पुस्तके ।

† दद्याच्च दशकं सेकं धेनूनां ब्राह्मणाय च,—इति मु० ।

---

(१) गां हत्वा वैश्यवत् वैश्यहत्यावत् प्रायश्चित्तं कुर्य्यादित्यर्थः ।

पैठीनसिः। "गोष्ठे वसन् यवागूं प्रसृतितण्डुलसृतां* मासं भुक्त्वा† गोभ्यः प्रियं कुर्व्वाणो गोघ्नः शुद्ध्यति"—इति। विश्वामित्रः,—

"कृच्छ्रांश्च चतुरः कुर्य्याद्गोवधे बुद्धिपूर्व्वके।
अमत्या तु व्रतं कुर्य्यात्‡ तदर्द्धं वृद्धबालयोः"—इति॥

जावालिः,—

"प्राजापत्यञ्चरेन्मासं गोहत्या§ चेदकामतः।
गोहितो गोऽनुगामी स्याद् गोप्रदानेन शुद्ध्यति"—इति॥

जातुकर्ण्यः,—

"गाञ्चेदकामतो हन्यात् ब्राह्मणानुज्ञया ततः।
प्राजापत्यत्रयं कृत्वा चार्पयेद्|| ब्राह्मणाय गाः"—इति॥

व्याघ्रः,—

"गाञ्चेद्धन्यान्नरोऽकामात् पणसप्तव्रतं तथा।
श्रोत्रियाय दरिद्राय दद्यात् शुद्ध्यर्थमात्मनः"—इति॥

हारीतः,—

---

* प्रभूततण्डुलकृतां,—इति मु०।

† भुञ्जानः,—इति मु०।

‡ अमत्या तु द्वयं कुर्य्यात्,—इति ग्रन्थान्तरीयः पाठः समीचीनः। "स्याच्चकामकृते यत्तु द्विगुणं बुद्धिपूर्व्वके"—इति वचनान्तरसंवादात्। व्रतस्य बुद्धिपूर्व्वकेऽप्यविशेषात् अमत्या तु व्रतमित्यसङ्गतएव पाठः प्रतिभाति।

§ गां हत्वा,—इति मु०।

|| प्राजापत्यव्रतं कृत्वा स्पर्शयेत्,—इति मु०।

"अकामाद्वा सकामाद्वा गोघ्नस्य पुरुषस्य वै ।
ब्राह्मणानुज्ञया* तत्र यथावदनुपूर्व्वशः ॥
सशिखं वपनं कुर्य्यात् मासमेकं व्रतं चरेत् ।
पयोशी(१) पञ्चगव्याशी† गोष्ठशायी जितेन्द्रियः ॥
गवामनुगमश्चैव तस्माच्च नियतव्रतः ।
अद्भिर्यस्तर्पयेन्नित्यं शोधयेद्दुष्कृतं स्मरन् ॥
एकरात्रं जले स्थित्वा त्रिरात्रं तदनन्तरम् ।
गोदानं सर्व्वशस्त्वा च ब्राह्मणेभ्यः प्रयच्छति ॥
स किल्विषात् समुत्थाय मुच्यते नात्र संशयः"—इति ।

चतुर्व्विंशतिमते,—

"गोघ्नः सौम्यत्रयं कुर्य्यात् कृच्छ्रं वा नवमासिकम् ।
गोमूत्रयावकाहारस्त्रिभिर्मासैस्तु वा शुचिः(२) ॥
गवामनुगमं कुर्य्याद् गवां मध्ये वसन् निशि ।
पञ्चगव्याशनो नित्यं गोवधात् तु प्रमुच्यते"—इति ॥

वृहस्पतिः,—

---

* ब्राह्मणान् ज्ञापयेत्,—इति मु० ।
† पिबेद्वै पञ्चगव्यानि,—इति मु० ।

---

(१) पयोशी. क्षीराशी । "कुरवोत्वर्जितं मन्त्रम्"—इतिवत् सन्धिरार्षः ।
(२) सौम्यत्रयं सौम्यकृच्छ्रत्रयम् । तथाच सौम्यकृच्छ्रत्रयं, नवमासव्यापक-प्राजापत्यव्रतं, मासत्रयगोमूत्रयावकाहारश्चेति त्रीणि प्रायश्चित्तान्यत्र विहितानि ।

"गोघ्नस्य पावनं सम्यग् गदतो मे निबोधत।
शस्त्रादिभिश्च हत्वा गा मानवं व्रतमाचरेत्॥
रोधादिना चाङ्गिरसमापस्तम्बोक्तमेव वा।
पादं चरेद्रोधवधे कृच्छ्रार्द्धं बन्धपातने॥
अतिवाह्ये च पादोनं कृच्छ्रमज्ञानताड़ने*(१)।
गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रताम्(२)॥
रोधादिना घातयित्वा द्विगुणं व्रतमाचरेत्।

---

* कृच्छ्रमाद्याज्ञताड़ने,—इति मु०।

---

(१) रोधः क्षीणायागोराहारप्रचारनिर्गमविरोधः। बन्धनं विहितेतर-बन्धनम्। "कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्ज्जिते"—इति तु बन्धनं विहितमेव। रात्रौ रक्षार्थं रोधबन्धनयोस्तु न दोषः। "सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः"—इति स्मरणात्। एतत् सर्व्वं नवमाध्याये वक्ष्यते।

(२) कपिला, "लाङ्गूलं श्वेतवर्णञ्च भालञ्च श्वेतमेव वा। सर्व्वाङ्गञ्चैव यस्यास्तु सर्व्वैर्वर्णैः सुशोभितम्। आवर्त्तनं पृष्ठदेशे लाङ्गूलेनैव चुम्बितम्। पृष्ठं सुशोभनञ्चैव सर्व्वलक्षणसंयुताम्। कपिलां तां विजानीयादिति भाग्येन लभ्यते"—इत्युक्तलक्षणा। दोग्ध्री,—

"अशीतिपलदुग्धस्य दोह्या गौर्या दिने दिने।
पीतवत्सा च या लोके दोग्ध्री सा परिकीर्त्तिता"॥

इत्युक्तलक्षणा। सुव्रता सुखसन्दोह्या।

अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीम्[१] ॥
हत्वा पूर्व्वविधानेन चरेदर्द्धं व्रतं द्विजः ।
ब्राह्मणान् भोजयेत् शक्त्या दद्याद्धेम तिलांश्च गाः ॥
हेमगोतिलदानेन* नरः पापात् प्रमुच्यते"—इति ।

गावः श्लाघ्यास्त्रिलोक्यामिति निगमगिरस्तादृशीनां बधे यत्
प्रायश्चित्तं प्रणीतं किमपि गणयतस्तच्च सामान्यगीतम्† ।
भारद्वाजान्ववायः प्रथितसमुदयः स्वोदितैरेव सूक्तै-
रध्यायस्याष्टमस्य व्यतनुत विवृतिं शाश्वतीं माधवार्य्यः ॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीर-बुक्कभूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां अष्टमोऽध्यायः ॥०॥

---

* हेमान्नतिलदानेन,—इति मु० ।
† सामान्यमेति,—इति स० शा० पो० ।

(१) अतिवृद्धा वृद्धत्वेन तृणच्छेदनासमर्था । अतिकृशा कृशत्वेन वाहन-दोहनायोग्या । बाला वर्षपर्य्यन्ता, तदतिक्रान्ता अतिबाला द्वितीयवर्षीया । तदुक्तम् । "वर्षमात्रा तु बाला स्यादतिबाला द्विवार्षिकी" —इति ।

# नवमोऽध्यायः ।



पादानुग्रहतोयस्य प्राप्ता मानुषविग्रहम् ।
मुनिभार्य्याऽनिशं रामं तं वन्देऽमितविक्रमम्* ॥

अष्टमाध्याये गोवधस्य सामान्येन प्रायश्चित्तमुपवर्णितम् । अथ नवमाध्याये रोधादिनिमित्तविशेषानुपजीव्य प्रायश्चित्तविशेषा अभिधीयन्ते । तत्र, "एकपादश्चरेद्रोधे द्वौ पादौ बन्धने चरेत्"—इति वक्ष्यति । तयोः पुरस्तादपादमाद्यश्लोकेन दर्शयति,—

**गवां संरक्षणार्थाय न दुष्येद्रोधबन्धयोः ।**
**तद्वधन्तु न तं विद्यात् कामकारकृतं तथा ॥१॥ इति ॥**

व्रजे शालायां वा गाः प्रवेश्य तृणादिभक्षणप्रतिबन्धोरोधः । गले पाशेन दोहाद्यर्थं पादेषु रज्वा वा नियन्त्रणं बन्धः । गोस्तु† रोधबन्धौ द्विविधौ, हितावहितौ च । रोगग्रस्ताया गोर्भक्षणनिवारणं हितो रोधः । क्षुधिताया गोः तृणादिभक्षणनिवारणमहितोरोधः । एवं बन्धस्यापि द्वैविध्यम् । तत्र, हितयोर्बन्धरोधयोः प्रत्यवायजनकत्वाभावान्न प्रायश्चित्तनिमित्तत्वम् । एतदेवाङ्गिरा-आह‡,—

---

* नास्त्ययं श्लोकोमुद्रितातिरिक्तपुस्तकेषु ।

† तौ च,—इति मु० ।

‡ अतएवाङ्गिराः,—इति मु० ।

"सायं सङ्गोपनार्थन्तु न दुष्येद्रोधबन्धयोः"– इति ।

लगुड़ादिभिर्निपातने प्रायश्चित्तमाह,—

**दण्डादूर्द्धं यदन्येन प्रहाराद्यदि पातयेत् ।**
**प्रायश्चित्तं यथा प्रोक्तं द्विगुणं गोव्रतं चरेत्* ॥२॥ इति ॥**

दण्डस्य लक्षणम्, "अङ्गुष्ठमात्र"—इत्यनेन वक्ष्यति । तस्मात् दण्डादूर्द्धमधिकप्रमाणेनेत्यर्थः । अन्येन लगुड़ादिना, पातयेन्मारयेत् । अकामकृते गोवधे यत् प्रायश्चित्तं पूर्व्वाध्याये प्रोक्तं, तदेवात्र द्विगुणीभूतमाचरेत् ।

इदानीं प्रायश्चित्तविशेषानभिधातुमन्यानि बधनिमित्तान्युपन्यस्यति,—

**रोधबन्धनयोक्त्राणि घातश्चेति चतुर्व्विधः† । इति ॥**

बधनिमित्तविशेषः । चतुर्व्विधान् रोधादिबधान् स्वयमेव स्पष्टीकरिष्यति ।

तेषु बधेषु प्रायश्चित्तान्याह,—

**एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ॥ ३ ॥**
**योक्त्रेषु पादहीनं स्याच्चरेत् सर्व्वं निपातने । इति ॥**

पूर्व्वाध्यायोक्तप्राजापत्यव्रतस्य पादभेदेन रोधादिबधेषु प्राय-

---

* द्विगुणं गोबधे चरेत्,—इति मु० ।

† चतुर्व्विधम्,—इति मु० ।

श्चित्तान्यवगन्तव्यानि। नन्वेतदङ्गिरोवचनेन विरुध्यते, अङ्गिरा हि मासद्वयकृच्छ्रं गोव्रतत्वेनाभिधाय रोधादिवधेषु तत्पादादीनि विधत्ते,

"पादं चरेत् रोधवधे द्वौ पादौ बन्धने चरेत्।
योजने पादहीनं स्याच्चरेत् सर्व्वं निपातने"—इति।

नायं दोषः। गुणवद्गुणविषयत्वेनाङ्गिरःपराशरवचनयोर्व्यवस्थापनीयत्वात्। अन्यथा, अङ्गिरसः सम्वर्त्तापस्तम्बाभ्यां सह विरोधः कथं परिह्रियेत। सम्वर्त्तः पञ्चकृच्छ्रं गोवधव्रतमभिधायैतदाह,—

"प्रायश्चित्तस्य पादन्तु निरोधे व्रतमाचरेत्।
द्वौ पादौ बन्धने चैव पादोनं योजने तथा॥
पाषाणैर्लोष्टकैर्दण्डैस्तथा शस्त्रादिभिर्नरः।
निपात्य संचरेत् सर्वं प्रायश्चित्तं विशुद्धये"—इति॥

आपस्तम्बोऽपि दिनचतुष्ककृत्यं* पादत्वेन प्रकल्प्येदमाह,—

"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः॥
एकपादञ्चरेद्रोधे द्वौ पादौ बन्धने चरेत्।
योजने पादहीनं स्याच्चरेत् सर्व्वं निपातने"—इति॥

नन्वेवमपि पूर्व्वापरविरोधो दुष्परिहरः, पूर्व्वाध्याये ह्यकामकृते षोड़शरात्रकृच्छ्रोऽभिहितः, अत्र तु कामकृते रोधवधे चतूरात्रोऽभिधीते। नायं दोषः। अत्र प्रामादिकस्य वालवत्सादिवधस्य प्रायश्चित्तमिति परिहरणीयत्वात्। एवं तर्हि चतूरात्राष्टरात्र

---

* दिनचतुष्टयकृतं,—इति मु॰ स॰।

द्वादशरात्रषोडशरात्ररूपाणां चतुर्व्विधानां कृच्छ्राणां बालवत्सादिविषयाणां पूर्व्वमभिहितत्वात् पुनरुक्तमिति चेत्। न। रोधादिनिमित्तस्य पूर्व्वमनुपलभ्यमानत्वात्। तत्र हि केवलं रजन्यादौ रक्षणार्थं पाशबद्धानां यादृच्छिकमरणमुपन्यस्तम्। एवं तर्हि रोधादीनां पुरुषापराधत्वेनाधिकं प्रायश्चित्तं वक्तव्यमिति चेत्। न, रोधनीयस्य वत्सादेः शूद्रस्वामिकत्वादिलक्षणस्य हीननिमित्तस्यात्र कल्पनीयत्वात्। तस्मात् न कोऽपि विरोधः।

वधनिमित्तस्य रोधस्य स्वरूपमाह,—

**गोष्ठे वाऽपि* गृहे वाऽपि दुर्गेष्वप्यसमस्थले ॥ ४ ॥**
**नदीष्वथ समुद्रेषु त्वन्येषु च नदीमुखे† ।**
**दग्धदेशे मृता गावः स्तम्भनाद्रोध उच्यते ॥ ५ ॥**

दुर्गाणि पर्व्वतसंकीर्णमार्गादीनि‡। असमस्थलं निम्नोन्नतप्रदेशः। अन्येषु वापीतड़ागादिषु। नदीमुखं समुद्रनदीसङ्गमप्रदेशः। दग्धदेशो दावाग्न्यादिना दग्धः समुष्णभस्माक्रान्तप्रदेशः। यथोक्तेषु स्थानेषु स्तम्भनाद्गावो मृता भवन्ति। अतस्तादृशस्तम्भनमात्रं रोध उच्यते। ईदृशरोधनिमित्तं प्रायश्चित्तमापस्तम्ब आह,—

"कान्तारेष्वथ दुर्गेषु गृहदाहभयेषु च।
यदि तत्र विपत्तिः स्यात् पादएको विधीयते"—इति ॥

---

* गोवाटे वा,—इति शा० स० ।

† नदीष्वथ समुद्रेष्वन्येषु नदीमुखेषु च,—इति शा० ।

‡ पर्व्वताग्रसङ्कीर्णमार्गानीति,—इति मु० ।

वधनिमित्तबन्धनस्य स्वरूपमाह,—

**योक्त्रदामकडोरैश्च कण्ठाभरणभूषणैः।**
**गृहे वाऽपि वने वाऽपि बद्धा स्याद्गौर्मृता यदि* ॥ ६ ॥**
**तदेव बन्धनं विद्यात् कामाकामकृतञ्च तत्। इति।**

योक्त्रं पाशः शकटयुगच्छिद्रसम्बन्धः। दामकं धेनुबन्धनहेतुः पाशः। डोरं रज्जुमात्रम्। कण्ठाभरणं घण्टाकिङ्किण्यादि। भूषणं ललाटादौ निबद्धवराटकादि। ईदृशैः साधनैर्बद्धा गौर्गृहे स्थिता वा चरणाय अरण्ये गता वा यदि म्रियते, तदा मरणनिमित्तं योक्त्रादिकमत्र बन्धनमित्युच्यते। गोषु योक्त्रादियोजनं कामकृतं बन्धनं, गोशालायां स्थापितेषु योक्त्रादिषु यदि गावोलग्नाः स्युस्तदानीमकामकृतं बन्धनमिति द्विविधं बन्धनं विज्ञेयम्। एतच्च सप्रायश्चित्तमापस्तम्ब आह,—

"कण्ठाभरणदोषेण गौर्व्वा यत्र विपद्यते।
चरेदर्द्धं व्रतं तत्र भूषणार्थं हि तत्कृतम्"—इति

वधनिमित्तस्य योक्त्रस्य स्वरूपमाह,—

**हले वा शकटे पङ्क्तौ पृष्ठे वा पीड़ितो नरैः ॥ ७ ॥**
**गोपतिर्म्मृत्युमाप्नोति योक्त्राद् भवति तद्वधः। इति।**

पङ्क्तिः खलमधि बन्धनं, गोपतिर्बलीवर्द्दः। स च स्थाविरेण रोगेण वा वोढुमशक्तो हलरथपङ्क्तिगोणीभारेषु(१) वाहितो म्रियेत,

* बद्धः स्याद्गौर्मृतो यदि,—इति पा०। एवं परत्र पुंलिङ्गः पाठः।

(१) गवादीनां पृष्ठे निधेयः धान्यादिपूर्णाधारविशेषो गोणी।

तदा तन्मरणनिमित्तं वहननियोजनं योक्त्रमित्युच्यते। हलादि-वाहनं दमनादीनामुपलक्षणम् । अतएवापस्तम्बः,—

"दमने दामने रोधे संघाते चैव योजने।
नस्ते सकलपाशैर्व्वा मृते पादोनमाचरेत्"—इति॥

अशिक्षितबलीवर्द्दस्य वोढुं शिक्षणं दमनम् । दाम्ना पाशेन सम्पादितो* दामनः । रोधोगलनिरोधः । सङ्घातः समूहः पूर्व्वोक्ता पङ्क्तिः, तत्र योजनं बन्धनम् । नस्तः नासिकायां डोरप्रक्षेपः । सकलपाशा इतरे सर्व्वे बन्धनविशेषाः ॥

वधनिमित्तस्य घातस्य स्वरूपमाह,—

**मत्तः प्रमत्त उन्मत्तश्चेतनो वाऽप्यचेतनः ॥ ८ ॥**
**कामाकामकृतक्रोधोदण्डैर्हन्यादथोपलैः।**
**प्रहता वा मृता वाऽपि तद्धेतुर्विनिपातने† ॥ ९ ॥**

मत्तोधनादिना दृप्तः। प्रमत्तो मद्यपानादिपरवशः‡। उन्मत्तो व्याध्यादिना विभ्रान्तः। चेतनो लोकव्यवहारादिक्षमः§। अचेतनो मुग्धः। मारयिष्यामीति बुद्धिः कामः। व्यर्थचेष्टामात्रमकामः। ताभ्यामुत्पादितः क्रोधोयस्यासौ दण्डादिभिर्यदि हन्यात्, तदा मरणमन्तरेण केवलं प्रहता स्यात्। तत्कामकृतः संप्रहारो घात-

---

* पादलग्नपाशेन सन्ताडिता,—इति मु०।

† हता वाऽपि मृता वापि तद्धि हेतुर्निपातने —इति शा०।

‡ मद्यपानादिना अवशः,—इति शा०।

§ लोकव्यवहारदक्षः,—इति शा०।

इत्युच्यते। अकामकृतन्तु मारणं घातः। दण्डोपलाभ्यां शस्त्रादीन्युपलक्ष्यन्ते। अतएवापस्तम्बः,—

"पाषाणैर्लगुडैः पाशैः शस्त्रेणान्येन वा बलात्।
निपातयति योगव्वैः* सर्व्वमेव समाचरेत्"—इति॥

दण्डादूर्द्धं यदन्येनेत्यत्र दण्डादधिकेन लगुडादिना कृतस्य प्रहारस्य प्रायश्चित्तनिमित्तत्वं वदताऽर्थाद्दण्डप्रहारस्य निर्द्दोषत्वमङ्गीकृतम्। तत्र कोऽसौ दण्ड इत्याकाङ्क्षायामाह,—

**अङ्गुष्ठमात्रस्थूलस्तु वाहुमात्रः प्रमाणतः† ।**
**आर्द्रस्तु सपलाशश्च दण्डइत्यभिधीयते॥ १०॥ इति॥**

अङ्गुष्ठमात्र इत्यनेन ततोऽधिकं स्थौल्यं व्यावर्त्त्यते, न त्वल्पम्, अल्पस्य वधहेतुत्वाभावात्। वाहुमात्र इत्यनेनाप्यधिकदीर्घव्यावृत्तिः। अतिदीर्घेण प्रहारे मुखपर्य्यन्तप्रसारणेन चक्षुराद्युपघातप्रसङ्गात्। आर्द्रत्वं सपलाशत्वञ्च वेदनाऽनुत्पत्त्यर्थम्। उक्तलक्षणेन दण्डेन भीतिमेवोत्पादयेत्, न तु वेदनामित्याशयः।

यथोक्तदण्डप्रहारेण रुग्नस्य गोः पातमूर्च्छनयोः सतोः प्रत्यवायप्रायश्चित्तप्रसक्तावपवदति,—

**मूर्च्छितः पतितो वाऽपि दण्डेनाभिहतः स तु।**
**उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशैव वा॥ ११॥**

---

* योगां वै,—इति मु०।

† वाहुमात्रप्रमाणकः,—इति मु०।

**ग्रासं वा यदि गृह्णीयात्तोयं वाऽपि पिबेद्यदि ।**
**पूर्व्वं व्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते ॥ १२ ॥**

यस्तु गौश्चिरं व्याधिपीड़ितोऽत्यन्तक्षमश्चारणार्थं यथोक्तदण्डेनाभिहतः सन्पतितो मूर्च्छितो वाऽपि भवेत्, स पुनरुत्थाय कानिचित्पदानि गच्छेत्, तदा प्रहर्त्तुः प्रत्यवायो नास्ति। अथोत्थातुमशक्तस्तदाऽपि तृणे भक्षिते नास्ति प्रत्यवायः। भक्षयितुमशक्तो यदि जलं पिबेत्, तदाऽपि नास्ति प्रत्यवायः। उत्थानतृणभक्षणजलपानान्यकृत्वा मूर्च्छानन्तरमेव म्रियेत चेत्, तदा प्रहर्त्ता प्रत्यवैतीत्यर्थादवगन्तव्यम् ।

गोगर्भस्य बधे प्रायश्चित्तमाह,—

**पिण्डस्थे पादमेकन्तु द्वौ पादौ गर्भसम्मिते ।**
**पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥ १३ ॥ इति ॥**

चतस्रो गर्भावस्थाः, पिण्डः सम्मितोऽचेतनः सचेतनश्चेति । गर्भाशये पतितं वीर्य्यं कललबुद्बुदादिक्रमेणार्द्धमासे पिण्डभावमापद्यते । सएव मासमात्रेण दार्ढ्यमापद्य सम्मित इत्युच्यते । सम्यङ्मितः परिवृतो दृढ़ीभूतः सम्मितः । स च सप्तमे मासि प्राणवायुसञ्चाररूपां चेतनामापद्यते । मासादूर्द्धमा सप्तमान्मासादचेतनः,—इत्युच्यते । तदूर्द्धं पतितोमृतो भवेत् । अत्र पिण्डस्थे गर्भे प्राजापत्यस्य पादमाचरेत्। सम्मितबधे अर्द्धकृच्छ्रम् । अचेतनबधे पादत्रयम्। सचेतनस्य चतुर्थस्य बधे प्रायश्चित्तं वक्ष्यति ।

पादकृच्छ्रादीनां चतुर्णामङ्गभूतांश्चतुरोवपनविशेषानाह,—

**पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च।**
**त्रिपादे तु शिखावर्जं सशिखन्तु निपातने॥ १४॥ इति॥**

रोमवपनेन* नखनिकृन्तनमप्युपलक्ष्यते। नितरां पातनं निपातनम्। सम्पूर्णस्य सचेतनस्य गर्भस्य वधे इत्यर्थः। इदं चतुर्विधं वपनं शङ्खोऽप्याह,—

"रोमाणि प्रथमे पादे द्विपादे श्मश्रुवापनम्।
पादहीने शिखावर्जं सशिखन्तु निपातने"—इति॥

नखनिकृन्तनं आपस्तम्ब आह,—

"पादे तु नखरोमाणि द्विपादे श्मश्रुवापनम्।
त्रिपादे तु शिखा धार्य्या चतुर्थे सशिखं स्मृतम्"—इति॥

वपनविशेषवच्चतुर्णां व्यवस्थितान् दानविशेषानाह,—

**पादे वस्त्रयुगञ्चैव द्विपादे कांस्यभाजनम्।**
**त्रिपादे गोवृषं दद्याच्चतुर्थे गोद्वयं स्मृतम्॥ १५॥ इति॥**

गोवृषो बलीवर्द्दः। द्विपादे कांस्यभाजनमशक्तस्य, शक्तस्य त्वर्द्धसुवर्णम्। तदाह शङ्खः,—

"कृच्छ्रपादे वस्त्रदानं कृच्छ्रार्द्धे काञ्चनं तथा[†](१)।

* रोमपदेन,—इति मु०।
† कृच्छ्रमर्द्धन्तु काञ्चनम्,—इति शा०।

(१) कृच्छ्रार्द्धे काञ्चनं तथेत्यनेन काञ्चनार्द्धदानं विधीयते, तथेत्यनेन चार्द्धस्य परामर्शात्। यद्यपि काञ्चनशब्दः स्वर्णमात्रवाची, स्वर्णस्य चार्द्धासम्भवः तस्य परिमाणापेक्षत्वात्, स्वर्णस्य च परिमाणविशेषाभावात्, तथापि उक्तादेव हेतोः काञ्चनशब्दस्य परिमाणविशेषावच्छिन्नस्वर्णपरत्वमङ्गीकर्त्तव्यम्। तथाच, "पञ्चकृष्णलकोमाषस्ते सुवर्णस्तु षोड़श"—इत्युक्तेरशीतिरत्तिकापरिमितं स्वर्णमेव काञ्चनपदेन ग्राह्यम्।

पादन्यूने तु गां दद्यात् पूर्णे गोमिथुनं स्मृतम्"—इति ॥

चतुर्थावस्थस्य सचेतनस्य गर्भस्य वधे प्रायश्चित्तमाह,—

**निष्पन्नसर्व्वगात्रस्तु दृश्यते वा सचेतनः ।**
**अङ्गप्रत्यङ्गसम्पूर्णे द्विगुणं गोव्रतं चरेत् ॥ १६ ॥ इति ॥**

अष्टमे मासे सर्वावयवसम्पूर्णो भवति*, प्रसवप्रत्यासन्नकाले सचेतन इतस्ततः सञ्चरन्नुपलक्षयितुं शक्यते। अङ्गानि शिरआदीनि, प्रत्यङ्गानि ग्रीवादीनि । तथाच स्मर्य्यते,—

"अङ्गान्यत्र शिरोहस्तौ वक्षः पार्श्वौ कटी तथा ।
पादाविति षडङ्गानि शास्त्रविद्भिः समासतः ॥
प्रत्यङ्गानि पुनर्ग्रीवा बाहू पृष्ठं तथोदरम् ।
ऊरू जङ्घे षडित्याहुस्तथा रोमनखं परम्"—इति ।

तैरङ्गैः प्रत्यङ्गैश्च सम्पूर्णे गर्भे निहते प्राजापत्यद्वयमाचरेत् । तदेतच्चतुर्विधं गोगर्भवधप्रायश्चित्तं षट्त्रिंशन्मतेऽपि दर्शितम्,—

"पाद उत्पन्नमात्रे तु द्वौ पादौ दृढतां गते ।
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥
अङ्गप्रत्यङ्गसम्पूर्णे गर्भे चेतःसमन्विते† (१) ।

* सम्पूर्त्तिर्भवति,—इति मु० ।
† चेतनेन समन्विते,—इति मु० ।

(१) चित्तार्थकचेतःशब्देन तत्कार्य्यं ज्ञानं लक्ष्यते । तेन, ज्ञानसमन्विते चैतन्यसमन्विते इत्ययमर्थो बोद्धव्यः ।

द्विगुणं गोव्रतं तत्र एषा गोघ्नस्य निष्कृतिः"—इति।

*आपस्तम्बोऽपि,—

"पादः सम्पन्नमात्रे तु द्वौ पादौ बन्धने[१] चरेत्।

पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम्॥

अङ्गप्रत्यङ्गसम्पूर्णे गर्भे चेतःसमन्विते।

द्विगुणं गोव्रतं तत्र एषा गोघ्नस्य निष्कृतिः"—इति*।

अवयवविशेषेषु प्रायश्चित्तविशेषानाह,—

**पाषाणेनाथ दण्डेन† गावो येनापघातिताः‡।**

**§शृङ्गभङ्गे चरेत्पादं द्वौ पादौ तेन घातने॥ १७॥**

**लाङ्गूले पादकृच्छ्रन्तु द्वौ पादावस्थिभञ्जने§।**

**त्रिपादं चैककर्णे तु चरेत् सर्वं निपातने॥ १८॥ इति॥**

येन पुंसा पाषाणादिसाधनैर्गवामुपघातः क्रियते, स पुमान् गोमरणाभावेऽप्यवयवभङ्गप्रत्यवायनिवृत्तये निर्दिष्टं प्रायश्चित्तविशेषमाचरेत्। यत्त्वङ्गिरसा दर्शितम्,—

---

* एतदादि, इति—इत्यन्तं नास्ति मु॰ पुस्तके।

† दण्डपाषाणकेनैव,—इति ग्रा॰।

‡ येनाभिघातिताः,—इति मु॰।

§ शृङ्गभङ्गे चरेत् पादं द्वौ पादावस्थिभञ्जने,—इत्यर्द्धमात्रं दृश्यते मु॰ पुस्तके।

---

(१) बन्धनपदेन बन्धनयोग्यकठिनावस्था लक्ष्यते। द्वौ पादौ दृढ़तां गते,—इत्येकवाक्यत्वात्।

"अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा ।
पातनञ्चैव शृङ्गस्य मासार्द्धं यावकं पिबेत्"—इति ॥

आपस्तम्बोऽपि,—

"अस्थिभङ्गं गवां कृत्वा शृङ्गभङ्गमथापि वा ।
त्वक्छेदे पुच्छनाशे वा मासार्द्धं यावकं पिबेत्"—इति ।

एतत् शृङ्गादिवक्रभङ्गविषयं, गुणवद्गोविषयं वा । यद्यप्यङ्गिरसोक्तम् *,—

"शृङ्गभङ्गेऽस्थिभङ्गे च चर्मनिर्मोचनेऽपि वा ।
दशरात्रं पिबेद्वत्सं स्वस्थाऽपि यदि गौर्भवेत्"—इति ।

वत्सं चीरादि । एतच्चाशक्तविषयम् ।

ननु वर्णितं शृङ्गभङ्गादिप्रायश्चित्तं न पर्य्याप्तमङ्गभङ्गादेः कियताऽपि कालेन मरणपर्य्यवसायित्वसम्भवाद्वधप्रायश्चित्तस्यैव[१] तच्चोचितत्वादित्याशङ्क्याह,—

**शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च ।**
**यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते ॥१९॥इति॥**

---

* इत्थमेव पाठः सर्व्वत्र । परन्तु 'यदप्यङ्गिरसोक्तम्'—इति पाठो भवितुं युक्तः ।

---

(१) शृङ्गभङ्गादेः कालान्तरे मरणपर्य्यवसायित्वे सति स शृङ्गभङ्गादिः केवलं शृङ्गभङ्गादिरेव न भवति, किन्तु सएव शृङ्गभङ्गादिर्वधरूपोऽपि भवति । प्राणवियोगफलकव्यापारस्यैव वधपदार्थत्वात्, उक्तस्थले च शृङ्गभङ्गादेस्तथात्वात् । अतस्तत्र वधप्रायश्चित्तमेवोचितमिति भावः ।

शृङ्गभङ्गाद्यनन्तरं षण्मासमध्ये यदि म्रियते, तदानीं शृङ्गादि-भङ्गस्य तन्निमित्तत्वशङ्कया(१) वधप्रायश्चित्तं कर्त्तव्यं भवेत् । यदा पुनः पदादिभङ्गे षट्सु मासेषु जीवति, तदा वधप्रायश्चित्तं न विद्यते, किन्तु भङ्गादिनिमित्तमेव प्रायश्चित्तमनुष्ठेयम् ।

व्रणभङ्गादौ न केवलं प्रायश्चित्ताचरणं, किन्तु तच्चिकित्सा-ऽपि कर्त्तव्येत्याह,—

**व्रणभङ्गे च कर्त्तव्यः स्नेहाभ्यङ्गस्तु पाणिना ।**
**यवसश्चोपहर्त्तव्यो यावद्दृढबलो भवेत् ॥ २० ॥ इति ॥**

व्रणस्य भङ्गस्य व्रणभङ्गौ । त्वक्छेदो व्रणः, शृङ्गाद्यस्थिच्छेदो-भङ्गः। स्नेहाभ्यङ्गः इत्यन्यौषधप्रक्षेपस्याप्युपलक्षणम् । यवसस्तृणविशेषः । तेन भक्ष्यं सर्वमुपलक्ष्यते । चिकित्सां शङ्खोऽप्याह,—

"यवसश्चोपहर्त्तव्यो यावद्रोहितितद्व्रणा(२) ।
संपूर्णे दक्षिणां दद्यात्ततः पापात् प्रमुच्यते"—इति ।

---

(१) शृङ्गभङ्गाद्यनन्तरं षण्मासाभ्यन्तरे गोर्मरणेऽपि कदाचिद्रोगान्त-रोत्पत्त्याऽपि मरणं सम्भवतीति शृङ्गभङ्गादिनिमित्तकमेवेदं मरण-मिति निश्चयस्य दुःशकत्वं, परन्तु शृङ्गभङ्गादेर्मरणहेतुत्वं तदानीमपि शङ्कितुं शक्यतएवेत्याशयेन तन्निमित्तत्वशङ्कयेत्युक्तमिति ध्येयम् ।

(२) रोहित,—इति णिच्प्रयोगात् व्रणरोहणानुकूलः कश्चन व्यापारः प्रतीयते । स च व्यापारश्चिकित्सैव, तस्याएव व्रणरोहणानुकूलत्व-सम्भवात् । अतएव सुतरामिदं वचनं चिकित्सायां प्रमाणमिति भावः ।

यावद्दृढबल इति चिकित्साया अवधिरभिहितः। तमेवानूद्यानन्तरकर्त्तव्यमाह,—

**यावत् संपूर्णसर्वांगस्तावत्तं पोषयेन्नरः* ।**
**गोरूपं ब्राह्मणस्याग्रे नमस्कृत्वा विसर्ज्जयेत्† ॥२१॥ इति**

अङ्गसम्पूर्त्तिपर्य्यन्तं पोषणं कृत्वा पुष्टं तद्गोस्वरूपं ब्राह्मणस्याग्रे नमस्कृत्य चिकित्साया उपरमेत् ।

सम्यक् चिकित्सायां कृतायामपि प्रहारदार्ढ्यात् पुष्ट्यभावे किं कर्त्तव्यमित्यत आह,—

**यद्यसम्पूर्णसर्व्वांगो हीनदेहोभवेत्तदा ।**
**गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिर्दिशेत् ॥२२॥ इति॥**

गोघातकस्य यत् प्रायश्चित्तं‡ तदर्द्धमनुतिष्ठेत् ।

इदानीं वैर्य्यादिद्वेषेण कामकृतगोबधे निमित्तविशेषानुपजीव्य प्रायश्चित्तविशेषानाह,—

**§काष्ठलोष्टकपाषाणैः शस्त्रेणैवोद्धतोबलात् ।**

---

* तावत् संपोषयेन्नरः,—इति मु० ।

† विवर्जयेत्,—इति शा० स० ।

‡ गोघातकस्य प्रायश्चित्तं प्राजापत्यं,—इति शा० ।

§ त्रयोविंशतितमादि षड्विंशतितमपर्य्यन्तं श्लोकचतुष्टयं, अतिदाहे चरेत् पादमित्याद्यूनत्रिंशत्तमश्लोकानन्तरं दृश्यते मुद्रितपुस्तके। परन्तु वङ्गीयपुस्तकेषु अस्मिन् क्रमे दर्शनादिहैव रक्षितम् ।

व्यापादयति यो गान्तु तस्य शुद्धिं विनिर्द्दिशेत्॥२३॥
चरेत् सान्तपनं काष्ठे प्राजापत्यन्तु लोष्टके।
तप्तकृच्छ्रन्तु पाषाणे शस्त्रेणैवातिकृच्छ्रकम्॥२४॥ इति॥

प्राजापत्यतप्तकृच्छ्रयोः स्वरूपं पूर्व्वमेवोपदर्शितं, सान्तपनातिकृच्छ्रयोः स्वरूपं तूपरिष्टादुच्यते।

न च काष्ठादीनां वधनिमित्तत्वे समाने सति प्रायश्चित्तवैषम्यमयुक्तमिति शङ्कनीयम्। शास्त्रैकगम्येऽर्थे युक्तिभिरुपालम्भासम्भवात्[१]। एवं तर्हि सर्व्वत्र न्यायविचारो निरर्थक इति चेत्। न, वचनानां परस्परविरोधे सति न्यायस्य निर्णायकत्वात्[२]।

यथोक्तेषु चतुर्षु क्रमेण चतुर्व्विधान् दक्षिणाविशेषानाह,—

---

(१) धर्म्मो हि शास्त्रैकसमधिगम्योऽर्थः। "श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्व्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम्"—इत्यादिना शास्त्रस्य धर्म्मलक्षणत्वोक्तेः। तथाच जैमिनिसूत्रम्। "चोदनालक्षणोऽर्थो धर्म्मः (मी० १अ० १पा० २सू०)"—इति। "धर्म्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्। (मी० १अ ३पा० १सू०)"—इति च। एवञ्च धर्म्मे न्यायोऽकिञ्चित्करः। शुचि नरशिरः कपालं प्राण्यङ्गत्वात्—इत्यादिवदागमबाधितन्यायस्याप्रामाण्यं न्यायविद्भिरप्युक्तम्। अतएवोक्तं मीमांसाभाष्यकृद्भिः। "किमिव हि वचनं न कुर्य्यान्नास्ति वचनस्यातिभारः"—इति।

(२) अयमाशयः। वाचनिक्येव व्यवस्था। यत्र च वचनानां परस्परविरोधस्तत्र तदविरोधसम्पादनार्थं वचनार्थावधारणे विषयभेदकल्पने च न्यायस्योपयोगः। यत्रेदमुक्तम्। "विरोधो यत्र वाक्यानां

**पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः ।**
**तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥ २५ ॥ इति ॥**

गावो देया इति शेषः । त्रयस्तिस्रः ।

प्रमापितस्य गोः परकीयत्वे तस्मै गोस्वामिने गां दत्वा पश्चात् यथोक्तं व्रतमाचरेदित्याह,—

**प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम् ।**
**तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥ २६ ॥ इति ॥**

महिषाश्वादिष्वपि स्वामिने दानं समानमिति विवक्षया प्राणभृतामित्युक्तम् । तत्तदेत्प्रतिरूपदानं मनुरब्रवीत् । तथाच मानवं वचनम्,—

"यो यस्य हिंस्यात् द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम्"—इति ॥

रोधबन्धनयोक्ताणि,—इत्यत्र रोधबन्धनयोः प्रत्यवायहेतुत्वं वर्णितं, इदानीं तस्यापवादमाह,—

---

प्रामाण्यं तत्र भूयसाम् । तुल्यप्रमाणसत्त्वे तु न्यायएव प्रवर्त्तकः"—इति । अतएव, "युक्तिहीनविचारेण धर्म्महानिः प्रजायते"—इत्यनेनापि विचारएव युक्तिरनुसरणीयेत्युक्तम् । वचनानां परस्परविरोधाभावे तु विचारएव नास्तीति भावः ।

***अन्यत्रांकनलक्ष्मभ्यां वाहने मोचने तथा।**
**सायं संगोपनार्थञ्च† न दुष्येद्रोधबन्धयोः॥२७॥ इति॥**

वृषोत्सर्गादौ दाहादिना सस्थिचिह्नकरणमङ्कनं, तत्रैव गोमयहरिद्रादिना तात्कालिकचिह्नकरणं लक्ष्म, ताभ्यामन्यत्र, उक्तचिह्नरहितेषु बलीवर्द्देष्वित्यर्थः। वाहनं गोणीभाराद्यारोपणं, मोचनं तस्यैव भारस्यावरोपणम्। तत्रोभयत्रैव बलीवर्द्दशरीरे यद्यपि व्यथा जायते, तथापि प्रत्यवायो नास्ति। चिह्नद्वयरहितेषु बलीवर्द्देषु वाहनमोचनयोः शास्त्रेणाङ्गीकृतत्वात्। चिह्नोपेतेषु वृषेषु वाहनं न शास्त्रीयं, वाहननिवृत्तिज्ञापनायैव चिह्नकरणात्। तथा, रात्रौ संरक्षणार्थं रोधबन्धनयोः कृतयोरपि नास्ति प्रत्यवायः।

पुनरपि व्यवस्थितान् प्रायश्चित्तविशेषान् विधातुं चत्वारि निमित्तान्युपन्यस्यति,—

**अतिदाहेऽतिवाहे च नासिकाभेदने‡ तथा।**
**नदीपर्व्वतसञ्चारे प्रायश्चित्तं विनिर्दिशेत्॥२८॥ इति॥**

रोगचिकित्सार्थमङ्कनार्थं वा यावद्दहनमपेक्षितं, तावतोऽधिकदहनमतिदाहः। यावन्तं भारमक्लेशेन वोढुं शक्नोति, तावतोप्य-ऽ

---

* सप्तविंशतितमाद्यूनत्रिंशत्तमपर्य्यन्तं श्लोकत्रयं, यद्यसम्पूर्णसर्व्वाङ्गः— इत्यादि द्वाविंशतितमश्लोकानन्तरं पठ्यते मुद्रितपुस्तके। परन्तु वङ्गीयपुस्तकेष्वस्मिन् क्रमे पाठादिहैव रक्षितम्।

† रात्रौ संयमनार्थन्तु,—इति मु०।

‡ छेदने,—इति मु०।

धिकस्य भारस्यारोपणमतिवाहः । रज्जुस्थित्यर्थं नासिकायां छिद्रकरणं भेदनम् । पातवधसम्भावनोपेतयोर्दुर्गमयोर्नदीपर्व्वतयोः प्रेरणं नदीपर्व्वतसञ्चारः ।

तेषु चतुर्षु निमित्तेषु क्रमेण प्रायश्चित्तान्याह,—

**अतिदाहे चरेत्पादं द्वौ पादौ वाहने चरेत् ।**
**नासिक्ये पादहीनन्तु चरेत् सर्व्वं निपातने ॥२९॥ इति ॥**

दुर्गमनदीपर्व्वतसञ्चारेण प्रमादात् पतित्वा मरणं निपातनम् । अतिदोहे,—इति पाठान्तरम्(१) । तस्मिन् पक्षे वत्सार्थं पयोऽनवशेष्य कृत्स्नक्षीरदोहनमतिदोहः । तत्र वत्सोपघातप्रत्यवायनिमित्तं धेनूपघातनिमित्तं वा प्रायश्चित्तम् । यत्तु हारीतेनातिदाहातिवाहनादौ चान्द्रायणमुक्तम्,—

"भेदने वाहने चैव कर्णच्छेदनबन्धने ।
अतिदोहातिदाहाभ्यां* (२) कृच्छ्रं चान्द्रायणं चरेत्"—इति ॥

तद्बहुनिमित्तसन्निपातविषयं द्रष्टव्यम्(३) ।

यस्तु गौर्गर्टे वद्धः प्रमादाद्गृहदाहे सति यदि म्रियेत, तदा किं प्रायश्चित्तमित्यत आह,—

---

* वाहाभ्यां,—इति मु० ।

---

(१) अतिदाहे,—इत्यत्र, अतिदोहे,—इति पाठान्तरमित्यर्थः ।

(२) चिकित्साद्यर्थं यावान् दाहोऽपेक्षितस्तावतो दाहादधिकोदाहोऽतिदाहः ।

(३) तथाच, भेदनवाहनकर्णच्छेदनबन्धनातिदोहातिवाहेषु बहुषु निमित्तेषु मिलितेषु सत्सु चान्द्रायणमित्यर्थः ।

**दहनाच्चेद् विपद्येत अनड्वान् योक्त्रयन्त्रितः।**
**उक्तं पराशरेणैव ह्येकपादं यथाविधि ॥ ३० ॥ इति ॥**

वृद्धपराशरेण यथाविध्युक्तमेकं पादकृच्छ्रं चरेत्—इति शेषः। एतच्चापस्तम्बोऽप्याह,—

"कान्तारेष्वथवा दुर्गे गृहदाहे खलेषु च।
यदि लिङ्ग* विपत्तिः स्यात् पाद एको विधीयते"—इति ॥

बुद्धिसमाधानाय योक्तान्यनुक्तानि च निमित्तानि संगृह्णाति,—

**रोधनं बन्धनं चैव भारः प्रहरणं तथा।**
**दुर्गप्रेरणयोक्त्रं च निमित्तानि वधस्य षट् ॥३१॥ इति॥**

तत्र रोधबन्धनयोक्त्राणि पूर्व्वमेव व्याख्यातानि। भारोऽतिवाहनं, प्रहरणं शस्त्रादिभिस्ताड़नं, दुर्गप्रेरणं प्रौढ़भारं वाहयित्वा अत्युन्नतपर्व्वताग्रे नयनम्।

पूर्व्वं गृहे बद्धस्य पशोर्दाहनिमित्तं प्रायश्चित्तमभिहितं, इदानीं तस्यैव मरणे बधनिमित्तं प्रायश्चित्तमाह,—

**बन्धपाशसुगुप्ताङ्गो म्रियते यदि गोपशुः।**
**भवने, तत्र पापी स्यात् प्रायश्चित्तार्द्धमर्हति ॥ ३२॥ इति॥**

बन्धहेतुः पाशो बन्धपाशः। तेन सुगुप्तानि रोधितानि गलपादादीन्यङ्गानि यस्यासौ बन्धपाशसुगुप्ताङ्गः। स चेद्भवने म्रियेत, तदा कृच्छ्रार्द्धमाचरेदिति। यद्यपि पूर्व्वत्र, द्वौ पादौ

---

* तत्र,—इति मु०।

बन्धने चरेदित्यनेनेदं प्रायश्चित्तमुपवर्णितं, तथाप्यत्र बन्धनयोग्यायोग्यरज्जुविवेकविकीर्षया तस्यैव पुनरनुवाद इत्यदोषः । यद्वा, पूर्व्वोक्तस्यैव प्रायश्चित्तस्य विहितरज्जुबन्धविषयत्वमनेन समर्थ्यते । निषिद्धरज्जुबन्धने तु संपूर्णं कृच्छ्रमवगन्तव्यम् ।

तत्र तावद्वर्ज्यान् रज्जुविशेषान् दर्शयति,—

न नारिकेलै*र्न च शाणपाशै-
र्न चापि मौञ्जैर्न च वल्कशृङ्खलैः ।
एतैस्तु गावो न निबन्धनीया†
बद्ध्वाऽपि तिष्ठेत् परशुं गृहीत्वा ॥ ३३ ॥

वल्कानि वंशादिजनितानि‡ । शृङ्खलान्ययस्ताम्रादिनिर्मितानि। नारिकेलादिभिर्गावो न बन्धनीयाः। यदि दामान्तरासम्भवादेतैर्दामभिर्बध्येरन्, तदा तन्निमित्तोपद्रवप्रसङ्गोभवत्यतस्तच्छेत्तुं हस्तेन परशुं गृहीत्वा सावधानस्तिष्ठेत्। नारिकेलादिभिः, कार्पासतन्त्वादिजन्या दृढ़ा रज्जवः सर्व्वा उपलक्ष्यन्ते(१) । अतएवाङ्गिराः,—

"न नारिकेलैर्न च फालकेन
न मौञ्जिना नापि च वल्कलेन ।

---

* 'नारिकेल,—स्थाने 'नालिकेर'—इति पाठो मुद्रितपुस्तके सर्व्वत्र ।
† यदि बन्धनीया,—इति मु० ।
‡ वसनादिजनितानि,—इति मु० ।

---

(१) तथाच नारिकेलादिग्रहणं प्रदर्शनार्थं, यया कदाचिद्दृढ़या रज्वा गावोन बन्धनीयाः,—इति तात्पर्य्यम् ।

एतैरनड्वान् न हि बन्धनीयो-

बध्वाऽपि तिष्ठेत् परशुं गृहीत्वा"—इति॥

फालकं कार्पासजन्यम्।

उपादेयान् रज्जुविशेषानाह,—

**कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम्॥ इति॥**

यथा पाशा अनुपद्रवकारिणो विवक्षिताः, तथा स्थानमपि निम्नोन्नतादिदोषरहितं(१) विवक्षितम्। तथाच व्यासः,—

"कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते"—इति।

ननु नारिकेलादिपाशानामुपद्रवकारित्वसम्भावनया प्रतिषेधः कृतः, स च दोषः कुशादिपाशेष्वपि समानः, तेषां सहसा चोटनेऽपि गृहदाहादौ पलायमानानाङ्गवाङ्गलगतपाशेषु लग्नेनाग्निनोपद्रवसम्भवादित्यत आह,—

**पाशलग्नाग्निदग्धासु प्रायश्चित्तं न विद्यते॥३४॥ इति॥**

कुशादिमयपाशानां शीघ्रं भस्मीभावात् सकृत् सन्तापमात्रं सम्पद्यते, न तु प्राणान्तिक उपद्रवः। अतोन तत्र प्रत्यवायः।

तत्रापि केनचित् प्रकारेणोपद्रवसम्भावनामुद्भाव्य* तत्रोचितं प्रायश्चित्तमाह,—

---

* सम्भावनासद्भावात्,—इति शा० स०। मम तु, सम्भावनासद्भावे,—इति पाठः प्रतिभाति।

---

(१) निम्नोन्नतेति भावप्रधानोऽयं निर्देशः। निम्नोन्नतत्वादिदोषरहितमित्यर्थः।

**यदि तत्र भवेत् काष्ठं प्रायश्चित्तं कथं भवेत् ।**
**जपित्वा पावनीं देवीं मुच्यते तत्र किल्बिषात् ॥३५॥ इति ॥**

गलगते पाशे दह्यमाने यदि कुशमूलादिरूपं किञ्चित् काष्ठं तस्मिन् पाशेऽवतिष्ठेत्, तदा तदुल्मुकसंसर्गादीषद्दाहो भवेत् । तत्र गायत्रीजपेनैव शुद्धिः । पावमानीयमिति पाठे, पवमानसूक्तं जपित्वेति व्याख्येयम् ।

यस्मिन् देशे मरणान्तिकः प्रमादः सम्भावितः, तत्र गावो न प्रेषणीयाः । यदि बुद्धिमान्द्यात् प्रेषयेत्, तदा तत्र मरणे प्रायश्चित्तं* चरणीयमित्याह,—

**प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन् ।**
**गवाशनेषु विक्रीणंस्तथा प्राप्नोति गोवधम् ॥३६॥ इति ॥**

यस्मिन् चारणप्रदेशे जीर्णकूपवाप्यादयो विद्यन्ते, तत्र चारणार्थं प्रेषितो यदि म्रियते ; तथा, यत्र प्रौढ़ा वृक्षाश्छिद्यन्ते, तत्र प्रेषितः प्रौढ़शाखापातेन मरणं प्राप्नोति ; गोमांसभक्षिणो म्लेच्छा गवाशनाः, तेषु विक्रीता गौस्तैर्मार्य्यते । अतस्तेषु त्रिष्वपि स्थानेषु प्रेरको गोव्रतं चरेत् ।

उदूषभयज्ञादावुपघाते† पादत्रयं प्रायश्चित्तमाह,—

**आराधितस्तु यः कश्चित् भिन्नकक्षो‡ यदा भवेत् ।**
**श्रवणं हृदयं भिन्नं मग्नो वा कूपसङ्कटे ॥३७॥**

---

* प्राजापत्यं,—इति मु० ।

† उत्सृष्टवृषभयज्ञादावुपघाते,—इति मु० ।

‡ भिन्नवक्षा,—इति मु० ।

कूपादुत्क्रमणे चैव भग्नो वा ग्रीवपादयोः।
सएव म्रियते तत्र त्रीन् पादांस्तु समाचरेत् ॥३८॥ इति ॥

उदृषभयज्ञे*(१) हि बलीवर्द्धमाराध्य धावयन्ति। तत्रातित्वरया धावतः† कदाचित् कच्चो‡ भिद्यते। केनचिदुपघातेन§ कर्णे वा हृदये वा भेदो भवति। कूपसङ्कटं नाम, सङ्कीर्णत्वणलं जलपूर्णत्वं च(२)। तत्र वा मग्नो भवति। तादृशे कूपे पतितस्य कथञ्चिदुत्क्रमणे ग्रीवादिर्भग्नो भवति। तेनैव च निमित्तेन यदि म्रियेत, तदा पादत्रयकृच्छ्रमाचरेत्। अवारितः,—इति वा पाठः(३)। तस्मिन् पक्षे, चारणार्थं प्रेषयता पुरुषेण संभावितप्रमादस्थलेभ्यो(४) निवारणीयत्वात् अनिवारणे यथोक्तं प्रायश्चित्तमिति व्याख्येयम्।

यत्र तृषार्त्ता गावः स्वयमेवागाधकूपादिषु|| प्रविश्य विपद्यन्ते

* उत्स्वस्त्रृषभयज्ञे,—इति मु०।
† तत्रातित्वरया वा पततः,—इति मु०।
‡ वक्षो,—इति मु०।
§ केनचिदुपसाधनेन,—इति मु०।
|| स्वयमेव प्रौढ़कूपादिषु,—इति मु०।

(१) उदृषभयज्ञोनाम आचारप्राप्तो धर्म्मानुष्ठानविशेष उदीच्यैः क्रियते। व्यक्तमिदं मीमांसादर्शनस्य प्रथमाध्यायतृतीयपादगते अष्टमाधिकरणे शावरभाष्यादौ।

(२) यत्र कूपे बहूनि तृणानि सङ्कीर्णानि विद्यन्ते इत्यर्थः। तथाच, तृणसङ्कीर्णो जलपूर्णश्च कूपः कूपसङ्कटपदेनाभिप्रेयते।

(३) आराधितस्तु,—इत्यत्र, अवारितस्तु,—इति पाठान्तरमित्यर्थः।

(४) सम्भावितः प्रमादो येषु, तथाविधेभ्यः स्थलेभ्य इत्यर्थः।

स्वामी तु तत् न जानाति, तत्र न स्वामिनः प्रत्यवाय इत्याह,—

**कूपखाते तटा* बन्धे नदीबन्धे प्रपासु च ।**
**पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते ॥ ३९॥ इति ॥**

अगाधः कूपः कूपखातः। तटेन नदीतीरेण आ समताद्बध्यते,— इति तटाबन्धः प्रौढतटाकः। नदीबन्धः सेतुः। घर्मकाले गवामुदकपानार्थं निर्मिताः प्रौढाः पाषाणादिद्रोण्यः प्रपा। तेषु† पातुं प्रविश्य मृतास्वपि न स्वामिनः प्रायश्चित्तं विद्यते ।

एवं तर्हि तादृशकूपादिनिर्मातुः प्रत्यवायोऽस्तीत्याशङ्काह,—

**कूपखाते तटाखाते दीर्घीखाते तथैव च‡ ।**
**अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यते ॥ ४० ॥ इति ॥**

खननं खातः। दीर्घ्यो वाप्यः। अन्यशब्देन जलद्रोणीकुल्यादय उच्यन्ते। एतेषां धर्मार्थं निर्मितत्वात् कथञ्चित्तत्र पतित्वा मृतास्वपि गोषु न निर्मातुः प्रत्यवायोऽस्ति ।

कूपखातादिवद्वेश्मखातादावपि प्रत्यवायाभावमाशङ्क्य तस्य धर्मार्थत्वाभावादस्ति प्रत्यवाय इत्याह,—

**वेश्मद्वारे निवासेषु यो नरः खातमिच्छति ।**
**स्वकार्य्यगृहखातेषु प्रायश्चित्तं विनिर्दिशेत् ॥ ४१॥ इति ॥**

---

* तड़ा,—इति वङ्गीयपुस्तकेषु पाठः। एवं परत्र।

† तासु,—इति मु० ।

‡ कूपखाते नदीखाते तटाखाते तथैव च,—इति मु० ।

वेश्मद्वारं गृहप्रवेशनिर्गममार्गः। निवासाः शालाव्रजादीनि गवां स्थानानि। तत्र यो नरः खनति, तस्य पुरुषस्य खातपातेन गोमरणे पूर्वोक्तं पादत्रयं* प्रायश्चित्तं विनिर्दिशेत्। तथाऽन्यत्रापि गृहभित्ति-वेद्यादिकरणार्थमङ्गनोपवनादिषु गोसञ्चारसम्भावनावत्सु प्रदेशेषु कृताः खाताः गृहखाताः, स्वेन कृताः स्वकार्य्याः, स्वकार्य्याश्च ते गृह-खाताश्च स्वकार्य्यगृहखाताः। तेषु गोविपत्तौ पादत्रयं प्रायश्चित्तं विनिर्दिशेत्।

गृहखातादिवद्गृहे सर्पादिना वधेन प्रत्यवायप्राप्तावपवदति,—

**निशि बन्धनिरुद्धेषु सर्पव्याघ्रहतेषु च।**
**अग्निविद्युद्विपन्नानां प्रायश्चित्तं न विद्यते॥४२॥इति॥**

रात्रौ संरक्षणार्थं पाशबन्धेन निरुद्धा गावः सर्पव्याघ्रादिभि-र्यदि हन्येरन्, तदा स्वामिनः प्रत्यवायो नास्ति। अग्निर्ग्रामदाहः, विद्युदशनिः। ताभ्यां विपन्नानां न प्रत्यवायहेतुत्वम्। ननु, दहनात्तु विपद्यन्ते,—इत्यत्र प्रायश्चित्तमुपवर्णितम्, इह तु तत् निराक्रियते इति पूर्वापरविरोध इति चेत्। न, [(१)]निराकरणस्याशक्तविषयत्वात्†। सत्यां शक्तावुपेक्षयां‡ पूर्वोक्तप्रायश्चित्तम्। अतएव व्यासः,—

---

* पादत्रयं,—इति नास्ति मु०।

† निराकरणस्याशक्यविषयत्वात्,—इति शा० स० सो०।

‡ शक्तावुपेक्षायां,—इति पाठो मम प्रतिभाति।

---

(१) तथाच, निवारणशक्तौ सत्यामनिवारणे प्रायश्चित्तं, निवारणशक्त्य-भावे तु नास्ति प्रायश्चित्तमित्यभिप्रायः।

"जलौघे पल्वले मग्ना यदि विद्युद्धताऽपि वा* ।
श्वभ्रे वा पतिताऽकस्मात् श्वापदेनापि भक्षिता ॥
प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम् ।
शीतवाताहता वा स्यादुद्बन्धनमृताऽपि वा ॥
शून्यागारे उपेक्षायां प्राजापत्यं विनिर्दिशेत्"—इति ।

इदन्तु कार्य्यान्तरविरहे सत्युपेक्षायां वेदितव्यम् । कार्य्यान्तरव्यग्रतयोपेक्षायां त्वर्द्धम् ।

"पल्वलौघमृगव्याघ्रश्वापदादिनिपातने(१) ।
श्वभ्रप्रपातसर्पाद्यैर्मृते कृच्छ्रार्द्धमाचरेत् ।
अपालनात्तु कृच्छ्रं स्यात् शून्यागारउपप्लवे"—इति

विष्णुस्मरणात् ।

विद्युद्घातादेरिव† ग्रामघातादेरपि न प्रत्यवायहेतुत्वमित्याह,—

**ग्रामघाते शरौघेण वेश्मभङ्गान्निपातने ।**
**अतिवृष्टिहतानाञ्च प्रायश्चित्तं न विद्यते ॥ ४३ ॥ इति ॥**

शत्रुसैन्येन ग्रामे हन्यमाने सति तदन्तर्वर्त्तिनो गावः शरौघेण निपात्यन्ते ; तथा, स्तम्भवंशादिशैथिल्येन गृहे भग्ने सति तदन्तर्वर्त्तिनां

---

* मेघविद्युद्धताऽपि वा,—इति मु० ।

† विद्युदादेरिव,—इति मु० ।

---

(१) पल्वलमल्पसरः । ओघोमहान् जलाशयः । जलौघे पल्वले मग्ना,—इत्येकवाक्यत्वात् ।

गवां निपातो भवति; तथा, बुधशुक्रसामीप्यादिना प्रवृत्तायामतिवृष्टौ शीतवातपीडिता गावो म्रियन्ते, तत्र तत्स्वामिनः प्रत्यवायो-नास्ति।

संग्रामादेरपि न प्रत्यवायहेतुत्वमित्याह,—

**संग्रामे प्रहतानाञ्च* ये दग्धा वेश्मकेषु च।**
**दावाग्निग्रामघातेषु प्रायश्चित्तं न विद्यते॥ ४४॥ इति॥**

सेनयोरुभयोर्युद्धे सति तत्र प्रहता गावो म्रियन्ते। स्कन्धावार-निर्मितानि तृणमयानि वेश्मकानीत्युच्यन्ते। तेषु वैरिभिर्दह्यमानेषु तत्र गावोम्रियन्ते। तथा, क्वचिद्दावाग्निना अरण्यसमीपवर्त्तिनो ग्रामा-दग्धा भवन्ति, तत्र गाव उपहन्यन्ते। न चैतेषु विषयेषु स्वामी प्रत्यवायं प्राप्नोति।

गवां हिते प्रवृत्तस्य प्रामादिकं गोमरणं न प्रत्यवायजनक-मित्याह,—

**यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने।**
**यत्ने कृते विपद्येत प्रायश्चित्तं न विद्यते॥ ४५॥ इति॥**

व्रणरोगादौ दाहच्छेदादिचिकित्सार्थं रज्ज्वादिना यन्त्रिता गौः प्रमादाद्विपद्येत; तथा, योनिद्वारि समागतस्य मृतस्य गर्भस्य निर्गमनार्थं तदाकर्षणादिप्रयत्ने क्रियमाणे कथञ्चिद्गौर्म्रियेत, तत्र हितमाचरन् पुरुषो न प्रत्यवैति। एतदेव संवर्त्त आह,—

---

* निहता ये च,—इति मु०।

"यन्त्रणे गोचिकित्सार्थे गूढगर्भविमोचने ।
यदि तत्र* विपत्तिः स्यात् न स पापेन लिप्यते ॥
औषधं स्नेहमाहारं दद्याद्गोब्राह्मणेषु च† ।
दीयमाने विपत्तिश्चेन्न स पापेन लिप्यते ॥
दाहच्छेदशिराभेदप्रयोगैरुपकुर्वताम् ।
द्विजानां गोहितार्थञ्च प्रायश्चित्तं न विद्यते(१)"—इति ॥

याज्ञवल्क्योऽपि,—
"क्रियमाणोपकारे तु मृते विप्रे न पातकम् ।
विपाके गोवृषाणान्तु भेषजाग्निक्रियासु च"—इति ॥

अङ्गिरा अपि,—
"औषधं स्नेहमाहारं दद्याद्गोब्राह्मणेषु यः‡ ।
विपाके तु विपत्तिः स्यात् न स दोषेण लिप्यते"—इति ।

रोधबन्धनाभ्यां गोविपत्तौ प्रायश्चित्तं पूर्व्वमुपवर्णितम् । यदा बहवएकेन व्यापारेण विपद्यन्ते, तदा किं व्यापारैक्यादेकं व्रतं स्यात्, किं वा प्रहतगोसंख्यया व्रतावृत्तिरिति विचिकित्सायामिदमाह(२),—

---

* यत्ने कृते,—इति मु० ।
† ददद्गोब्राह्मणे द्विजः,—इति मु० ।
‡ ब्राह्मणेषु च,—इति ग्रा० ।

---

(१) यदि उपकारार्थं दाहादिप्रयोगे कृते दैवात्तेनैव गवादेर्मरणं भवति, तदोपकारार्थं दाहादिप्रयोगकर्तुर्न प्रायश्चित्तमित्यर्थः ।

(२) प्राणवियोगफलकव्यापारस्य वधरूपतया एकव्यापारेणानेकगोवधे वधस्यैकत्वं, बध्यस्य तु नानात्वम् । तत्र किं वधसङ्ख्यया प्रायश्चित्तं, किं वा बध्यसङ्ख्ययेति संशयः । तस्मिन् संशये वक्ष्यमाणमाहेत्यर्थः ।

**व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपि वा।**
**भिषङ्मिथ्याप्रचारे च प्रायश्चित्तं विनिर्दिशेत् ॥४६॥ इति।**

पूर्व्वोक्तं प्रायश्चित्तं द्विगुणमाचरेदित्याशयः[१]।
तथाच सम्वर्त्तः,—

"व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपि वा।
द्विगुणं गोव्रतस्यास्य[२] प्रायश्चित्तं विधीयते"—इति।

आपस्तम्बोऽपि,—

"विपन्नानां बहूनान्तु बन्धने रोधनेऽपि वा।
भिषङ्मिथ्याप्रयोक्ता च द्विगुणं गोव्रतं चरेत्*"—इति।

अयथाशास्त्रं चिकित्सनं भिषङ्मिथ्याप्रयोगः।

सत्यां शक्तावुपेक्षकस्य प्रत्यवायोऽस्तीत्युक्तम्। न केवलं स्वामिन एवैतत्, किं त्वन्येषामपीत्याह,—

**गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः।**
**अनिवारयतां तेषां सर्व्वेषां पातकं भवेत् ॥४७॥ इति।**

---

* भिषङ्मिथ्याप्रचारेण द्विगुणं व्रतमाचरेत्,—इति मु०।

---

(१) विनिर्दिशेदित्यनेन विशेषेण निर्देशोपदेशात्, यथोक्तव्रतमात्राभिप्रायत्वे वचनारम्भवैयर्थ्यात्, बध्यबहुतया पापगौरवेण प्रायश्चित्तगौरवस्य न्याय्यत्वाच्च, द्विगुणमेव प्रायश्चित्तं वक्तुरभिप्रेतमिति मुन्यन्तरीयवचनदर्शनादवधार्य्यते। अतएवोक्तम्। "स्मृत्यर्थसन्देहे स्मृत्यन्तरसंवादादेवार्थनिर्णयः"—इति।

(२) अस्य पूर्व्वोक्तस्य।

पङ्कमज्जनादिर्विपत्तिः । तत्र ये केचिन्मार्गे गच्छन्तो विपन्नां गां विलोक्य यथाशक्ति प्रतीकारं न कुर्व्वन्ति, तेषां सर्व्वेषामुपेक्षकाणां प्रत्यवायो भवति। प्रेक्षका इत्यनेनानुमन्त्रादयः सर्व्वेऽप्युपलक्ष्यन्ते। अतएव पैठीनसिः,—

"हन्ता मतोपदेष्टा च तथा संप्रतिपादकः* ।
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥
आश्रयः शस्त्रदाता च भक्तदाता च कर्म्मिणाम्† ।
उपेक्षकः शक्तिमांश्च देशवक्ता‡ऽनुमोदकः ॥
अकार्य्यकारिणास्तेषां§ प्रायश्चित्तं प्रकल्पयेत्(१)"—इति ।

---

* सम्प्रतिघातकः,—इति ग्रा० ।

† भक्तदाता विकर्म्मिणाम्,—इति मु० ।

‡ दोषवक्ता,—इति मु० ।

§ अकार्य्यकारिणस्तेषां,—इति मु० ।

---

(१) सम्प्रतिपादकः वध्यस्य निवेदकः। प्रोत्साहकः स्वतःप्रवृत्तस्य हन्तुरुपायोपदेशादिना प्रोत्साहकः। सहायोऽनुग्राहकः। स च द्विविधः, एको वध्यप्रतिरोधकः अपरः स्वयंप्रहर्त्ता। मार्गानुदेशकः, येन मार्गेण वध्यः पलायितस्तस्य मार्गस्योपदेशकः। आश्रयो हन्तुराश्रयदाता। उपेक्षकः शक्तिमानिति शक्तिमान् सन्नुपेक्षक इत्यर्थः। देशवक्ता, यस्मिन् देशे वध्यस्तिष्ठति तस्य देशस्य वक्ता। अनुमोदकोऽनुमन्ता। अनुमतिश्च द्विविधा। यद्विरोधेन हननं न सम्भवति, तस्य विरोधिनो मया निरोधः कर्त्तव्य इति प्रयुक्तिरेका। अपरा च एनं हन्मीति वचने शक्तस्याप्रतिषेध एव। तदुक्तं न्यायभाष्ये, परमतमप्रतिषिद्धमनुमतं भवति,—इति। अकार्य्यकारिणस्तेषामिति पाठे, अकार्य्यकारिणोऽनुमोदक इति एतेन संबन्धः। हन्त्रादयः पूर्व्वोक्ताः सर्व्व एवाकार्य्यकारिणो भवन्तीति वा अर्थः।

व्यापन्नानामित्यत्र, वध्यबहुत्वं घातकैकत्वं चोपजीव्य प्रायश्चित्त-मुक्तम् । इदानीं वध्यैकत्वे हन्तृबहुत्वे कथमित्याशङ्क्याह,—

एको हतो यैर्बहुभिः समेतै-
र्न ज्ञायते यस्य हतोऽभिघातात् ।
दिव्येन तेषामुपलभ्य हन्ता
निवर्त्तनीयो नृपसन्नियुक्तैः ॥४८॥ इति ॥

यत्र बहूनां पुरुषाणां प्रहारैरेको गौर्हतो भवति, तत्र सर्व्वेषां प्रहारकाणां* वेदनाहेतुत्वे सत्यपि यदीयः प्रहारः प्राणवियोगनिमित्तमिति न ज्ञायते, अतस्तेषां बहूनां पुरुषाणां मध्ये प्राणवियोगकारिप्रहारकर्त्ताऽयमिति पुरुषविशेषस्तुलाग्न्यादिदिव्येन(१) निश्चित्य राजपुरुषैर्हन्तृसमूहात् स पृथक् कर्त्तव्यः । पृथक्कृत्य च गोव्रतं कारयेत्

इतरेषां प्रहन्तृणां प्रायश्चित्तमाह,—

एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता यदि† ।
पादं पादं तु हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥४९॥ इति

* प्रहाराणां,—इति मु० ।
† समेऽपि,—इति मु० ।
‡ एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत्,—इति ।
ग्रन्थान्तरीयः पाठः ।

(१) दिव्यानि तु, "घटोऽग्निरुदकञ्चैव विषं कोशश्च पञ्चमम् ।
षष्ठञ्च तण्डुलं प्रोक्तं सप्तमं तप्तमाषकम् ।
अष्टमं फालमित्युक्तं नवमं धर्म्मजं स्मृतम् ।
दिव्यान्येतानि सर्व्वाणि निर्दिष्टानि स्वयम्भुवा"—इत्युक्तानि ।

गोहत्याया यद्व्रतमभिहितं, तस्य व्रतस्य पादमेकैकः पुरुषोऽनुतिष्ठेत् । एतच्चाकामकारविषयम् । दैवादित्यभिधानात् । कामकारे तु द्विगुणम् ।

"एकं व्रतं बहूनां तु यथोक्ताद्द्विगुणोदमः"—इति

स्मृत्यन्तरेऽभिधानात् ।

सर्पव्याघ्रहतेष्वित्यत्र सर्पादिभिर्गवि हते प्रत्यवायो नास्तीत्युक्तम् । पुरुषप्रहारेण हते त्वस्ति प्रत्यवायः । यत्र बहुषु निमित्तेषु सन्देहः, तत्र बधनिमित्तं कथं निश्चेयमित्याशङ्क्य लिङ्गविशेषैरित्यभिप्रेत्य लिङ्गानि प्रदर्शयति,—

**हते तु रुधिरं दृश्यं व्याधिग्रस्तः कृशो भवेत् ।**
**लाला भवति दष्टेषु एवमन्वेषणं भवेत् ॥ ५० ॥ इति ।**

यत्र रुधिरं दृश्यते, तत्र प्रहारो निमित्तमिति निश्चेतव्यम् । कार्श्यमात्रोपलम्भे व्याधिर्मृतिहेतुः । लालादर्शने सर्पदंशनं निमित्तम् । एवमन्यैरपि तत्र तत्रोदितैर्लिङ्गैर्निमित्तस्वरूपमन्विष्य निश्चेतव्यम् ।

शृङ्गादिभङ्गादौ मरणाभावेऽपि प्रायश्चित्तविशेषमभिहितम्* । अस्त्वेवं बाह्यावयवभङ्गे, यदा त्वन्तरावयवभङ्गो न विस्पष्टः तदा कथमित्याशङ्क्य तन्निश्चयहेतुलिङ्गविशेषं दर्शयति,—

**ग्रासार्थं चोदिता वाऽपि अध्वानं नैव गच्छति† । इति ।**

---

* अत्र, प्रायश्चित्तविशेषोऽभिहितः,—इति पाठो भवितुं युक्तः ।

† रुध्वानं चैव गच्छति,—इति मु० ।

एवमन्यैरपि लिङ्गविशेषैस्तं तं निमित्तविशेषमभिनिश्चित्य तत्र तत्रोचितं प्रायश्चित्तं अनुष्ठेयम्।

दृष्ठादूर्द्धं यदन्येनेत्यादिना ग्रन्थसन्दर्भेण निमित्तविशेषाननूद्य प्रायश्चित्तविशेषा अभिहिताः। ये तु पूर्व्वमनुदिता निमित्तविशेषाः, ये च लिङ्गैरप्यनिश्चेयाः* शङ्क्यमानाः, तेषु सर्व्वेषु साधारणं प्रायश्चित्तं दर्शयति,—

**मनुना चैवमेकेन सर्व्वशास्त्राणि जानता ॥५१॥**
**प्रायश्चित्तन्तु तेनोक्तं गोघ्नश्चान्द्रायणं चरेत्। इति।**

यथा, कलिधर्मरहस्यं, तथा, तत्प्रतिपादकानि वेदशास्त्राणि जानता पराशरेण मया गोवधविशेषाणां प्रायश्चित्तविशेषा अभिहिताः; एवं मनुनाऽप्युपपातकजातस्य सर्व्वसाधारणं† प्रायश्चित्तं, गोवधमुदाहृत्य उपवर्णितम्। किं तत्? गोघ्नश्चान्द्रायणं चरेत्,—इति। न चात्र केनापि मुनिना विप्रतिपत्तुं शक्यमित्यभिप्रेत्य, एकेनेत्युक्तम्। मुनिमुख्येनेति यावत्।

पूर्वाध्याये गोवधस्येतिकर्त्तव्येषु वपनमुक्तं, सशिखं वपनं कृत्वेति। तथाऽस्मिन्नप्यध्यायेऽभिहितम्,—

"पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च।
त्रिपादे तु शिखावर्जं सशिखन्तु निपातने"—इति।

---

* लिङ्गैरप्यनिश्चयाच्छङ्क्यमानाः,—इति मु०।
† जातस्यासाधारणम्,—इति मु०।

तत्र केनापि निमित्तेन वपनाकरणे यथोक्तं व्रतं द्विगुणमनुष्ठेय-मित्याह,—

**केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ॥ ५२ ॥ इति ।**
**द्विगुणे व्रतआदिष्टे द्विगुणा दक्षिणा भवेत् ।**

यत्र यत्र व्रतद्वैगुण्यं, तत्र तत्र दक्षिणाद्वैगुण्यमुक्तम् ।

केशरक्षणं न सर्व्वविषयं, किन्तु राजादिविषयमित्याह,—

**राजा वा राजपुत्त्रो वा ब्राह्मणो वा बहुश्रुतः ॥ ५३ ॥ इति ।**
**अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्दिशेत् ।**

केशरक्षणस्य राजादिविषयत्वं शङ्खोऽप्याह,—

"राजा वा राजपुत्त्रो वा ब्राह्मणो वा बहुश्रुतः ।
अकृत्वा वपनं तेषां प्रायश्चित्तं कथं भवेत् ?
केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ।
द्विगुणे व्रतआचीर्णे दक्षिणा द्विगुणा भवेत्"—इति ।

वपनद्विगुणव्रतयोरन्यतरस्याप्यभावे चीर्णमपि प्रायश्चित्तं न पाप-निवर्त्तकम् । तदाहापस्तम्बः,—

"राजा वा राजपुत्त्रो वा ब्राह्मणो वा बहुश्रुतः ।
यस्तु नो वपनं कुर्य्यात् प्रायश्चित्तं कथं भवेत् ॥
केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ।
द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत् ॥
यस्य न द्विगुणं दानं केशांश्च परिरक्षतः(१) ।

---

(१) केशान् परिरक्षतो यस्य न द्विगुणं दानमित्यर्थः ।

तत् पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत्॥
यत्किञ्चित् क्रियते पापं सर्व्वं केशेषु तिष्ठति।
तस्मात् सर्व्वप्रयत्नेन सशिखं कारयेद्विजः[१]"—इति॥

स्त्रीणां तु वपने विशेषमाह,—

सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलद्वयम्॥५४॥ इति।
एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम्।

नारीग्रहणेनैव कुमारीणामपि ग्रहणे सिद्धे पृथगुपादानं विधवासु वपनाङ्गीकारद्योतनार्थम्। नात्र नारीशब्दः स्त्रीमात्रवाची, किन्तु सभर्तृकस्त्रीवाची, कुमार्य्यस्तु विवाहरहिताः। तथाच, सभर्तृकाणां विवाहरहितानां चैतदुक्तं भवति[२]। ततो विधवानां सर्व्वात्मना मौण्ड्यमङ्गीकृतं भवति।

पूर्व्वोक्तेषु व्रताङ्गेषु कानिचिदङ्गानि स्त्रीणामपवदति,—

न स्त्रियाः केशवपनं न दूरे शयनाशनम्॥५५॥

---

(१) सशिखं वपनं कारयेदित्यर्थः।

(२) नारीशब्दस्य स्त्रीमात्रपरत्वे कुमारीपदं व्यर्थं स्यात्। तथाच नारीपदं सधवापरं। नरेण पुंसा संबन्धित्वात्तस्याः। एवञ्च सति विधवानां सर्व्वात्मना मुण्डनमङ्गीकृतं भवति। "सधवानान्तु नारीणामलङ्काराय सर्व्वदा। केशसन्धारणं प्रोक्तं प्रायश्चित्ते द्विजोत्तमैः"—इति, "विधवाकवरीबन्धो भर्तृबन्धाय जायते। शिरसोवपनं तस्मात् कार्य्यं विधवया सदा"—इति चानयोर्वचनयोस्तात्पर्य्यपर्य्यालोचनयाऽप्येतत् सिध्यति।

**न च गोष्ठे वसेद्रात्रौ न दिवा गा अनुव्रजेत् ।**
**नदीषु सङ्गमे चैव अरण्येषु विशेषतः ॥ ५६ ॥**
**न स्त्रीणामजिनं वासो व्रतमेव समाचरेत् । इति ।**

(१)न स्त्रियाः केशवपनं, शिरसो मुण्डनमित्यनयोर्नान्योन्यविरोधं शङ्कनीयः, निषेधस्य कृत्स्नकेशविषयत्वात् । केशाग्रकर्त्तनमेव मुण्डनं पूर्व्वंच विहितम् । अतो न विरोधः । संविशन्तीषु संविशेदित्यनेन गृह-मध्ये ग्रामाद्बहिर्दूरे वा यत्र गावस्तत्र शयनं प्राप्तं, तन्निराकरणाय, न दूरे शयनमित्युक्तम् । रात्रौ गोष्ठावस्थानं दिवा गवामनुव्रजनं च पुंसामेव न स्त्रियाः । नदीसङ्गमेष्वरण्येषु च वासो यद्यपि न साक्षात् पूर्व्वमुक्तः, तथापि गोऽनुगामीति शास्त्रादर्थतः प्रसक्तं तदुभयं निवा-र्य्यते । चर्मणाऽऽर्द्रेण संवृत इत्यादिशास्त्रतः प्रसक्तमजिनवासस्त्वं निषिध्यते । व्रतमेवेत्येवकारेण यथोक्ताङ्गनिवृत्तिरेवानूद्यते ।

वपनादीनामिव त्रिसन्ध्यस्नानादीनामपि निषेधप्रसक्तावाह,—

**त्रिसन्ध्यं स्नानमित्युक्तं* सुराणामर्चनं तथा ॥ ५७ ॥**
**बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम् । इति ।**

* कुर्य्यात् त्रिषवणस्नानं,—इति मु० ।

(१) एवं नारीकुमारीणां शिरसोमुण्डनं स्मृतमित्यनेन स्त्रीणामपि मुण्ड-नमङ्गीकृतं, परन्तु द्व्यङ्गुलच्छेदनमात्ररूपं तदित्येतावान् विशेषः । न स्त्रियाः केशवपनमित्यनेन तु स्त्रीणां मुण्डनमेव निषिद्धम् । तद-नयोर्विरोधः प्रसज्यते । तमिमं विरोधमाशङ्क्य परिहरति, न स्त्रियाइत्यादिना ।

त्रिसन्ध्यमवगाहनमिति यत्पूर्व्वमुक्तं, तत् स्त्रीणामपि समानम्। सुरार्च्चनं नमस्कारादि। कृच्छ्रचान्द्रायणादिकं यद्व्रतं तद्योषितो-बन्धुमध्येऽनुतिष्ठेयुः, न पुरुषाद्दव विजने देशे।

नियमान्तरमाह,—

गृहेषु सततं तिष्ठेत् शुचिर्नियममाचरेत् ॥५८॥ इति।

प्रक्रान्तस्य व्रतस्य समाप्तिपर्य्यन्तं गृहसीम्नोन वहिर्गच्छेत्।

अध्यायद्वयेन यत्प्रायश्चित्तं प्रपञ्चितं, तस्याननुष्ठाने द्विविधं दिव्यं भौमं च नरकविशेषं दर्शयति,—

इह यो गोवधं कृत्वा प्रच्छादयितुमिच्छति।
स याति नरकं घोरं कालसूत्रमसंशयम्॥ ५९ ॥
विमुक्तो नरकात्तस्मात् मर्त्त्यलोके प्रजायते॥
क्लीवो दुःखी च कुष्ठी च सप्तजन्मानि वै नरः॥६०॥ इति।

मित्रादीनामुत्कोचदानादिना जनापवादमात्रपरिहारः प्रच्छादनम्। घोरस्य नरकविशेषस्य नामधेयं, कालसूत्रमिति। सोऽयं दिव्यो नरकः। नैरन्तर्य्येण सप्तजन्मसु क्लीवत्वादिदोषयोगोभौमो-नरकः।

अध्यायद्वये प्रतिपादितं प्रकरणार्थमुपसंहरति*,—

---

* तत्प्रकाशार्थमुपसंहरति,—इति पा०।

**तस्मात् प्रकाशयेत्पापं स्वधर्मं सततञ्चरेत्* ।**
**स्त्रीबालभृत्य†गोविप्रेष्वतिकोपं विसर्जयेत् ॥६१॥ इति ।**

यस्मात् प्रच्छादने द्विविधो नरकः प्रोक्तः, तस्मादप्रच्छाद्य वेदविदामग्रे प्रकाश्य तैर्विनिर्दिष्टं स्वस्योचितं धर्मं प्रायश्चित्तविशेषमाचरेत्। तत ऊर्द्धमीदृशपापानुत्पत्तये स्त्रीबालादिषु कोपरहितो भवेत् ।

अध्याये नवमे पराशरमुनिप्रोक्तस्मृतौ ग्रन्थके ‡
रोधो बन्धनताडनाद्यनुचितं यत् स्यात् गवां पीड़नम् ।
कर्मैतस्य विशेषतः समुदिता सर्व्वोत्तरा निष्कृति-
स्तद्व्याख्यामकरोत्कृती शुभधिया भाग्याम्बुधिर्माधवः ॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीर-बुक्कभूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां नवमोऽध्यायः ॥०॥

---

* निर्दिष्टं व्रतमाचरेत्,—इति मु० ।

† नृप,—इति मु० ।

‡ स्मृतेर्मण्डने—इति मु० ।

## अथ दशमोऽध्यायः।

जन्मगेहं स्वर्गनद्याः पादपद्मं महात्मनः।
यस्यासीत्तमहं वन्दे रामचन्द्रं सदाऽव्ययम्* ॥

अष्टमनवमाध्याययोरुपपातकस्य गोवधस्य सामान्यविशेषाभ्यां प्रायश्चित्तानि प्रपञ्चितानि। अथागम्यागमनरूपोपपातकस्य प्रायश्चित्तं दशमाध्यायेऽभिधीयते। तत्र प्रतिज्ञापूर्व्वकं सामान्यप्रायश्चित्तमाह,—

**चातुर्वर्ण्येषु सर्व्वेषु हितां वक्ष्यामि निष्कृतिम्।**
**अगम्यागमने चैव शुद्धौ चान्द्रायणं चरेत्॥ १॥ इति।**

(१)चतुर्षु वर्णेष्वनुलोमप्रतिलोमभेदेनावान्तरजातिबहुत्वमभिप्रेत्य सर्व्वेष्वित्युक्तम्(२)। प्रत्यवायः निष्क्रियते निवार्य्यते† विनाश्यते यया

---

* नास्त्ययं श्लोको मुद्रितातिरिक्तपुस्तकेषु।

† निःसार्य्यते,—इति मु०।

---

(१) चत्वारो वर्णा एव चातुर्व्वर्ण्यम्, स्वार्थे तद्धितप्रत्ययः, अत आह चतुर्षु वर्णेष्विति।

(२) उत्तमवर्णेनाधमवर्णायामुत्पादितोऽनुलोमजो भवति। सोऽयमनुलोमक्रमः। एतद्विपरीतः प्रतिलोमक्रमः। अनुलोमप्रतिलोमाभ्यामुत्पन्ना ये मूर्द्धावसिक्तसूतादयः सङ्कीर्णजातास्तेषां ग्रहणार्थं सर्व्वेष्वित्युक्तम्। ब्राह्मणादीनां ग्रहणार्थं चातुर्व्वर्ण्येष्वित्युक्तम्। अतो न कस्याप्यानर्थक्यमिति भावः।

प्रायश्चित्त्या, सा प्रायश्चित्तिः निष्कृतिः । तस्या अनर्थफलनिवारकत्वाद्धितत्वम् । ऋतौ भार्य्यामुपेयादिति शास्त्रादगम्या स्वभार्य्या, तदितरा सर्व्वाऽपि योषिदगम्या । तद्गमने प्राप्ते सति तच्छुद्धिनिमित्तं चान्द्रायणं प्रायश्चित्तमाचरेत् ।

चान्द्रायणस्य लक्षणमाह,—

**एकैकं ह्रासयेद्ग्रासं कृष्णे शुक्ले च वर्द्धयेत् ।**
**अमावास्यां न भुञ्जीत ह्येष चान्द्रायणो विधिः॥२॥ इति।**

द्विविधं हि चान्द्रायणं यवमध्यं पिपीलिकामध्यं चेति । यथा यवस्य मध्यं स्थूलं उभावन्तौ सूक्ष्मौ, तथा शुक्लप्रतिपदमारभ्य प्रतिदिनमेकैकग्रासवृद्धा पूर्णिमायां पञ्चदश ग्रासाः, कृष्णप्रतिपदमारभ्य प्रतिदिनमेकैकग्रासह्रासे सत्यमावास्यायामुपवास इति मध्यभागस्थौल्याद्यवमध्यत्वम् । यथा पिपीलिकानां शिरःपृष्ठभागौ स्थूलौ मध्यं सूक्ष्मं, तथा यस्य चान्द्रायणस्य मध्यमे अमावास्यादिने सर्व्वग्रासह्रासः, तस्य मध्यमभागसौक्ष्म्यात् पिपीलिकामध्यत्वम् । तदिदं पिपीलिकामध्यमाचार्य्येणोपन्यस्यते । तथाहि, कृष्णप्रतिपदि व्रतं संकल्प्य चतुर्द्दश ग्रासान् भुञ्जीत, ततो द्वितीयामारभ्य प्रतिदिनमेकैकस्य ग्रासस्य ह्रासे सति अमावास्यायामुपवासः सम्पद्यते । पुनः शुक्लप्रतिपदि ग्रासमेकमुपक्रम्य पतिदिनमेकैकग्रासवृद्धा पौर्णमास्यां पञ्चदश ग्रासाः सम्पद्यन्ते । सएष पिपीलिकामध्यस्य चान्द्रायणस्यानुष्ठानप्रकारः । तदिदं वसिष्ठोऽपि स्पष्टमाह,—

"मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्द्दश ।

ग्रासापचयभोजी[1] सन् पक्षशेषं समापयेत्॥
तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम्।
ग्रासोपचयभोजी[2] सन् पक्षशेषं समापयेत्"—इति॥

चान्द्रायणाङ्गत्वेन त्रिषवणस्नानं कर्त्तव्यम्। तदाह मनुः,—
"एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणव्रतम्" इति।

वपनादीतिकर्त्तव्यतान्तु* गौतम आह। "अथातश्चान्द्रायणम्। तस्योक्तो विधिः कृच्छ्रे। पवनव्रतं चरेत्। श्वोभूतां पौर्णमासीमुपवसेत्। आप्यायस्व सन्ते पयांसि नवोनव इति चैताभिस्तर्पणम्। आज्यहोमो-हविषश्चानुमन्त्रणमुपस्थानं चन्द्रमसो यद्देवा देवहेलनमिति चतसृभिराज्यं जुहुयात्। देवकृतस्येति चान्ते समिद्भिः। ॐ भूर्भुवः स्वर्महर्जनस्तपः सत्यं यशः श्रीरूर्ग्विडोजोजः पुरुषोधर्मः शिव इत्येतैर्ग्रासानुमन्त्रणम्। प्रतिमन्त्रं मनसा नमः स्वाहेति वा। ग्रासप्रमाणमास्याविकारेण। चतुर्भैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींष्योत्तरोत्तरप्रशस्तानि। द्वादशैतानि पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेनापरपक्षमश्नीयात्[3]। अमावास्यायामुपोष्यैकोपचयेन[4]

* वपनाद्यङ्गस्येतिकर्त्तव्यतान्तु,—इति मु०।

(१) प्रतिदिनमेकैकग्रासह्रासो ग्रासापचयः।

(२) प्रतिदिनमेकैकग्रासवृद्धिर्ग्रासोपचयः।

(३) एकापचयेन प्रतिदिनमेकैकग्रासापचयेन।

(४) एकोपचयेन प्रतिदिनमेकैकग्रासवृद्ध्या।

पूर्व्वं पञ्चम् । विपरीतमेकेषाम्[१] । एष चान्द्रायणोमासः"—इति । एकेषां मुनीनां मते पूर्व्वोक्तात् पिपीलिकामध्यपञ्चाद्विपरीतं यव-मध्यचान्द्रायणम् । तच्च मनुर्व्विस्पष्टमाह,—

"एतमेव विधिं कृत्स्नमाचरेत् यवमध्यमे ।
शुक्लपञ्चादिनियतश्चरंश्चान्द्रायणव्रतम्—इति" ।

* तदेतच्चान्द्रायणद्वयं देवलोऽप्याह । "चान्द्रायणं द्विविधं यवमध्यं पिपीलिकामध्यमिति । एकग्रासममावस्यादि यवमध्यम् । पञ्चदश ग्रासान् पौर्णमास्यादि पिपीलिकामध्यम्"—इति* । यमोऽपि । "अथातश्चान्द्रायणकल्पं व्याख्यास्यामः । तद्यथा,—

पौर्णमास्यामुपेतस्तु ब्राह्मणः सुसमाहितः ।
केशश्मश्रूणि लोमानि कक्षोपस्थं च वापयेत् ।
†यथाविधि ततः कृत्वा गृह्णीयात् सुसमाहितः ।
मधु मांसञ्च लवणं शुक्लवासांसि वर्ज्जयेत्† ॥
स्त्रीशूद्रौ नाभिभाषेत सत्यवादी च संयतः ।
पालाशं धारयेद्दण्डं शुचि चर्म्म‡ च मेखलाम् ॥

---

* नास्त्ययमंशोमुद्रितातिरिक्तपुस्तकेषु ।

† नास्त्ययं श्लोकः मु० पुस्तके ।

‡ शुचिमौञ्जी,—इति शा० ।

---

(१) शुक्लप्रतिपदमारभ्यैकैकग्रासवृद्ध्या पौर्णमास्यां पञ्चदश ग्रासान् भुञ्जीत, ततः कृष्णप्रतिपदाद्येकैकग्रासह्रासेनामावस्यायामुपवसेदिति विपरीतमित्यर्थः ।

यज्ञोपवीती करकं धारयेन्नियतः शुचिः।
शाणवल्कलचीरे वा* मार्गं वा वास उच्यते।
सर्व्वाण्यहानि सन्तिष्ठेत्(१) स्नानमौनधृतव्रतः।
स्थानासनाभ्यां विहरेद्† ब्रह्मचारी जपाशनः।

गोमयेन गोचर्म्ममात्रं(२) स्थण्डिलमुपलिप्याभ्युक्ष्य अग्निं प्रतिष्ठाप्य ब्राह्मणं दक्षिणत उपवेश्योत्तरत उदकपात्रं प्रतिष्ठाप्य‡ प्रागुदगग्रान् दर्भानास्तीर्याज्यभागं कृत्वा(३) महाव्याहृतिभिराज्याहुतिं जुहुयात्। व्रतपतये ऋतं सत्यं प्रजापतिं मित्रमग्निषोमौ बृहस्पतिं यजेत।

---

* शाणवल्कलचारी वा,—इति शा०।
† विरमेद्,—इति मु०।
‡ ब्राह्मणमुपवेश्योत्तरत उदकपात्रं प्रतिष्ठाप्य,—इति शा० स०।

---

(१) सर्व्वाण्यहानीत्यन्तसंयोगे द्वितीया। सन्तिष्ठेत् उत्थितो भवेत्, नासीत न वा शयीतेत्यर्थः।

(२) गोचर्म्ममात्रं गोचर्म्मपरिमाणम्। स्थण्डिलविशेषणमेतत्। गोचर्म्मपरिमाणञ्च, "वृषभैकशतं यत्र गवां तिष्ठति संयतम्। बालवत्सप्रसूतानां गोचर्म्म इति तं विदुः"—इति। "षट् पञ्च चतुरो वाऽपि त्रयो द्वौ वा शयौ स्मृतौ। गोचर्म्म इति शब्दोऽयं विधियोगे निपात्यते"—इति। "गवां शतं वृषश्चैको यत्र तिष्ठेदयन्त्रितः। एतद्गोचर्म्ममात्रन्तु प्राहुर्व्वेदविदो जनाः"—इति चैवमादिस्मृतिपरिभाषितं नानाविधं बोद्धव्यम्।

(३) आज्यभागो नाम होमविशेषः। अग्नेरुत्तरभागे अग्नये स्वाहेत्यनेन होमः, अग्नेर्दक्षिणभागे च सोमाय स्वाहेत्यनेन होमः आज्येन प्रकृतहोमात् पूर्व्वं कर्त्तव्यतया विहितः। सोऽयं होम आज्यभाग-इत्युच्यते।

एतानेवमर्च्चयित्वा* महाव्याहृतयस्तथा ।
ॐकारपूर्व्वमाख्यातास्तथा सर्व्वे पृथक् पृथक् ।
ऋतं सत्यञ्च गायत्रीमित्येतानि सदा जपेत् ॥
दशसाहस्रिकं वाऽपि गायत्रीमाह्निकं जपेत् ।
इन्द्रशुद्धा ऋचश्चापः प्रविश्य मनसा जपेत् ।
तत्रैव गायेत् सामानि† अथवा व्याहृतीर्जपेत् ।
वृक्षमूलनिकेतः स्याद्रात्रौ वीरासनी भवेत् ॥
आर्द्रवासाश्चरेत् कृच्छ्रं स्नात्वा वस्त्रं न पीड़येत् ।
चरुं वा श्रपयेन्नित्यं गोभ्यो निष्क्रान्तयावकम् ॥
पायसं शाकमन्नं वा भैक्षं वा वाग्यतश्चरेत् ।
आयसं तैजसं पात्रं चक्रोत्पन्नं विवर्जयेत् ।
असुराणां हि तत् पात्रमयस्तैजसचक्रजम् ॥
तथैवान्यतरालाभे मृदं कुर्व्वीत वैदिकीम् ।
यज्ञियानान्तु वृक्षाणां तेषां पत्रे स्वयं च्युते ॥
हसन्न तु निरीक्षेत नाभिभाषेत् परस्त्रियम् ।
गोदोहमात्रं तिष्ठेत न सप्तानां परं व्रजेत् ‡(१) ॥

---

* एतावानेवमर्च्चित्वा,—इति मु० ।

† तत्रैव गायत्रीसामानि,—इति ग्रा० ।

‡ न सप्तात्रं परित्यजेत्,—इति मु० ।

---

(१) भिक्षार्थं गत्वा गोदुहमात्रं कालं तिष्ठेन्नातोऽधिकमित्यर्थः । यावता कालेन गौर्दुह्यते, तावान् कालो गोदुहमात्रः । स च मुहूर्त्तस्याष्टमभागात्मकः । (मुहूर्त्तस्याष्टः पञ्चदशो भागः) । तत्रैतत्, "ततो

तद्विधेषु चरेद्भैक्षं नियतेषु द्विजातिषु।
अग्नयो यत्र हूयन्ते ब्रह्म[१] वा यत्र पठ्यते।
प्रयतः कृतशौचस्तु भैक्षमभ्युक्षयेत्ततः॥
आदित्याभिमुखो भूत्वा गुरवे तन्निवेदयेत्।
अनुज्ञातस्ततः कुर्य्याद्देवर्षिपितृपूजनम्* ॥
शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम्।
सम्पादयेत् समाहारं तेनाग्नौ जुहुयात् सदा।
आहारार्थं द्विजे दत्वा तदन्नं नियमं श्रितः।
ग्रासं शेषेण कुर्वीत योऽस्यास्यं प्रविशेत् सुखम्।
कुक्कुटाण्डप्रमाणं वा ग्रासं कुर्य्यात् समाहितः॥
अङ्गुल्यग्रस्थितं वाऽपो गायत्र्या चाभिमन्त्रयेत्।
न तु विख्यापयेत् पिण्डं रसान्नास्वादयेत् पुनः॥
न निन्देन्न प्रशंसेत स्वादस्वादु च भक्षयेत्।
प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन्†॥
ह्रासोवृद्धिर्यथा सोमे मासि मासि प्रदृश्यते।

---

* अनुज्ञातः सदा कुर्य्याद्देवर्षिपितृवन्दनम्,—इति मु०।
† अन्नं दृष्ट्वा प्रणम्यादौ,—इति मु०।

---

गोदोहमात्रं वै कालं तिष्ठेदूर्द्ध्वाङ्गने। अतिथिग्रहणार्थाय"—इति, "मुहूर्त्तस्याष्टमं भागमुदीक्ष्यो ह्यतिथिर्भवेत्"—इति चानयोर्वाक्ययोस्तात्पर्य्यपर्य्यालोचनया व्यक्तम्। न सप्तानां परं व्रजेदिति भिक्षाचरणार्थं सप्तानां गृहाणामधिकं न व्रजेदित्यर्थः।

(१) ब्रह्म वेदः।

अमावास्यां पौर्णमास्यां* व्रतं चान्द्रायणं चरेत् ।
ग्रासान् प्रवर्द्धयेत् सोमः पञ्च पञ्च च पञ्च च[१] ॥
एकैकं वर्द्धयेत् पिण्डं शुक्ले कृष्णे च ह्रासयेत् ।
अमावास्यां† न भुञ्जीत एष चान्द्रायणो विधिः ॥
एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत् ।
एतत् पिपीलिकामध्यं चान्द्रायणमुदाहृतम् ॥
वर्द्धयेत् पिण्डमेकैकं शुक्ले कृष्णे च ह्रासयेत् ।
एतच्चान्द्रायणं नाम यवमध्यं प्रकीर्त्तितम्[२]"—इति ॥

पुनरपि प्रकारान्तरेण चान्द्रायणं त्रिविधम्, ऋषिचान्द्रायणं शिशुचान्द्रायणं यतिचान्द्रायणमिति । तेषां स्वरूपं यम आह,—

"त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढ़व्रतः ।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम् ।
चतुरः प्रातरश्नीयाच्चतुरः सायमेवच ॥
पिण्डानेतद्धि बालानां शिशुचान्द्रायणं स्मृतम् ।
पिण्डानष्टौ समश्नीयान्मासं मध्यंदिने वरौ ।
यतिचान्द्रायणं ह्येतत् सर्व्वकल्मषनाशनम्"—इति ।

विष्णुरपि पञ्चविधं चान्द्रायणमाह । "अथ चान्द्रायणम् । ग्रासाना-

---

* अमायां पौर्णमास्याञ्च,—इति मु० ।
† अमायान्तु,—इति मु० ।

---

(१) सोमोयथा क्रमेण पञ्चदशकलाभिर्वर्द्धते, तथा पञ्चदशग्रासान् वर्द्धयेदित्यर्थः ।
(२) तथाच, पिपीलिकामध्यस्य कृष्णपक्षे उपक्रमः, यवमध्यस्य शुक्लपक्षे उपक्रमइति भावः ।

स्याविकारमश्नीयात्। तांश्चन्द्रकलाऽभिवृद्धौ क्रमेण वर्द्धयेत्। हानौ च ह्रासयेत्[१]। अमावास्यायाञ्च नाश्नीयात्। एष[२] चान्द्रायणो यवमध्यः, पिपीलिकामध्यो वा। यस्यामावास्या मध्या* भवति, स पिपीलिकामध्यः। यस्य पौर्णमासी, स यवमध्यः[३]। अष्टौ ग्रासान् प्रतिदिनमश्नीयात्, स यतिचान्द्रायणः। सायं प्रातश्चतुरश्चतुरो ग्रासान् समश्नीयात् स शिशुचान्द्रायणः। यथा कथञ्चित् पिण्डानां तिस्रोऽशीतीर्व्वा अश्नीयात्, स सौम्यचान्द्रायणः"—इति।

चान्द्रायणेऽभिहितस्य ग्रासस्य परिमाणमाह,—

**कुक्कुटाण्डप्रमाणन्तु ग्रासं वै परिकल्पयेत्।**
**अन्यथाभावदोषेण न धर्मो न च शुद्ध्यति॥२॥ इति।**

उक्तपरिमाणादधिकपरिमाणत्वमन्यथाभावः[४]। तेन जातो-

---

* मध्यवर्त्तिनी,—इति मु०।

---

(१) हानौ ह्रासे। तथाचैकैकचन्द्रकलाह्रासक्रमेणैकैकं ग्रासं ह्रासयेदित्यर्थः।

(२) एषइति निर्विशेषितस्य चान्द्रायणमात्रस्य परामर्शः, न तु पूर्व्वनिर्दिष्टप्रकारस्य चान्द्रायणविशेषस्य। तस्य निरुक्तद्वैविध्यासम्भवादिति बोध्यम्।

(३) यच्चान्द्रायणं कृष्णप्रतिपद्युपक्रम्य पौर्णमास्यां समाप्यते, तत् पिपीलिकामध्यम्। यत् पुनः शुक्लप्रतिपद्युपक्रम्यामावास्यायां समाप्यते तद् यवमध्यमित्यर्थः।

(४) यद्यप्युक्तपरिमाणादल्पपरिमाणत्वेऽप्यन्यथाभावः समानः, तथाप्युक्तपरिमाणादधिकपरिमाणव्यवच्छेदे वचनस्य तात्पर्य्यादधिकपरिमाणत्वएवान्यथाभावोवर्णितो न न्यूनपरिमाणत्वे। अतएव, "कुक्कुटाण्डप्रमाणं वा ग्रासं कुर्य्यात् समाहितः। अक्षुल्यपरिमितं वाऽपि"—

दोषो व्रतवैकल्यं, तेन दोषेण, धर्मश्चन्द्रलोकप्राप्तिहेतुस्तपोरूपो-व्रतविशेषः, स न सम्पद्यते। नाप्यस्य पापाच्छुद्धिर्भवति। चान्द्रायण-साध्यं फलं द्विविधं, पुण्यलोकप्राप्तिः पापनिवृत्तिश्चेति। तदुभय-मधिकपरिमाणग्रासानश्नतो न सिध्यति। चान्द्रायणस्य फलद्वैविध्यं यम आह,—

"यत्किञ्चित् कुरुते पापं कर्मणा मनसा गिरा।
द्विजश्चान्द्रायणं कृत्वा तस्मात् पापात् प्रमुच्यते।
एतानि विधिवत् कृत्वा षड्भिर्मासैर्हविष्यभुक्।
व्यपेतकल्मषो विप्रश्चन्द्रस्यैति सलोकताम्"—इति।

व्रतचरणानन्तरकर्त्तव्यमाह,—

**प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्।**
**गोद्वयं वस्त्रयुग्मञ्च दद्याद्विप्रेषु दक्षिणाम्॥ ३॥ इति॥**

संख्याविशेषानुपादानात् शक्त्यनुसारेण ब्राह्मणभोजनमिति वेदि-तव्यम्।

---

इत्यनेन साक्षादेव न्यूनपरिमाणं विहितम्। युक्तञ्चैतत्। तथाहि, यथोक्तपरिमाणस्य न तावदपूर्व्वविधिः, रागतः प्राप्तत्वेन तद-सम्भवात्। नापि तत्परिमाणभोजनस्यावश्यकत्वार्थं नियमविधिः, नियोज्यादिकल्पनापत्तेः। तत्परिमाणभोजनसमकालमन्यभोजनेऽपि दोषाभावापत्तेः। अङ्गुल्यग्रस्थितं वापीत्यनेन न्यूनपरिमाणस्याभि-हितत्वाच्च। तस्मात् चान्द्रायणस्य तपस्त्वात् तपसश्च क्लेशस्वभा-वत्वादुक्तपरिमाणादधिकपरिमाणनिवृत्तिफलकः परिसंख्याविधि-रयम्। तस्मात् सुष्ठूक्तम्, उक्तपरिमाणादधिकपरिमाणत्वमन्यथा-भाव इति।

अगम्यागमनमात्रे प्रायश्चित्तमभिहितम्। तद्विशेषेषु प्रायश्चित्तानि वक्तव्यानि। तत्रात्यन्तनीचजातिगमने* प्रायश्चित्तमाह,—

**चण्डालीं वा श्वपाकीं वा अनुगच्छति यो द्विजः।**
**त्रिरात्रमुपवासित्वा विप्राणामनुशासनात्॥ ४॥**
**सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत्।**
**गोद्वयं दक्षिणां दद्यात् शुद्धिं पाराशरोऽब्रवीत्॥५॥ इति।**

ब्राह्मण्यां शूद्राज्जाता, चण्डाली; आरूढपतिताज्जाता च[1], सगोत्राज्जाता वा। तदेतत् त्रिविधचण्डालत्वं यम आह,—

"आरूढपतिताज्जातो ब्राह्मण्यां शूद्रजश्च यः।
चण्डालौ तावुभौ प्रोक्तौ सगोत्राद्यश्च जायते"—इति।

एतत्त्रिविधचण्डालसन्ततौ जाता स्त्री चण्डाली। क्षत्तृग्रयोर्जाता स्त्री श्वपाकी। तदाह मनुः,—

"क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्तितः"।

द्विजशब्दोऽत्र ब्राह्मणपरः। क्षत्रियवैश्ययोः पृथग्वक्ष्यमाणत्वात्। उपवासित्वा उपवासञ्चरित्वेत्यर्थः। आचारार्थक्विबन्तात् शब्दनिष्पत्तेः[2]।

क्षत्रियवैश्ययोर्दक्षिणाऽऽधिक्यमाह,—

---

* तत्र पतितनीचजातिगमने,—इति शा०।

---

(१) यस्तु नैष्ठिकं धर्म्ममारूढः प्रमादतस्तस्मात् च्यवते, स आरूढपतितः इत्युच्यते।

(२) उपवासशब्दादाचारार्थे क्विप्, ततः क्विपो लोपः, ततः क्त्वाप्रत्ययेन 'उपवासित्वा' इति पदं निष्पन्नमिति भावः।

क्षत्रियो वाऽथ वैश्यो वा चण्डालीं गच्छतो यदि ।
प्राजापत्यद्वयं कुर्य्याद्दद्याद्गोमिथुनद्वयम् ॥ ६ ॥ इति ।

स्पष्टम् ।

शूद्रस्य त्वल्पं व्रतमधिका दक्षिणेत्याह,—

श्वपाकीं वाऽथ चण्डालीं शूद्रो वा यदि गच्छति ।
प्राजापत्यं चरेत् कृच्छ्रं चतुर्गोमिथुनं ददेत् ॥ ७ ॥ इति ।

ननु स्मृत्यन्तरेषु चण्डालीगमने प्रायश्चित्तान्यन्यथा स्मर्य्यन्ते । तत्र कानिचित् आचार्य्योक्तात् प्रायश्चित्तात् न्यूनानि, कानिचिदधिकानि । यथा सुमन्तुः । "मातृष्वसृपितृष्वसृस्नुषाभगिनीभागिनेयीगोचण्डालीनामभिगमने तप्तकृच्छ्रम्"—इति । तदेतदकामतः प्रवृत्तस्य रेतःसेकात् प्राङ्निवृत्तौ द्रष्टव्यम् । यत्त्वङ्गिरसोक्तम्,—

"पतितान्त्यस्त्रियो[१] गत्वा भुक्त्वा च प्रतिगृह्य च ।
मासोपवासं कुर्व्वीत चान्द्रायणमथापि वा"—इति ॥

तत्र चान्द्रायणं कामतः प्रवृत्तस्य रेतःसेकात् प्राङ् निवृत्तस्याशक्तस्यावगन्तव्यम् । शक्तस्य तु मासोपवासः । गोद्वयदक्षिणायुक्तस्य

---

(१) पतिताः पतनवन्तः । पतनञ्च महापातकादिदोषैश्च द्विजातिकर्म्मानधिकारः नरकभागित्वञ्च । तदुक्तम् । "द्विजातिकर्म्मभ्यो हानिः पतनं परत्र चासिद्धिस्तमेके नरकम्"—इति । अन्ते भवा अन्त्याः अन्त्यजाश्च श्वपचादयः ।

प्राजापत्यद्वयस्य मूलवचनोक्तस्य प्रत्याम्नायकल्पनाद्वारेण[१] मासोपवाससमानत्वादयमेव विषयः। यदपि शङ्खेनोक्तम्,—

"अकामतस्तु यो विप्रश्चण्डालीं यदि गच्छति।
तप्तकृच्छ्रेण शुद्ध्येत प्राजापत्यद्वयेन वा।
कामतस्तु यदा विप्रश्चण्डालीं यदि सेवते।
चान्द्रायणेन शुद्ध्येत प्राजापत्यद्वयेन वा"—इति।

एतन्मूलवचनेन समानविषयम्। यमस्तु विषयव्यवस्थापूर्व्वकं पचद्वयमाह,—

"चण्डालपुल्कसानान्तु भुक्त्वा गत्वा च योषितम्।
कृच्छ्राब्दमाचरेत् ज्ञानादज्ञानादैन्दवद्वयम्"—इति॥

एतच्चोभयं, रेतःसेकपर्य्यन्तसकृद्गमनविषये। यत्तु गौतमेनोक्तम्। "अन्त्यावसायिनीगमने[२] कृच्छ्राब्दममत्या द्वादशरात्रम्"—इति। तत्राब्दकृच्छ्रो यमोक्तसमानविषयः। द्वादशरात्रन्तु सुमन्तुप्रोक्ततप्तकृच्छ्रसमानविषयम्। यदप्यङ्गिरसोक्तम्,—

"अन्त्यजानान्तु[३] गमने भोजने च प्रमापणे।

---

(१) धेनुसङ्कलनाद्यनुकल्पव्यवस्था प्रत्याम्नाय इत्युच्यते।

(२) अन्त्यावसायिनः कुले जाता स्त्री अन्त्यावसायिनी। अन्त्यावसायिनश्च, "चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा। मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः"—इत्युक्तलक्षणाः। "निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम्। श्मशानगोचरं सूते"—इत्युक्तलक्षणाश्च।

(३) अन्त्यजाश्च, "रजकश्चर्म्मकारश्च नटोवरुड़एवच। कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः"—इत्युक्तलक्षणाः।

पराकेण विशुद्धिः स्याद्भगवानङ्गिरोऽब्रवीत्"—इति ॥

तदपि तप्तकृच्छ्रसमानविषयम्। यदपि वसिष्ठेनोक्तम्। "द्वादश-रात्रमब्भक्षो द्वादशरात्रमुपवसेदश्वमेधावभृथं वा गच्छेत्। एतेनैव चाण्डालीव्यवायो व्याख्यातः"—इति। एतदपि वृहद्यमोक्तचान्द्रायणद्वयसमानविषयम्। यच्च संवर्त्तेनोक्तम्,—

"यश्चण्डालीं द्विजो गच्छेत् कथञ्चित् काममोहितः।
त्रिभिः कृच्छ्रैर्विशुद्ध्येत प्राजापत्यानुपूर्व्वकैः"—इति ॥

एतच्चान्द्रायणद्वयेन समानविषयम्। यदपि मनुनोक्तम्,—

"यः करोत्येकरात्रेण वृषलीसेवनं द्विजः।
स भैक्षभुग्जपन्नित्यं त्रिभिर्व्वर्षैर्व्यपोहति"—इति ॥

वृषली चण्डाली*। तथा च स्मृत्यन्तरे,—

"चण्डाली बन्धकी वेश्या रजःस्था या च कन्यका[१]।
ऊढ़ा या च सगोत्रेण वृषल्यः पञ्च कीर्त्तिताः"—इति।

तदेकदिनाभ्यासविषयम्। यदपि मनुनोक्तम्,—

"रेतःसेकः स्वयोन्यासु कुमारीष्वन्त्यजासु च।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः"—इति ॥

याज्ञवल्क्येनापि,—

"सखिभार्य्याकुमारीषु स्वजातास्वन्त्यजासु च।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्"—इति।

---

* वृषल्यश्चण्डाल्यादयः,—इति मु०।

---

(१) कन्यका रजःस्था, विवाहात् पूर्व्वं ऋतुमतीति यावत्।

एतच्च पञ्चाभ्यासविषयम्। यच्च मनुनोक्तम्,—

"गुरुतल्पव्रतं कुर्य्याद्रेतः सिक्त्वा स्वयोनिषु।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च"—इति।

एतच्च मासाभ्यासविषयम्। यच्च यमेनोक्तम्,—

"रेतः सिक्त्वा कुमारीषु चण्डालीष्वन्त्यजासु च।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते"—इति।

एतच्च सम्वत्सराभ्यासविषयम्।

## अथ मातृगमनप्रायश्चित्तमुच्यते।

यद्यप्येतन्नोपपातकं, तस्यातिपातकेषु पाठात्[१]। तथाप्यगम्यागमनावान्तरभेदप्रसङ्गादत्राभिधानम्। तत्राज्ञानकृते मात्रादिगमने प्रायश्चित्तमाह,—

**मातरं यदि गच्छेत्तु भगिनीं स्वसुतां तथा।
एतास्तु मोहितोगत्वा त्रीणि कृच्छ्राणि सञ्चरेत्॥ ८॥
चान्द्रायणत्रयं कुर्य्यात् शिश्नच्छेदेन शुध्यति॥ इति।**

मातरं जननीम्। इतरासां मातॄणां, "पितृदारान् समारुह्य"—इति वक्ष्यमाणत्वात्। भगिन्येकोदरा, तस्या एव मुख्यत्वात्। तथा, स्वसुतेति सवर्णायां भार्य्यायामुत्पन्ना। तत्र त्रीणि प्रायश्चित्तानि; प्राजापत्यत्रयमेकं, चान्द्रायणत्रयं द्वितीयं, शिश्नच्छेदस्तृतीयम्। एतच्च मैथुनप्रकारभेदविषयतया योजनीयम्। मैथुनं चाष्टविधम्,

---

(१) "मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि"—इत्यादाविति शेषः।

"स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं वदन्ति ब्रह्मवादिनः ।
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्"—इति

स्मरणात् । तत्राद्यं व्रतमल्पत्वादप्रवर्त्तकस्मरणादिपञ्चविधापराधविषयं, द्वितीयन्तु पूर्व्वस्माद्गुरुत्वात् प्रवर्त्तकसङ्कल्पाध्यवसायविषयं(१), तृतीयन्त्वतिमहत्वात्क्रियानिष्पत्तिविषयम् । ननु मोहितइत्यभिधानादकामकृतविषयमिदं, तथाच संकल्पाध्यवसायौ तत्र न सम्भवत इति चेत् । मैवम् । मन्दान्धकारादौ मातेयमित्यज्ञात्वा गमिष्याम्येनामिति सङ्कल्पाध्यवसायसम्भवात् । यद्वा, मातेयमिति ज्ञातेऽपि प्रत्यवायगौरवमज्ञात्वा प्रवृत्तस्य संकल्पाध्यवसायसम्भवात् । न च मातरि भगिन्याञ्च समानं प्रायश्चित्तमुक्तमिति वाच्यम्* । भगिन्यामावृत्तिविषयत्वस्य कल्पनीयत्वात् । शिश्नच्छेदोत्तरकर्त्तव्यं मनुराह,—

"स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
नैरृतीं दिशमातिष्ठेदानिपातादजिह्मगः"—इति ॥

---

* प्रायश्चित्तमयुक्तमिति वाच्यम्,—इति पाठोमम प्रतिभाति ।

---

(१) अनेन कर्म्मणा इदमिष्टं फलं साध्यते इत्येवंविषया बुद्धिः सङ्कल्पः । अध्यवसायः पुनः, करिष्याम्येतदिति निश्चयश्चिकीर्षा वा । सङ्कल्पोऽध्यवसायश्च द्वयमपि प्रवृत्तिहेतुत्वात् स्मरणादिभ्यो गुरु,—इति बोध्यम्

उशनाऽपि। "खट्वाङ्गधारी गुरुतल्पगः सवृषणं शिश्नमुत्कृत्य नैरृतीं दिशमंजलिनाऽऽदाय* व्रजेदानिपातात्"—इति। शङ्ख-लिखितावपि। "क्षुरेण शिश्नवृषणावुत्कृत्यादायावेक्षमाणो व्रजेत्"—इति। एवं गच्छन् यत्र कुड्यादिना प्रतिबध्यते, तत्रैवामरणान्तं तिष्ठेत्। तदाह वशिष्ठः। "सवृषणं शिश्नमुत्कृत्यांजलावाधाय दक्षिणाभिमुखो गच्छेत्। यत्रैव प्रतिहतस्तत्रैव तिष्ठेदाप्राणविमोक्षात्†"—इति।

अज्ञानकृताभ्यासाज्ज्ञानकृतसकृज्जननीगमनेऽपि पूर्वोक्तादधिक-क्लेशोत्पादकं व्रतविशेषं वशिष्ठ आह। "निष्कालकोघृताभ्यक्तो गोम-येनाग्निना पादप्रभृत्यात्मानं दाहयेत्, पूतो भवतीति विज्ञायते"—इति॥ केशाः शिरस्यवस्थिता अलकाः, के अलकाः कालकाः, निर्गताः कालका यस्मादसौ निष्कालकः, मुण्डितशिरा इत्यर्थः।

नन्वस्य वधस्य कामकृतसकृद्गमनविषयत्वे ततोऽभ्यधिकक्लेश-प्रदस्य वधान्तरस्याभावात्‡ कामकृताभ्यासे प्रायश्चित्तं न स्यादिति चेत्। नैवम्। गोमयस्यैवेषदार्द्रत्वातिशुष्कत्वादिभेदेन चिरक्षि-प्रदाहिनो वधभेदस्य कल्पनीयत्वात्(१)। यत्तु शिश्नच्छेदादिवधात्

* दिशमञ्जलावाधाय,—इति मु०।

† दाप्रलयात्,—इति शा०।

‡ व्रतान्तरस्याभावात्,—इति मु०।

(१) अतिशुष्कगोमयाग्निना क्षिप्रदाहेन वधोनिष्पद्यते। ईषदार्द्रगोमयाग्निना तु चिरदाहेनैव वधोनिष्पद्यते। क्षिप्रदाहापेक्षया चिरदाहे क्लेशाधिक्यमिति भावः।

न्यूनप्रयाससाध्यं सूर्म्यालिङ्गनादिमरणमन्यैर्मुनिभिः प्रदर्शितं, तच्चो-भयेच्छाऽन्यतरेच्छादिभेदेन विषयव्यवस्था कल्पनीया। तदाह मनुः,—

"गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये।
सूर्मीं ज्वलन्तीं वाऽऽश्लिष्य मृत्युना स विशुद्ध्यति॥
स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ।
नैरृतीं दिशमातिष्ठेदानिपातादजिह्मगः"—इति॥

यमोऽपि,—

"गुरुदाराभिगमनं कृत्वा मोहेन वै द्विजः।
ज्वलन्तीमायसीं शय्यां संविशेद् गुरुतल्पगः॥
सूर्मीं ज्वलन्तीं वाऽऽश्लिष्य मृत्युना स विशुद्ध्यति"—इति।

याज्ञवल्क्योऽपि,—

"तप्तेऽयःशयने सार्द्धमायस्या योषिता स्वपेत्।
गृहीत्वोत्कृत्य वृषणौ नैरृत्यां वोत्सृजेत्तनुम्"—इति॥

अङ्गिरा अपि,—

"गुरुतल्पी शिलां तप्तामायसीं वा स्त्रियं विशेत्।
मरणाय तदा पङ्क्त्यां प्रव्रजेद्दिशमुत्तराम्॥
शरीरस्य विमोचेण मुच्यते कर्मणोऽशुभात्।
स्थापयन् गुरुतल्पी वा* तप्ते चैवायसे स्वपेत्॥
समालिङ्गेत् स्त्रियं वाऽपि तप्तां कार्ष्णायसीं नरः"—इति॥

तप्ते लौहशयने गुरुतल्पगः शयीत, सूर्मीं ज्वलन्तीं वा

* गुरुतल्पीति,—इति मु०।

अश्लिष्येत्, लिङ्गं वा सवृषणमुत्कृत्याञ्जलावाधाय दक्षिणाप्रतीचीं व्रजेदजिह्ममाशरीरनिपातनान्मृतः शुद्ध्यतीति। बौधायनोऽपि। "गुरुतल्पगस्तप्ते लौहशयने शयीत ज्वलन्तीं वा सूर्मीमाश्लिष्य लिङ्गं वा सवृषणं परिवास्याञ्जलावाधाय दक्षिणाप्रतीच्योरन्यतरेण गच्छेदानिपातात्"—इति। तत्र तयोरिच्छतोः संयोगे तप्तलौहशयनं, स्त्रिया प्रोत्साहितस्य ज्वलत्सूर्म्यालिङ्गनम्, आत्मना प्रोत्साहितायान्तु गमने सवृषणलिङ्गोत्कर्त्तनादि।

जननीगमनेऽभिहितं यत् प्रायश्चित्तं, तत् तद्भगिनीगमनेऽप्यतिदिशति,—

**मातृष्वसृगमे चैवमात्ममेढ्रनिकर्त्तनम्॥ ९॥ इति।**

एवमिति साम्यातिदेशान्मानसे क्रीडादौ यथोक्तं* व्रतद्वयमत्र गन्तव्यम्। मेढ्रनिकर्त्तनेन मरणपर्य्यन्तव्रतमुपलक्ष्यते। न च जननीतद्भगिन्योः समानव्रतमयुक्तमिति शङ्कनीयम्। जनन्यामकामकृते तद्भगिन्यां कामकृते च समानत्वसम्भवात्। उपरितनवचनेन अज्ञानेनेति विशेषणादेतस्य वचनस्य कामकृतविषयत्वमवगम्यते।

अकामकृते मातृष्वसृगमने प्रायश्चित्तमाह,—

**अज्ञानेन तु यो गच्छेत् कुर्य्याच्चान्द्रायणद्वयम।**
**दशगोमिथुनं दद्याच्छुद्धिं पाराशरोऽब्रवीत्॥१०॥ इति।**

---

* वशिष्ठोक्तं,—इति पुा०।

गवोर्धेनुवृषभयोर्मिथुनं गोमिथुनं, दशसङ्ख्यकं गोमिथुनं दशगोमिथुनं, विंशतिसङ्ख्याका गाव इत्यर्थः। ननु याज्ञवल्क्येन मातृष्वसृगमने गुरुतल्पव्रतमिति निर्दिष्टम्,—

"पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा ॥
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः"—इति ।

वाढ़म् । कामकृते गुरुतल्पव्रतमस्माभिरपि पूर्ववाक्ये दर्शितं, चान्द्रायणं त्वकामकृते इत्यविरोधः। एतदेवाभिप्रेत्य हारीत आह। "पितृव्यस्त्रीगमने स्वसृ* मातृष्वसृपितृष्वसृगमने कन्यासगोत्रास्त्रीयागमने भागिनेयीगमने चान्द्रायणम्"—इति। शङ्खलिखितावपि। "एवं मातुलानीमातृष्वसृस्नुषादुहितृगमने तथाऽऽचार्य्यदुहितरि चान्द्रायणम्"—इति । वृहन्मनुरपि,—

"चण्डालीं पुल्कशीं म्लेच्छीं[1] स्नुषाञ्च भगिनीं सखीम्।
मातापित्रोः स्वसारं च निक्षिप्तां शरणागताम् ॥
मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितम् ॥
शिष्यभार्य्यां गुरोर्भार्य्यां गत्वा चान्द्रायणञ्चरेत्"—इति ॥

चतुर्विंशतिमतेऽपि,—

"पितृष्वसा मातुलानी श्वश्रूर्मातृष्वसा तथा ।
एता गत्वा स्त्रियो मोहाच्चरेच्चान्द्रायणव्रतम्"—इति ॥

---

* श्वश्रू,—इति मु० ।

---

(१) म्लेच्छी म्लेच्छकुलजाता । म्लेच्छस्तु, "गोमांसखादकोयस्तु विरुद्धं बहु भाषते। सर्व्वाचारविहीनस्च म्लेच्छइत्यभिधीयते"—इत्युक्तलक्षणः।

यद्यप्यकामकृतस्य मूलवचनेन चान्द्रायणद्वयं विंशतिगावश्चाभि-
हिताः, तथापि तस्य रेतःसेकपर्य्यन्तगमने विषयत्वादेकचान्द्रायण-
वचनानां च रेतःसेकात् प्रागेव निवृत्तौ योजनीयत्वान्न कोऽपि
विरोधः। यदपि चतुर्विंशतिमतेऽभिहितम्,—

"पितृव्यभ्रातृभार्य्यांश्च भगिनीं मातुरेव च।
श्वश्रूमातुश्च धात्रीश्च तप्तकृच्छ्रं समाचरेत्"—इति॥

यदपि सम्वर्त्तेनाभिहितम्,—

"भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम्।
एता गत्वा स्त्रियोमहान्तप्तकृच्छ्रं समाचरेत्"—इति॥

एतदुभयमारोहणपर्य्यन्तं प्रवृत्तस्य योनिलिङ्गसम्बन्धात् प्राङ्-
निवृत्तौ द्रष्टव्यम्।

जननीव्यतिरिक्तपितृभार्य्यागमने प्रायश्चित्तमाह,—

**पितृदाराम् समारुह्य मातुराप्तान्तु भ्रातृजाम्।**
**गुरुपत्नीं स्नुषाञ्चैव भ्रातृभार्य्यां तथैव च॥११॥**
**मातुलानीं सगोत्राञ्च प्राजापत्यत्रयञ्चरेत्।**
**गोद्वयं दक्षिणां दद्यात्* शुद्ध्यते नात्र संशयः॥१२॥ इति॥**

पितृदाराः जननीव्यतिरिक्ताः पितृभार्य्या असवर्णाः सवर्णाश्च।
मातुराप्ता मातुः प्रियसखी। भ्रातृजा ज्येष्ठस्य कनिष्ठस्य वा सुता।
गुरुशब्दो हि मुख्यया वृत्त्या पितरमाचष्टे। तथा च मनुः,—

---

* दत्त्वा,—इति पा०।

"निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते"—इति ॥

याज्ञवल्क्योऽपि,—

"स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति"—इति ।

पितृव्यतिरिक्तः श्रुतोपकार्य्यपि मुख्यो गुरुः*। तच्च मनुनैवोक्तम्,—

"अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया"—इति ॥

व्यासस्तु मुख्यामुख्यगुरून् सर्व्वान् संगृह्य दर्शयति । "गुरवो-मातृपितृपत्याचार्य्या विद्यादातृज्येष्ठभ्रातृश्वत्तिजोभयत्राताऽन्नदाता च"—इति । एवं च सत्यत्र पितृदारानिति पितुः पृथगुपादानात् तद्व्यतिरिक्ताचार्य्यादिरेव गुरुपत्नीरित्यत्रानेन गुरुशब्देन विवक्षितः । स्नुषादयः प्रसिद्धाः । अकामतः सकृद् गत्वा सद्विंशं प्राजापत्यत्रयञ्चरेत् । कामतस्त्वग्निप्रवेशः । तदुक्तं चतुर्विंशतिमते,—

"मातरं गुरुपत्नीं च स्वसारं स्वसुतां तथा ।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते"—इति ॥

विष्णुस्मृतावपि,—

"मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि ।
अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।
न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथञ्चन"—इति ॥

यत्तु शङ्खेन,—

---

* श्रुतोपकार्य्यमुख्योगुरुः,—इति पा० ।

"अधःशायी जटाधारी पर्णमूलफलाशनः।
एककालं समश्नन् वै वर्षे तु द्वादशे गते॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे"—इति॥

तत्सवर्णोत्तमवर्णपितृदारगमने अकामतो द्रष्टव्यम्। यच्च सम्वर्त्तेनोक्तम्,—

"पितृदारान् समारुह्य मातृवर्जं नराधमः।
भगिनीं मातुराप्तां वा स्वसारं वाऽन्यमातृजाम्॥
एतास्तिस्रः स्त्रियो गत्वा तप्तकृच्छ्रं समाचरेत्"—इति।

तद्धीनवर्णगुरुदारेषु रेतःसेकादर्व्वाग् द्रष्टव्यम्। यच्च याज्ञवल्क्येनोक्तम्,—

"प्रायश्चित्तं चरेत् कृच्छ्रं समा वा* गुरुतल्पगः।
चन्द्रायणं वा त्रीन् मासानभ्यस्यन् वेदसंहिताम्"—इति॥

एतत् त्रैवार्षिकप्राजापत्यव्रतं[१] ब्राह्मणीपुत्रस्य शूद्रजातीयगुरुभार्य्यागमने द्रष्टव्यम्। †यदा तु गुरुपत्नीमसवर्णां व्यभिचारिणी-

* प्राजापत्यं चरेत् कृच्छ्रं प्रमादाद्,—इति मु०।

† यच्च व्यासेनापि, "यदा तु गुरुपत्नीं च सवर्णां व्यभिचारिणीम्। अबुद्धिपूर्व्वं गच्छेत प्राजापत्यं तदाऽऽचरेत्"—इति। तदा वेदजपसहितचान्द्रायणं द्रष्टव्यम्। यच्च तेनैवोक्तम्,—इति मु०।

(१) समा इति बहुवचनात् असति बाधके बहुवचनस्य त्रित्वे पर्य्यवसानाच्च त्रैवार्षिकप्राजापत्यलाभ इति बोध्यम्।

मबुद्धिपूर्व्वं गच्छति, तदा वेदजपसहितत्रैमासिकचान्द्रायणं द्रष्टव्यम् । यच्च व्याघ्रेणोक्तम्*,—

"कृच्छ्रं चैवातिकृच्छ्रञ्च तथा कृच्छ्रातिकृच्छ्रकम् ।

चरेन्मासत्रयं विप्रः क्षत्रियागमने गुरोः"—इति ॥

तत्र* बुद्धिपूर्वं सकृद्गमने उभयोरिच्छातः प्रवृत्ते अतिकृच्छ्रः, तया प्रोत्साहितस्य कृच्छ्रः, स्वेनैव प्रोत्साहितायां कृच्छ्रातिकृच्छ्रः । तत्राप्यभ्यासे मरणान्तिकमेव । यथाऽऽह देवलः†,—

"मत्या गत्वा पुनर्भार्य्यां गुरोः क्षत्रसुतां द्विजः ।

अण्डाभ्यां वर्जितं लिङ्गमुत्कृत्य च मृतः शुचिः"—इति ॥

अबुद्धिपूर्वे सकृद्गमने कण्वोक्तं द्रष्टव्यम्,—

"चन्द्रायणं तप्तकृच्छ्रमतिकृच्छ्रं तथैवच ।

सकृद्गत्वा गुरोर्भार्य्यामज्ञानात् क्षत्रियां द्विजः"—इति ॥

तत्राप्युभयोरिच्छातः प्रवृत्ते तप्तकृच्छ्रम्, तया प्रोत्साहितस्यातिकृच्छ्रं, स्वेन प्रोत्साहितायां चान्द्रायणं द्रष्टव्यम् । अभ्यासे तु जातूकर्ण्यः,—

"गुरोः क्षत्रसुतां भार्य्यां पुनर्गत्वा त्वकामतः ।

वृषणं मात्रमुत्कृत्य शुद्ध्येज्जीवन् मृतस्य सः"—इति ॥

वैश्यायां बुद्धिपूर्व्वे सकृद्गमने कण्व आह,—

"तप्तकृच्छ्रं पराकञ्च तथा सान्तपनं गुरोः ॥

भार्य्यां वैश्यां सकृद्गत्वा बुद्ध्या मासञ्चरेद्द्विजः"—इति ॥

---

* तच्च,—इति मु० ।

† कण्वः, इति मु० ।

तत्राप्युभयोरिच्छातः प्रवृत्ते तप्तकृच्छ्रं, तया प्रोत्साहितस्य सान्तपनम्, आत्मना प्रोत्साहितायां पराकः। अभ्यासे लिङ्गस्याग्रच्छेदः कार्य्यः । तथाह लौगाचिः,—

"गुरोर्वैश्यां पुनर्गत्वा गत्वा चापि पुनः पुनः* ।
लिङ्गाग्रं छेदयित्वा तु ततः शुध्यति किल्बिषात्"—इति ॥

अस्मादेव ज्ञापकादभ्यासे यदुक्तं गुरुतल्पप्रायश्चित्तं, तदेव बहुशोऽभ्यासेऽपि द्रष्टव्यम् । अबुद्धिपूर्व्वके सकृद्गमने प्रजापतिराह,—

"पञ्चरात्रं तु नाश्नीयात् सप्ताष्टौ वा तथैवच ।
वैश्यां भार्य्यां गुरोर्गत्वा सकृदज्ञानतो द्विजः"—इति ॥

तत्राप्युभयोरिच्छातः प्रवृत्तौ सप्तरात्रं, तया प्रोत्साहितस्य पञ्चरात्रम्, आत्मना प्रोत्साहितायामष्टरात्रमिति। अभ्यासे त्वामरणान्तं ब्रह्मचर्य्याचरणम् । तदाह हारीतः,—

"अभ्यस्य विप्रो वैश्यायां गुरोरज्ञानमोहितः ।
स षडङ्गं ब्रह्मचर्य्यं सञ्चरेद् यावदायुषम्†"—इति ॥

शूद्रागमने बुद्धिपूर्व्वे जाबालिराह,—

"अतिकृच्छ्रं तप्तकृच्छ्रं पराकञ्च तथैवच ।
गुरोः शूद्रां सकृद्गत्वा बुद्ध्या विप्रः समाचरेत्"—इति ॥

तत्राप्युभयोरिच्छातः प्रवृत्तौ तप्तकृच्छ्रं, तयैव प्रोत्साहितस्यातिकृच्छ्रम्, आत्मना प्रोत्साहितायां पराक इति द्रष्टव्यम् । अभ्यासे तु द्वादशवर्षं ब्रह्मचर्य्यं कर्त्तव्यम् । तथाऽऽहोपमन्युः,—

---

* भार्य्यामज्ञानतो द्विजः,—इति शा० ।

† सखड्गं ब्रह्मचर्य्यं स चरेदामरणान्तिकम्,—इति स० शा० ।

"पुनः शूद्रां गुरोर्गत्वा बुद्ध्या विप्रः समाहितः ।
ब्रह्मचर्य्यमदुष्टात्मा सञ्चरेद्द्वादशीः समाः"—इति ॥

अज्ञाने दीर्घतमा आह,—

"प्रजापत्यं सान्तपनं सप्तरात्रोपवासनम् ।
गुरोः शूद्रां सकृद् गत्वा चरेद्विप्रः समाहितः"—इति ॥

तत्राप्युभयोरिच्छातः प्रवृत्तौ सान्तपनं, तथा प्रोत्साहितस्य प्राजापत्यम्, आत्मना प्रोत्साहितायां सप्तरात्रोपवास इति। अभ्यासे तु मनुनोक्तं द्रष्टव्यम् –

"चन्द्रायणं वा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः ।
हविष्येन यवाग्वा वा गुरुतल्पापनुत्तये"—इति ॥

साधारणस्त्रियां गुरुतल्पदोषो नास्ति, इत्याह व्याघ्रः,—

"जात्युक्तं पारदार्य्यं वा गुरुतल्पत्वमेवच ।
साधारणस्त्रियां नास्ति कन्यादूषणमेवच"—इति ॥

यत्तु नारदेनोक्तम्,—

"*मातृष्वसा च श्वश्रूश्च मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा* ।
दुहिताऽऽचार्य्यभार्य्या च सगोत्रा शरणागता ॥
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ।
आसामन्यतमां गत्वा गुरुतल्पग उच्यते"—इति ॥

---

* माता मातृस्वसा श्वश्रूर्मातुलानी च स्वसुता । पितृस्वसा पितृव्या च शिष्यस्त्री तत्सखी स्नुषा,—इति पा० ।

तदेतदकामतोऽभ्यासे कामतः सकृद्गमने च द्रष्टव्यम्। यच्च वशिष्ठेनोक्तम्,—

"* सखीस्वयोनिसगोत्राशिष्यभार्य्यासुषासु च।
कन्यास्वकामतो गत्वा गुरुतल्पसमः स्मृतः*"—इति॥

यच्च मनुनोक्तम्,—

"गुरुतल्पव्रतं कुर्य्याद्रेतः सिक्त्वा स्वयोनिषु।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च"—इति॥

यदपि व्यासेन,—

"आश्रितस्यापि विदुष आहिताग्नेश्च योगिनः।
आचार्य्यस्य च राज्ञश्च भार्य्यां प्रव्रजितां तथा॥
धात्रीं पुत्रीं च पौत्रीं च† सखीं मातुस्तथैवच।
पितुः सखीं तथा गत्वा गुरुतल्पव्रतञ्चरेत्"—इति॥

संवर्त्तेनापि,—

"पितृव्यदारगमने भ्रातृस्त्रीगमने तथा‡।
गुरुतल्पव्रतं कुर्य्यान्निष्कृतिर्नान्यथा भवेत्"- इति॥

याज्ञवल्क्येनापि,—

"पितृस्वसारं मातुश्च मातुलानीं स्नुषामपि।

---

* सखीस्वयोनिसगोत्रशिष्यभार्य्यासुषायां गवि च गुरुतल्पसमः,—इति मु०।

† धात्रीं पुत्रीं प्रपौत्रीं च,—इति मु०।

‡ पितृव्यभार्य्यागमने भ्रातृभार्य्यागमे तथा,—इति मु०।

मातुः सपत्नीं* भगिनीमाचार्य्यतनयां तथा ॥
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः"—इति ।

तान्येतानि वचनानि नारदवचनवद्व्यवस्थापनीयानि(१) । यानि तूक्तविषयएव न्यूनप्रायश्चित्तानि चान्द्रायणादीनि, तानि सम्बन्धकनीयस्त्वमाश्रित्य योजनीयानि । तच्च सम्बन्धकनीयस्त्वं सुमन्तुना प्रदर्शितम् । "पितृपत्न्यः सर्व्वामातरः, तद्भ्रातरो मातुलाः, तद्भगिन्यश्च मातृस्वसारः, भगिनीसपत्न्यश्च भगिन्यः, तदपत्यं भागिनेयम् । अतोऽन्यथा सङ्करकारणानि कृत्वाऽयाज्याः पतिताश्च भवन्ति"—इति । अत्रातिदेशिकव्यपदेशप्रदर्शनात् प्रायश्चित्ताल्पत्वं सिद्ध्यति । एतदेवाभिप्रेत्य सम्वर्त्त आह(२),—

"गुरोर्दुहितरं गत्वा स्वसुतां पितुरेवच ।
तस्या दुहितरञ्चैव चरेत् चान्द्रायणं व्रतम् ॥
सनाभिनीं मातुलानीं स्नुषां मातुः सनाभिनीम् ।
गच्छन्नेताः स्त्रियो मोहात् पराकेण विशुद्ध्यति ॥
सखिभार्य्यां समारुह्य श्वश्रूञ्चैव हि मानवः ।
अहोरात्रोषितो भूत्वा तप्तकृच्छ्रद्वयञ्चरेत् ॥
कुमारीगमने चैव व्रतमेतत् समादिशेत्"—इति ।

---

* पितृव्यपत्नीं,—इति मु० ।

---

(१) मातृष्वसा च श्वश्रूश्चेत्यादिनारदवचनवदित्यर्थः । तथाचैतानि वचनान्यकामतोऽभ्यासे कामतः सकृद्गमने च व्यवतिष्ठन्ते ।

(२) तथाचाल्पप्रायश्चित्तविधायकानि सम्वर्त्तादिवचनानि आतिदेशिकविषयाणीति भावः ।

सुमन्तुरपि। "मातृपितृष्वसृस्नुषाभगिनीभागिनेयीगोचण्डाली-गमनेषु तप्तकृच्छ्रत्रयं सान्तपनञ्च"—इति। चतुर्विंशतिमतेऽपि,—

"भ्रातुश्चैव कनिष्ठस्य भार्य्यां कृत्वा तु कामतः।
सान्तपनं प्रकुर्वीत कृच्छ्रद्वयमथापि वा॥
मातुलस्य स्त्रियं गत्वा पितृव्यतनयां तथा।
तप्तकृच्छ्रं प्रकुर्वीत षड्रात्रं तत्सुतासु च॥
गुरोर्दुहितरं गत्वा पराकन्तु समाचरेत्।
भागिनेयीं द्विजो गत्वा चरेच्चान्द्रायणं व्रतम्॥
मातुलस्य सुतां गत्वा पितुश्च स्वस्त्रियां तथा।
प्राजापत्यं प्रकुर्वीत हारीतवचनं यथा॥
मातुश्च स्वस्त्रीयस्यैव भार्य्यां गत्वा तु कामतः।
पितृव्यतनयस्यैव सपादं कृच्छ्रमाचरेत्॥
दौहित्रीं पुत्रतनयां चरेच्चान्द्रायणं व्रतम्।
तत्सुतां च स्नुषां गत्वा पराकन्तु समाचरेत्॥
चरेच्चान्द्रायणं विप्रो गत्वोपाध्याययोषितम्।
आचार्य्यस्य पराकन्तु बौधायनवचो यथा॥
सम्बन्धिनः स्त्रियं गत्वा सपादं कृच्छ्रमाचरेत्।
विधवागमने कृच्छ्रमहोरात्रसमन्वितम्॥
व्रतस्थागमने कृच्छ्रं सपादन्तु समाचरेत्।
सखिभार्य्यां समारुह्य ज्ञातिस्वजनयोषितम्॥
स कृत्वा प्राकृतं कृच्छ्रं पादकृच्छ्रं* ततः पुनः।

---

* पादं कुर्य्यात्,—इति स० पु०।

कुमारीगमने विप्रश्चरेच्चान्द्रायतव्रतम् ॥
पतितान्तु द्विजो गत्वा तदेव व्रतमाचरेत्"—इति ।

अत्र प्रोक्तेषु सर्वेषु व्रतेषु गौरवलाघवे परीक्ष्य यथायथं बुद्धिपूर्वाबुद्धिपूर्वाभ्यासानभ्यासादिविषयत्वं* योजनीयम् । मूलवचनपठितपितृदारादिव्यतिरिक्तपरदारगमने व्यासोक्तं† द्रष्टव्यम्,—

"ब्राह्मणो ब्राह्मणीं गच्छेदकामां यदि कामतः ।
कृच्छ्रं चान्द्रायणं‡ कुर्य्यादर्द्धमेव प्रमादतः ॥
अर्द्धमेव सकामायां तप्तकृच्छ्रं सकृद्गतौ ।
अर्द्धमर्धं नृपादीनां दारेषु ब्राह्मणश्चरेत् ॥
एतद्व्रतं चरेत् सार्द्धं श्रोत्रियस्य परिग्रहे ।
अश्रोत्रियस्चेत् द्विगुणमगुप्तामधमेषु च§"—इति ॥

कण्वोऽपि,—

"शूद्रदारगतो विप्रोऽतिकृच्छ्रं समाचरेत् ।
चन्द्रायणं विशो राज्ञः समस्तं ब्राह्मणव्रतम्"—इति ॥

यदि ब्राह्मणेनैव चातुर्वर्ण्यप्रसूतासु क्रमेण|| निर्दिष्टं, तदानीं ब्राह्मणस्य ब्राह्मणीगमने यदुक्तं, तदेव पादहीनं क्षत्रियादिगमने द्रष्टव्यम् । व्याघ्रवचनात्,—

---

* यथायथं बुद्धिपूर्व्वाभ्यासादिविषयत्वं,—इति स० शा० ।

† व्याघ्रोक्तम्,—इति मु० ।

‡ कृच्छ्रचान्द्रायणे,—इति मु० ।

§ द्विगुणं सगुप्तामर्द्धमेव च,—इति मु० ।

|| यदि ब्राह्मणेनैव तच्चातुर्वर्ण्यप्रसूतासंक्रमणे,—इति मु० ।

"विप्रेणैवातिदिष्टास्ते* चातुर्वर्ण्यप्रसूतयः।
क्रमेण पादशो हीनं अतन्तासु गतश्चरेत्"—इति॥

अयमेव न्यायः क्षत्रियादिपरिगृहीतास्वपि द्रष्टव्यम्। ब्राह्मण-भार्य्यां शूद्रां ब्राह्मणो गत्वा प्राजापत्यं कुर्य्यात्। वशिष्ठवचनात्। "ब्राह्मणश्चेदपेक्षापूर्वकं† ब्राह्मणदारानभिगच्छेत्, निवृत्तधर्मकर्मणः कृच्छ्रः, अनिवृत्तधर्मकर्मणोऽतिकृच्छ्रः"—इति। इदमबुद्धिपूर्वं सकृद्गमने। बुद्धिपूर्वं द्विगुणम्, "अर्द्धमेव प्रमादतः"—इति लिङ्गात्। ब्राह्मणस्य क्षत्रियादिभार्य्यागमने यदुक्तं, तदेव क्षत्रियादीनां स्वजातिभार्य्यागमने द्रष्टव्यम्। कुतः?

"विप्रो नृपस्य भार्य्यायां यत्करोति समागमे।
तदेव क्षत्रियस्यापि कुर्य्यादेवैव सङ्गमे"—इति

प्रजापतिधर्मलिङ्गात्। गर्भपर्य्यन्ते परदारगमने यम आह,—

"वर्षे द्वे परदारेषु त्रीणि श्रोत्रियदारके"—इति।

प्रातिलोम्येन परदारगमने सम्वर्त्त आह,—

"कथञ्चित् ब्राह्मणीं गच्छेत् क्षत्रियो वैश्य एव वा।
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति॥
शूद्रस्तु ब्राह्मणीं गत्वा कथञ्चित् काममोहितः।
गोमूत्रयावकाहारो मासेनैकेन शुध्यति"—इति॥

---

* विप्रे तावन्निविष्टास्ते,—इति मु०।

† इत्थमेव पाठः सर्व्वत्र। मम तु, अप्रेक्षापूर्व्वकं,—इति पाठः प्रतिभाति।

एतदत्यन्तव्यभिचारिब्राह्मणीविषयम् । इतरविषये बधस्मारणात् । तथा च वशिष्ठः । "शूद्रश्चेद् ब्राह्मणीमुपगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां कृष्णखरमारोप्य महापथमनुसंव्राजयेत् । पूता भवतीति विज्ञायते । वैश्यश्चेद् ब्राह्मणीमुपगच्छेत्, लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां कृष्णखरमारोप्य महापथमनुसंव्राजयेत् । पूता भवतीति विज्ञायते । राजन्यश्चेद्ब्राह्मणीमुपगच्छेत्, शरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां रक्तखरमारोप्य महापथमनुसंव्राजयेत् । पूता भवतीति विज्ञायते । एवं वैश्यो राजन्यायां शूद्रश्च राजन्यवैश्ययोः"—इति । स्वैरिणीगमने शङ्खलिखितावाहतुः । "स्वैरिण्यां वृषल्यां चावकीर्णः सचेलस्नात उदकुम्भं दद्यात् । ब्राह्मणो वैश्यायां चतुर्थकालाहारी ब्राह्मणान् भोजयेत् । क्षत्रियायां त्रिरात्रोपोषितोयवाढकं दद्यात् । ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यात्"—इति । बन्धकीगमने* षट्त्रिंशन्मते प्रायश्चित्तमुक्तम्,—

"ब्राह्मणो बन्धकीं गत्वा किञ्चिद्दद्याद्विजातये ।
राजन्यां हि धनुर्दद्याद् वैश्यां गत्वा तु चेलकम् ॥
शूद्रां गत्वा तु वै विप्र उदकुम्भं द्विजातये ।
दिवसोपोषितो वा स्याद् दद्यात् विप्राय भोजनम्"—इति ॥

बन्धकीलक्षणं स्मृत्यन्तरेऽभिहितम्,—

---

* 'बन्धकी' स्थाने बधकी पाठः मु० । एवं परत्र ।

"चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी भवेत्"—इति।

इदञ्च प्रायश्चित्तं गर्भानुत्पत्तिविषयम्। तदुत्पत्तौ यद्विशेषेण प्रायश्चित्तमुक्तं, तदेव तत्र द्विगुणं कुर्य्यात्। तदाहोशना,—

"गमने तु व्रतं यत्स्याद् गर्भे तद्विगुणञ्चरेत्"—इति।

शूद्र्यां गर्भमादधतश्चतुर्विंशतिमते विशेष उक्तः। "वृषल्या-मभिजातस्तु त्रीणि वर्षाणि चतुर्थकाले सक्तुं* भुञ्जीत"—इति गर्भादर्वाक् तु तत्रैवाभिहितम्,—

"शूद्राणां हीनजातीनां स्त्रियं गत्वा तु कामतः।
प्राजापत्यं प्रकुर्वीत इष्टिं वा वारुणीं द्विजः"—इति॥

पुल्कस्यादिगमने संवर्त्त आह,—

"पुल्कसीगमनङ्कृत्वा कामतोऽकामतोऽपिवा।
कृच्छ्रं चान्द्रायणं कुर्य्यात् ततो मुच्येत किल्बिषात्॥
नटीं शैलूषकीं चैव रजकीं वेणुजीविनीम्।
गत्वा चान्द्रायणं कुर्य्यात् तथा चर्मोपजीविनीम्"—इति॥

यत्तु वृहत्संवर्त्तः,—

"रजकव्याधशैलूषवेणुचर्मोपजीविनीः।
एतास्तु ब्राह्मणो गत्वा चरेच्चान्द्रायणद्वयम्"—इति॥

आपस्तम्बोऽपि,—

"चेण्ठी नटी चर्मकारी रजकी बुरुडी तथा।
एतासु गमनङ्कृत्वा चरेच्चान्द्रायणद्वयम्"—इति॥

तदभ्यासविषयम्। यत्तु शातातपेन,—

---

* चतुर्थकालेन,—इति शा०।

"कैवर्त्तीं रजकीं चैव वेणुचर्म्मोपजीविनीम् ।
प्राजापत्यविधानेन कृच्छ्रेणैकेन शुद्ध्यति"—इति ।

चर्म्मोपजीविनीं गच्छन्निति शेषः। तदेतःसेकात् प्राङ्निवृत्ति-विषयम् । कापालिकस्त्रीगमने यम आह,—

"कापालिकान्नभोक्तृणां तन्नारीगामिनां तथा ।
ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्"—इति ॥

जातिभेदेन गर्भाधाने चतुर्विंशतिमतेऽभिहितम्,—

"ब्राह्मणीगमने कृच्छ्रं गर्भे सान्तपनं चरेत् ।
राज्ञीगर्भे पराकः स्याद्वैश्यागर्भे त्र्यहाधिकम्* ॥
शूद्रागर्भे द्विजः कुर्य्यात्तद्वच्चान्द्रायणव्रतम् ।
चण्डाल्यां गर्भमारोप्य गुरुतल्पव्रतञ्चरेत्"—इति ॥

विधवागमने चतुर्विंशतिमतेऽभिहितम्,—

"विधवागमने कृच्छ्रमहोरात्रसमन्वितम् ।
व्रतस्थागमने कृच्छ्रं सपादन्तु समाचरेत्"—इति ॥

मुखमैथुने हारीतेनोक्तम् । "यस्तु पुनर्ब्राह्मणो धर्मपत्नीमुखे मैथुनं सेवेत स दुष्यति, प्राजापत्येन शुद्ध्यति"—इति । रजस्वलागमने संवर्त्त आह,—

"रजस्वलान्तु यो गच्छेद् गर्भिणीं पतितां तथा ।
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रो विशोधकः"—इति ॥

आपस्तम्बोऽपि,—

"उदक्यां यदि गच्छेत ब्राह्मणो मदमोहितः ।

---

* त्र्यहादिकम्,—इति मु० ।

प्राजापत्येन शुद्ध्येत ब्राह्मणानां च भोजनात्”—इति ॥

चतुर्विंशतिमतेऽपि,—

“रजस्वलां द्विजो गत्वा पराकन्तु समाचरेत्।

सान्तपनं द्वितीयेऽह्नि प्राजापत्यं परेऽहनि”—इति ॥

शातातपोऽपि। “अनुदकमूत्रपुरीषकरणे श्वपाकस्पर्शने सचेलस्नानं महाव्याहृतिहोमश्च, रजस्वलाऽभिगमने चैव तद्देव”—इति। वशिष्ठोऽपि। “रजस्वलादिव्यवाये शुक्लमृषभं दद्यात् कृष्णलिङ्गम्”—इति। मनुरपि,—

“अमानुषीषु गोवर्जमुदक्यायामयोनिषु*।

रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनञ्चरेत्”—इति ॥

गौतमोऽपि। “उदक्यागमने त्रिरात्रम्†”—इति। शङ्खलिखितावपि। “रजस्वलाऽवधूतादिगमने त्रिरात्रोपवासो घृतप्राशनं कुर्य्यात्”—इति। अत्र यानि ह्रासवृद्धियुतानि, तान्युभयेच्छाऽन्यतरेच्छादिविषयत्वेन व्यवस्थापनीयानि। पितृष्वसृसुतादिविवाहे प्रायश्चित्तमाह सुमन्तुः। “पितृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं‡ विवाह्य चान्द्रायणञ्चरेत्, परित्यज्य चैनां बिभृयात्”—इति। शातातपोऽपि,—

“मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।

समानप्रवराञ्चैव द्विजश्चान्द्रायणञ्चरेत्”—इति ॥

---

* अमानुषीषु पुरुष उदक्यायामयोनिषु,—इति मु०।

† त्रिरात्रोपवासः,—इति मु०।

‡ समानवर्षीयां,—इति मु०।

बौधायनोऽपि। "सगोत्राञ्चेदमत्योपगच्छेत्* मातृवदेनां बिभृयात्। प्रज्ञाताञ्चेत्† कृच्छ्रपादं चरित्वा, यन्मआत्मनो निन्दाभूत्‡ पुनरग्निश्चक्षुरदादित्येताभ्यां जुहुयात्"—इति। ननु पितृष्वसृसुतामातुलसुतयोर्विवाहस्य तत्प्रकरणेऽङ्गीकृतत्वादत्र प्रायश्चित्तविधानं विरुद्धमिति चेत्। मैवम्। आसुरादिविवाहोत्पन्नयोः सापिण्ड्यानिवृत्त्या विवाहाङ्गीकारेण प्रायश्चित्तस्य तद्विषयत्वात्(१)।

ननु गुरुतल्पगस्य पूर्वोदाहृतेभ्यो व्रतेभ्योऽन्यान्यपि कानिचिद्व्रतानि स्मर्य्यन्ते। तत्राङ्गिराः,—

"महाव्रतञ्चरेद्वाऽपि दद्यात् सर्वस्वमेव वा।
गुर्वर्थे वा मृतो युद्धे मुच्यते गुरुतल्पगः"—इति॥

सुमन्तुरपि। "गुरुदारगामी संवत्सरं कण्टकिनीं शाखां परिष्वज्याधः शायी त्रिषवणभैक्षाहारः पूतो भवतीति, अश्वमेधावभृथस्नानेन वा"—इति। एतान्यपि पूर्वोक्तनीत्या गुरुतारतम्यं तत्पत्नीतारतम्यं तत्संयोगतारतम्यं वोपजीव्य व्यवस्थापनीयानि।

पश्वादिगमनस्य पितृदारादिगमनाद्रल्पत्वेन तत्राल्पं प्रायश्चित्तमाह,—

* यच्छेत्,—इति मु०।
† प्रजाता चेत्,—इति मु०।
‡ निन्दाभूत्,—इति मु०।

(१) ब्राह्मादिविवाहोत्पन्नयोः पितृष्वसृसुतामातुलसुतयोः सापिण्ड्यानिवृत्त्या तद्विवाहो न निषिद्धः। आसुरादिविवाहोत्पन्नयोस्तु तयोः सापिण्ड्यानिवृत्त्या तद्विवाहो निषिद्धः। तद्विवाहपक्षे इदं प्रायश्चित्तमिति भावः।

पशुवेश्याभिगमने महिष्युष्ट्रीं कपीन्तथा।
खरीञ्च सूकरीं गत्वा प्राजापत्यव्रतञ्चरेत्॥ १३॥

पशुरश्वादिः। वेशोभृतिः, तां जीवनहेतुतयाऽर्हतीति वेश्या। यद्यपि कपी सूकरी चाल्पदेहत्वान्न मनुष्यैर्गन्तुं योग्या, तथापि केषु-चिद्देशविशेषेषु प्रौढदेहयोरपि तयोः सद्भावात् तदुपगमनविषयमिदं व्रताभिधानम्। वेश्यायां गर्भात् प्रागिदमवगन्तव्यम्। गर्भे तु कश्च आह,—

"प्रसूते[१] यस्तु वेश्यायां भैक्ष्ययुङ्नियतेन्द्रियः।
शतमाहस्रमभ्यस्य सावित्रीमेव शुध्यति"—इति॥

* चतुर्विंशतिमतेऽपि पशुगमने प्राजापत्यमुक्तम्,—

"सर्वेषां[२] पशुजातीनां गमने कृच्छ्रमाचरेत्।
शुनीञ्चैव द्विजो गत्वा अतिकृच्छ्रं समाचरेत्"—इति॥

वेदविदस्तु†[३] तिर्य्यग्गमने कुष्माण्डकैर्मन्त्रैर्होमः। तदाह गौतमः। "अमानुषीषु गोवर्जं स्त्रीषु गमने कुष्माण्डैर्घृतहोमः"—इति।

---

* अत्र, 'यत्तु' इत्याधिकः पाठः प्रायः सर्व्वत्र।

† वस्तुतस्तु,—इति मु०।

---

(१) प्रसूते इत्यन्तर्भूतणिजर्थतया प्रसवप्रयोजकत्वावगतेः गर्भोत्पादनपर्य्य-न्तलाभः। प्रसूत इति पाठेऽप्यैत्थमेव व्याख्येयम्।

(२) इत्यमेव पाठः सर्व्वत्र। मम तु, 'सर्व्वासां'—इति पाठः प्रतिभाति।

(३) तथाच, वेदविदस्तिर्य्यग्गमने कुष्माण्डमन्त्रैर्होमएव प्रायश्चित्तं, व्रतन्तु अवेदविद्विषयमिति भावः। कुष्माण्डमन्त्राश्च तैत्तिरीयारण्यके पठिताः।

पश्वन्तरेभ्योगोः प्रशस्तत्वात्तदभिगमनेऽधिकं प्रायश्चित्तमाह,—

**गोगामी च त्रिरात्रेण गामेकां ब्राह्मणे ददत्। इति।**

शुद्ध्यतीति शेषः। एतच्च सकृद्गमने रेतःसेकात् प्राङ् निवृत्तौ द्रष्टव्यम्। रेतःसेकान्ते तु सकृद्गमने संवर्त्त आह,—

"नरो गोगमने कुर्य्यात् कृच्छ्रं सान्तपनं तथा"—इति।

आवृत्तौ जावालिराह,—

"तप्तकृच्छ्रन्तु गां गत्वा परदारांस्तथैवच।

इतरेषां पशूनान्तु कृच्छ्रपादो विधीयते"—इति॥

बहुक्षीरादिगुणवत्यां गवि आवृत्तौ चतुर्विंशतिमते दर्शितम्,—

"नरो गोगमनं कृत्वा चरेच्चान्द्रायणव्रतम्"—इति।

तत्रैव विषयेऽत्यन्ताभ्यासे विष्णुराह। "कुर्य्यात् परदारगमने गोव्रतं गोगमने च तिर्य्यग्योनावाकाशेऽप्सु दिवा गोयाने सवासाः स्नानमाचरेत्"—इति।

वेदविद्विप्रसम्बन्धिन्यां गवि गुणवत्यामत्यन्ताभ्यासे शङ्खलिखितावाहतुः। "तिर्य्यग्योनिषु गोवर्जं सचेलस्नातो यवसाहारं गोभ्यो दद्याद्गोष्ववकीर्णः संवत्सरं प्राजापत्यञ्चरेत्"—इति। यथोक्तविशेषणविशिष्टायां सवनस्थविप्रसम्बन्धिन्यां गवि गौतम आह। "सखिसयोनिसगोत्रशिष्यभार्य्यासु स्नुषायां गवि च गुरुतल्पसमः अवकीर्ण इत्येके"—इति। गोसंयुक्तशकटादिवाहनेऽवस्थाय स्त्रियं भुञ्जानस्य* यम आह,—

* स्त्रिया व्यवहारे,—इति मु०।

"यदि गोभिः समायुक्तं यानमारुह्य वै द्विजः।
मैथुनं सेवते तत्र मनुः स्वायम्भुवोऽब्रवीत्॥
त्रिरात्रं क्षपणं कृत्वा सचेलं स्नानमाचरेत्।
गोभ्यो यवाटकं दत्त्वा घृतं प्राश्य विशुद्ध्यति"—इति॥

मनुरपि,—

"मैथुनन्तु समारोप्य पुंसि योषिति वा द्विजः।
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्"—इति॥

पूर्व्वं महिष्या गमने यत्प्राजापत्यमुक्तं, तदभ्यासविषयम्। सकृद्-गमने त्विदानीमाह,—

**महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुद्ध्यति॥१४॥ इति।**

महिषी च उष्ट्री च खरी च, ता गच्छतीति महिष्युष्ट्रीखरी-गामी। स एकोपवासेन शुद्ध्यति इति।

अथोत्तमजातिप्रसूताया नार्य्याश्चण्डालसम्पर्के प्रायश्चित्तं वक्तव्यम्। तस्य चापद्विषयत्वमभिप्रेत्यापद्विशेषानुवादेन तत्र तावत् पुरुषकर्त्तव्यमाह,—

**डामरे समरे वाऽपि दुर्भिक्षे वा जनक्षये।
बन्दीग्राहे भयार्त्ता वा सदा स्वस्त्रीं निरीक्षयेत्॥१५॥इति॥**

डामरः परसैन्यकृतोपद्रवादिः। समरः सेनयोर्युद्धम्। दुर्भिक्षं वृष्ट्यभावादिनाऽन्नाभावः। जनक्षयः मारिकादेवतानिमित्तैः* प्रचुरैः

* मारकादिनिमित्तैः,—इति प्रा० स०।

रोगविशेषैः बहूनां प्रजानां मरणम्। वन्दीग्राहो बलात्कारेण स्त्रीणामपहारः। भयार्त्तिश्चौरराजादिकृत उपद्रवः। एवंविधासु आपत्सु पुरुषः स्वप्राणरक्षार्थं पलायमानोन स्त्रियमुपेक्षेत, किन्तु तस्या अपि यथा रक्षा भवति तथा निरीक्षणं कुर्य्यात्।

यदा पुरुषो रक्षितुमशक्तः, तदानीमापन्नायाः स्त्रियाः कथञ्चिच्चण्डालसम्पर्के किं कर्त्तव्यमित्यत आह,—

**चण्डालैः सह सम्पर्कं या नारी कुरुते ततः।**
**विप्रान् दश परान् कृत्वा स्वकं दोषं प्रकाशयेत्॥ १६॥**
**आकण्ठसम्मिते कूपे गोमयोदककर्दमे।**
**तत्र स्थित्वा निराहारा त्वहोरात्रेण निष्क्रमेत्॥ १७॥**
**सशिखं वपनं कृत्वा भुञ्जीयाद् यावकौदनम्।**
**त्रिरात्रमुपवासित्वा त्वेकरात्रं जले वसेत्॥ १८॥**
**शंखपुष्पीलतामूलं पत्रं वा कुसुमं फलम्।**
**सुवर्णं पञ्चगव्यञ्च क्वाथयित्वा पिबेज्जलम्॥ १९॥**
**एकभक्तं चरेत्पश्चाद् यावत्पुष्पवती भवेत्।**
**व्रतं चरति तद्यावत् तावत् वत्संवर्त्तते वहिः॥२०॥इति॥**

परान्, वेदवेदाङ्गेत्यादिप्रोक्तगुणविशिष्टान्। तादृशान् दशसङ्ख्याकान् विप्रान् परिषदं कृत्वा तेषामग्रे स्वकीयं पापमवञ्चनेन निवेदयेत्। यद्वा, चातुर्वैद्य इत्यादिवचने प्रोक्तानां दशानां विप्राणां अग्रे निवेदयेत्। ततस्तैरनुज्ञाता व्रतमेवं समाचरेत्। कण्ठप्रमाण

कूपं खात्वा सोदकेन गोमयेन तमापूर्य्य तत्रैकं दिनं निरन्तरमवस्थायोपोष्य परेद्युर्निर्गच्छेत्। निर्गत्य च यावकमन्नं भुञ्जीत। ततो-दिनत्रयमुपोष्य चतुर्थं दिनमाकण्ठजले स्थित्वा, पञ्चमे दिने शङ्खपुष्पीमूलादिभिः पञ्चभिः सुवर्णेन पञ्चगव्येन च* क्वाथितं जलं पिबेत्। ततः षष्ठदिनमारभ्य यावदृतुदर्शनमेकभक्तं चरेत्। व्रतदिनेषु न गृहेऽवतिष्ठते, किन्तु बहिरेव निवसेत्।

यथोक्तव्रतचरणानन्तरकर्त्तव्यमाह,—

**प्रायश्चित्ते ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम्।**
**गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत् ॥२१॥इति॥**

अयञ्च दक्षिणाशिरस्कोव्रतविशेषः स्मृत्यन्तरेऽपि दर्शितः,—

"चण्डालेन तु सम्पर्कं यदि गच्छेत् कथञ्चन।
सशिखं वपनं कृत्वा भुञ्जीयाद्यावकौदनम् ॥
त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत्।
आत्मना सम्मिते कूपे गोमयोदककर्दमे ॥
तत्र स्थित्वा निराहारा त्रिरात्रन्तु ततः क्षिपेत्।
शङ्खपुष्पीलतामूलं पुष्पं वा कुसुमं फलम् ॥
क्षीरं सुवर्णसम्मिश्रं क्वाथयित्वा ततः पिबेत्।
एकभक्तं चरेत्पश्चात् यावत्पुष्पवती भवेत् ॥
बहिस्तावच्च निवसेद्यावच्चरति सा व्रतम्।
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम् ॥
गोद्वयं दक्षिणां दद्यात् शुद्धिं स्वायम्भुवोऽब्रवीत्"—इति।

* जलं,—इति शा० स०।

तदेतदकामकृतविषयम् । कामकृते तु महद्गमने च्छ्यशृङ्ग-श्चाह,—

"संपृक्ता स्याद्यथान्त्यैर्या* सा कृच्छ्राब्दं समाचरेत्"—इति ।

यद्याहितगर्भायाएव पश्चाच्चण्डालादिव्यवायः, तदा तेनैवा विशेष-उक्तः,—

"अन्तर्वत्नी तु युवतिः संपृक्ता चान्त्ययोनिना ।
प्रायश्चित्तं न सा कुर्य्याद्यावद्गर्भान निःसृतः ॥
न प्रचारं गृहे कुर्य्यान्न चाङ्गेषु प्रसाधनम् ।
न शयीत समं भर्त्रा न च भुञ्जीत बान्धवैः ॥
प्रायश्चित्तं गते गर्भे विधिं कृच्छ्राब्दिकं चरेत् ।
हिरण्यमथ वा धेनुं दद्याद्विप्राय दक्षिणाम्"—इति ॥

यदा तु कामतोऽत्यन्तसम्पर्कं‡ करोति, तदोशनसोक्तं द्रष्टव्यम्,—

"अन्त्यजेन तु सम्पर्के भोजने मैथुने कृते ।
प्रविशेत्सम्प्रदीप्ताग्नौ मृत्युना सा विशुद्ध्यति"—इति ॥

रेतःसेकान्तस्य चण्डालगमनस्य प्रायश्चित्तमभिधाय रेतःसेकात् प्राङ् निवृत्तौ प्रायश्चित्तमाह,—

**चातुर्वर्ण्यस्य नारीनां कृच्छ्रं चान्द्रायणं स्मृतम् ।**
**यथा भूमिस्तथा नारी तस्मात्तां न तु दूषयेत् ॥ २२ ॥** इति

---

* संसक्ता स्याद्यथान्त्यैर्या,—इति पाठान्तरम् ।

† यदा त्वाहितगर्भायास्तत्स्वचण्डालगृहीतायास्तेनैव,—इति मु० ।

‡ कामतोऽन्त्यसम्पर्कं,—इति मु० ।

चण्डालगमनस्यात्यन्तं जुगुप्सितत्वाद्योषितः परित्यागएव न तु व्रतेन शुद्धिरित्याशङ्का तामाशङ्कां निवर्त्तयितुं भूमिं दृष्टान्तमुपन्यस्यति । भूमिर्हि चण्डालादिवासेनोपहताऽपि खननलेपनादिभिः संशोध्य पुनः स्वीक्रियते । एवं योषिदपि चरितव्रता पुनः स्वीकरणीया । न तु तां दूषयेत्, न परित्यजेदिति यावत् । यद्यप्यत्र चातुर्व्वर्ण्यस्येति सामान्येनाभिहितं, तथाप्येतत् ब्राह्मणीव्यतिरिक्ताविषये सङ्कोचनीयम् । ब्राह्मण्यां सम्वर्त्तेन विशेषाभिधानात्,—

"चण्डालं पुल्कसं म्लेच्छं श्वपाकं पतितं तथा ।
ब्राह्मण्यकामतो गत्वा चान्द्रायणचतुष्टयम् ॥
रजकव्याधशैलूषवेणुचर्म्मोपजीविनः ।
ब्राह्मण्येतान् यदा गच्छेदकामादैन्दवद्वयम्"—इति ॥

आपत्काले चण्डालवशङ्गताया नार्य्या रेतःसेकासेकयोः प्रायश्चित्तमभिहितम् । इदानीं आपन्नायाएव* बलात् शूद्रादिसम्पर्के सति रेतःसेकासेकयोः प्रायश्चित्तद्वयमाह,—

**बन्दीग्राहेण या भुक्ता हत्वा बद्ध्वा बलाद्भयात् ।**
**कृत्वा सान्तपनं कृच्छ्रं शुद्ध्येत्पाराशरोऽब्रवीत् ॥ २३ ॥**
**सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्म्मभिः ।**
**प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन च ॥ २४ ॥** इति

रज्ज्वादिभिर्बद्ध्वा कशादिभिस्ताड़यित्वा भयमुत्पाद्य या बलाद्भुक्ता

---

* अपन्नाया ब्राह्मण्याः,—इति मु० ।

भवति, सा सान्तपनं कृत्वा* शुद्ध्येदिति पराशरस्य मतम् । प्रासाद-मारुह्य प्रेक्षते इत्यस्मिन्नर्थे प्रासादात् प्रेक्षते इति यथा पञ्चमी, तथा भयमुत्पाद्येत्यस्मिन्नर्थे भयादिति पञ्चमी द्रष्टव्या। द्वितीयवचनेऽपि, हत्वा बद्धेत्यनुषञ्जनीयम् । ब्राह्मण्याः प्रातिलोम्येन द्विजातिव्यवाये सम्वर्त्त आह,—

"ब्राह्मण्यकामाद्गच्छेत्तु क्षत्रियं वैश्यमेववा ।
गोमूत्रयावकैर्मासात् तदर्धाच्च विशुद्ध्यति"—इति ॥

षट्त्रिंशन्मतेऽपि। "ब्राह्मणी क्षत्रियवैश्यसेवायामतिकृच्छ्रं कृच्छ्रा-तिकृच्छ्रं चरेत्। क्षत्रिययोषितो ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्रार्द्धं प्राजापत्यमतिकृच्छ्रं च। वैश्ययोषितो ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्र-पादः कृच्छ्रार्द्धं प्राजापत्यञ्च। शूद्रायाः शूद्रसेवने प्राजापत्यं, ब्राह्मण-राजन्यवैश्यसेवायामहोरात्रं त्रिरात्रं कृच्छ्रार्द्धम्"—इति। यदा त्वाहितगर्भैव पश्चात् शूद्रादिभिर्व्यभिचरति, तदा गर्भपातशङ्कया प्रसवोत्तरकाले एव प्रायश्चित्तं कुर्य्यात्। तथा च स्मृत्यन्तरे,—

"अन्तर्वत्नी तु या नारी समेताऽऽक्रम्य कामिता† ।
प्रायश्चित्तं न कुर्य्यात्सा यावद्गर्भो न निःसृतः॥
जाते गर्भे व्रतं पश्चात् कुर्य्यान्मासन्तु यावकम् ।
न गर्भदोषस्तत्रास्ति संस्कार्य्यः स यथाविधि"—इति ॥

---

* सा शिरोवपनं कृत्वा सान्तपनेन,—इति मु० ।

† क्रमेदाक्रम्य कामिता,—इति मु० ।

योषित्कृतापराधेन न केवलं तस्याः प्रायश्चित्तं* किन्तु तद्भर्त्तुर-पीत्याह,—

**पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिबेत्।**
**पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते ॥ २५ ॥ इति ॥**

यस्य विप्रस्य ब्राह्मण्यादिषु चतसृषु भार्य्यासु अन्यतमा या काचित्सुरां पिबेत्; तस्य विप्रस्य स्त्रीपुंसद्वयात्मकं यत् शरीरं, तस्य शरीरस्यार्द्धं स्त्रीरूपं पतति। स्त्रिया अर्द्धशरीरत्वं श्रुतिप्रसिद्धम्। "अर्द्धो वा एष आत्मनो यत् पत्नी"—इति।

तच्च पतितस्यार्द्धशरीरस्य स्त्रीरूपस्य सुरापानप्रोक्तव्रतव्यतिरिक्तेन स्वल्पव्रतेन निष्कृतिः परिशुद्धिर्न विद्यते, किन्तु सुरापानव्रतमेव तथा कार्य्यमित्यर्थः। यद्वा, पतितं स्त्रीरूपमर्द्धशरीरं यस्य पुरुषस्यासौ पतितार्द्धशरीरः। तस्य स्वयं सुरामपिबतोऽपि भार्य्याकृतापराधेन निष्कृतिः परिशुद्धिः कर्माधिकारलक्षणा न विद्यते। अतस्तदधिकारसिद्ध्यर्थं तेन प्रायश्चित्तमाचरितव्यम्। एतदेवाभिप्रेत्य मनुवशिष्ठाभ्यामेतदेव वचनं पठितम्।

योषित्कृतापराधेन पुरुषस्य यथा प्रत्यवायः, तथा पुरुषानुष्ठितधर्म्मेण योषितो निष्कृतिर्भविष्यतीति† न शङ्कनीयं, यतो याज्ञवल्क्य आह,—

---

* योषित्कृतापराधो न केवलं तस्याः प्रायश्चित्तमापादयति,—इति मु०।

† भवतीति,—इति मु०।

"पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।
इहैव सा शुनी गृध्री शूकरी चोपजायते"—इति ॥

वसिष्ठोऽपि । "या ब्राह्मणी सुरां पिबति न तां देवाः पतिलोकं नयन्ति । इहैव सा भ्रमति क्षीणपुण्या अप्सोल्का भवति शुक्तिका वा"—इति ।

पतितार्द्धशरीरेण पुरुषेण यत् कर्त्तव्यं प्रायश्चित्तं, तदाह,—

**गायत्रीं जपमानस्तु कृच्छ्रं सान्तपनं चरेत् । इति ।**

जपमान इति वर्त्तमानप्रयोगाद्यावद्व्रतसमाप्तिस्तावज्जपः कर्त्तव्य इत्यवगम्यते ।

सान्तपनस्यानेकधा भिन्नत्वादत्र विवक्षितं सान्तपनविशेषं दर्शयति,—

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ २६ ॥**
**एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् । इति ॥**

अत्र द्विरात्रं सप्तरात्रं चेति द्विविधसान्तपनं निर्दिश्यते[१] । तच्चोभयं प्रायश्चित्तकाण्डप्रथमाध्याये याज्ञवल्क्यवचनद्वयोदाहरणेन विशदीकृतम् ।

यथाकथञ्चित् परपुरुषेण संयुज्य तत उपरतायाअनुतापं गतायाः योषितो यथोचितं प्रायश्चित्तं पूर्वत्राभिहितम् । अथानुतापरहिताया दुःसङ्गादनुपरतायास्त्यागमाह,—

---

(१) गोमूत्रादिषट्कमेकदिने पीत्वा परदिने उपवसेदिति द्विरात्रं सान्तपनम् । गोमूत्रादिकं षट्सु दिनेषु प्रतिदिनमेकैकं पीत्वा सप्तमदिने उपवसेदिति सप्तरात्रं सान्तपनम् ।

जारेण जनयेद्गर्भं मृते त्यक्ते गते पतौ ॥ २७ ॥
तान्त्यजेदपरे राष्ट्रे पतितां पापकारिणीम्। इति ॥

पत्यौ मृते वा देशान्तरसञ्चारेणाज्ञाततया* गते वा या स्त्री निरङ्कुशा सती जारं स्वीकृत्यापत्यमुत्पादयति। पापं कर्त्तुं शीलमस्या इति पापकारिणी न कदाचित् पापादुपरता। अतएव पतितां तादृशीं स्वराष्ट्रादुत्सार्य्य परराष्ट्रे प्रेषयेत्। ननु स्त्रीपरित्यागस्तु विंशतिमते निषिद्धः,—

"स्त्रीणां नास्ति परित्यागो ब्रह्महत्यादिभिर्विना।
तत्रापि गृहमध्ये तु प्रायश्चित्तानि कारयेत्॥
परित्यक्ता चरेत् पापं वक्तव्यं वाऽपि किञ्चन।
तत्पापं शतधा भूत्वा बान्धवाननुगच्छति॥
यावन्ति नारीरोमाणि तत्प्रसूतिकुलेषु च।
तावद्वर्षसहस्राणि परित्यागी† स पच्यते॥
कुम्भीपाके महाघोरे ज्ञातयः पापकारिणः।
वसन्ति स्त्रीपरित्यागाद्यावदाभूतसंप्लवम्॥
पितृमातृपरित्यागी भार्य्यात्यागी सुहृत्त्यजः‡।
असिपत्रवनं चैव चण्डालानां शतं व्रजेत्"—इति॥

---

* ज्ञाततया,—इति शा०।
† परित्यागात्,—इति मु०।
‡ सुहृज्जनसुत्यजः,—इति मु०।

मैवम् । परित्यागनिषेधस्यानुतापितप्रायश्चित्ताधिकारिस्त्रीविषयत्वात् । प्रायश्चित्तानि कारयेदित्यभिधानात् । श्वपाकोपहतानां परित्यागस्य तत्रैवाङ्गीकृतत्वात्,—

"चतस्रएव सन्त्याज्याः पतने सत्यपि स्त्रियः ।
श्वपाकोपहता या तु भर्तृघ्नी पितृपुत्रगा"—इति ॥

वशिष्ठोऽपि,—

"चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी तु विशेषेण जुङ्गितोपगता च या"—इति ॥

जुङ्गितो जुगुप्सितः श्वपाकादिः। याज्ञवल्क्योऽपि,—

"व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्तृवधादौ च तथा महति पातके"—इति ॥

यत्तु मनुनोक्तम्,—

"विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि"—इति ।

न तत् मूलवचनेन समानविषयम्। भर्तृरहितस्त्रीविषयत्वान्मूलवचनस्य। मनुवाक्येतु निरुन्ध्यादिति भर्तृकर्त्तव्यताऽभिधानात्। तदुपरितनवाक्येन प्रायश्चित्ताभिधानाच्च।

"यत् पुंसः परदारेषु तच्चैनां कारयेद्व्रतम् ।
सा चेत्पुनः प्रदुष्येत सदृशेनोपमन्त्रिता ।
कृच्छ्रं चान्द्रायणं चैव तदस्याः पावनं स्मृतम्"—इति ।

यदपि याज्ञवल्क्येनोक्तम्,—

"हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्"—इति ॥

तदपि निरुन्ध्यादित्यनेन समानविषयम्। तस्मात् यथोक्तस्य स्त्रीपरित्यागस्य न किञ्चिद्बाधकमस्ति।

जारेण जनयेदित्यनेन प्रमितव्यभिचारवतीं प्रत्यभिहितम्। अथ शङ्कितव्यभिचारां प्रत्याह,—

**ब्राह्मणी तु यदा गच्छेत् परपुंसा समन्विता ॥२८॥**
**सा तु नष्टा विनिर्द्दिष्टा न तस्या गमनं पुनः।**

स्त्रियास्तावद्रक्षकाः याज्ञवल्क्येन परिगणिताः,—

"रक्षेत्कन्यां पिता विन्नां पतिः पुत्त्रस्तु वार्द्धके।
अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न स्त्रियाः क्वचित्"—इति।

मनुरपि,—

"पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्त्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥
बाल्ये पितुर्व्वशे तिष्ठेत् पाणिग्राहस्य यौवने।
पुत्त्रस्य स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति"—इति॥

अत्र प्रोक्तेभ्यो रक्षकेभ्यः पित्रादिभ्यो व्यतिरिक्तः पुमान्, पर-इत्युच्यते। तेन पुंसा समन्विता, प्रीत्यतिशयद्योतकहास्यादिव्यवहार-पुरःसरं सम्यगन्विता, ब्राह्मणी स्त्री यदा केनचिद्व्याजेन ग्रामान्तरं देशान्तरं वा गत्वा निवसेत्, सा नष्टेति विनिर्द्देश्या बन्धुमध्ये प्रख्यापनीया। न तु तस्याः पुनः स्वगृहागमनमस्ति। गृहं प्रत्यागताऽपि निर्व्वासनीयेत्यर्थः।

परपुरुषेण सह यथोक्तसमन्वयाभावेऽपि स्वातन्त्र्येण चिरं निर्गता स्त्री परित्याज्येत्याह,—

**कामान्मोहाद् या तु गच्छेत् त्यक्त्वा बन्धून् सुतान् पतिम्**
**॥२९॥**
**सा तु नष्टा परे लोके मानुषेषु विशेषतः—इति ॥**

बन्ध्वादीनामन्यतमस्य समीपे स्थातव्यमिति स्त्रीधर्मः । तथा च तद्धर्मप्रकरणे याज्ञवल्क्य आह,—

"पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।
हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत्"—इति ॥

एवञ्च सति या स्त्री कामाद्वा यथोक्तस्त्रीधर्मापरिज्ञानाद्वा बन्ध्वादीन् परित्यज्य ग्रामान्तरादौ चिरं वस्तुं गच्छेत्, सा तु शास्त्रोक्तधर्मोल्लङ्घनात् परलोके नष्टा नरकं प्राप्नोति । अथ कथञ्चित्कालान्तरे निर्विण्णा प्रायश्चित्तं चरित्वा परलोकं जयेत्, तथापि मानुषेषु बन्ध्वादिषु सर्वथा* प्रवेशं न लभते,—इत्यभिप्रेत्य विशेषत इत्युक्तम् ।

उक्तार्थस्य निमित्तविशेषेणापवादमाह,—

**मदमोहगता नारी क्रुद्धा† दण्डादिताडिता ॥३०॥**
**अद्वितीया गता चैव पुनरागमनं भवेत् । —इति ॥**

मदः पतिश्वशुरादि‡तिरस्कारजनको मानसो दोषः । पत्यादि-

---

* सर्वदा,—इति मु० ।

† क्रोधाद्,—इति मु० ।

‡ पतिश्वशुरादिषु,—इति मु० ।

शुश्रूषा स्त्रीणां परमो धर्म इति एतादृशस्य विवेकस्याभावोमोहः। उक्तदोषद्वयोपेतां नारीं शिचयितुं वृद्धाः पत्यादयो यदा दण्डादिभिस्ताड़येयुः, तदा व्यथिता सा* यथोक्तबन्ध्वादिसहायं विना स्वयमेकाकिन्येव स्वेच्छया यद्यपि गच्छेत्, तथापि स्वगृहे पुनरागमनं प्राप्नुयादित्यर्थः। "भू प्राप्तौ"—इत्यस्माद्धातोस्तच्छब्दनिष्पत्तेः। एतच्च मनुनाऽप्यभिहितम्,—

"अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ"—इति।

नन्वत्राधिवेदनं निर्गमननिमित्तमुपन्यस्तं, मूलवचने तु ताड़नमिति वैषम्यमिति चेत्। न। तस्याप्रयोजकत्वात्। निर्गमनभ्रंशाभावयोरुभयत्र तुल्यत्वात्। अतस्तादृशी नारी सान्त्वनादिना केनाप्युपायेन गृहएव निरोद्धव्या। यदि कथञ्चिन्निरोद्धुमशक्या, तदाऽपि कुलसन्निधौ त्याज्या; तद्दोषशान्तिपर्य्यन्तं बन्धुमध्ये स्थापनीयेति।

यावत् पुनरागमनं भवेदित्यत्रागमने प्रतीक्षणीयं कालावधिमाह,—

**दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते ॥३१॥**
**दशाहं न त्यजेन्नारीं त्यजेन्नष्टश्रुतान्तथा। इति ॥**

या ताडिता सती निर्गता, तस्याः पुनरागमनप्रतीक्षां दश दिनानि कुर्य्यात्। दशमे दिने तया गृहे प्राप्ते सति† नेयं

---

* व्यथमाना सती,—इति मु०।

† दशमे दिने तया गृहं प्राप्तायां सत्यां,—इति मु०।

प्रायश्चित्तभाग्भवति । *ऊर्द्धन्तु कुर्वन्तो व्यभिचारोचितप्रायश्चित्त-भाग्भवति* । अतो दशाहमध्ये तदीयव्यभिचाराश्रवणे तां न परित्यजेत् । यदि नष्टत्वेन सा श्रूयते, तदा दशाहमध्ये त्वकृतप्राय-श्चित्तां तां परित्यजेत् ।

अथ नष्टां श्रुत्वाऽपि भर्त्तादयस्तां न परित्यजेयुः, तदा तेषां प्रायश्चित्तमाह,—

**भर्त्ता चैव चरेत् कृच्छ्रं कृच्छ्रार्द्धं चैव बान्धवाः ॥३२॥**

स्पष्टार्थः ।

अकृतप्रायश्चित्तानां भर्त्तादीनां गृहे भोजनादिकमाचरन्नुपवा-सेन शुध्यतीत्याह,—

**तेषां भुक्त्वा च पीत्वा च अहोरात्रेण शुध्यति । इति ॥**

ननु या ब्राह्मणी परपुंसा समन्विता भवति, युक्तस्तस्यास्त्यागः । या तु ताडनेन वा निमित्तान्तरेण वा निर्गच्छन्त्यपि न पुरुषान्तरेण समन्वेति, तस्याः को नाम दोषः? येन दशाहादूर्द्ध्वं तस्या अपि त्यागो विधीयते, इत्यत आह,—

**ब्राह्मणी तु यदा गच्छेत् परपुंसा विवर्जिता ॥३३॥**
**गत्वा पुंसां शतं याति त्यजेयुस्तां तु गोत्रिणः । इति ॥**

यद्यपि क्रोधादिना निर्गच्छन्ती न तदानीं पुरुषान्तरेण सम-

---

* नास्त्ययमंशः, स० प्रा० पुस्तकयोः ।

श्येति, तथापि गत्वा कालान्तरेण शतसङ्ख्याकेषु पुरुषेषु सञ्चरतीति मत्वा बान्धवास्तां परित्यजेयुः। ब्राह्मण्या अपि बहुपुरुषसञ्चारिण्या-गणिकात्वं भवति। तदाह प्रजापतिः,—

"अभिगच्छति या नारी बहुभिः पुरुषैर्मिथः।
व्यभिचारिणीति* सा ज्ञेया प्रत्यक्षगणिकेति च"—इति॥

यथोक्ताया ब्राह्मण्याश्चण्डालसमत्वमभिप्रेत्य गृहप्रवेशं निषेधति,—

**पुंसो यदि गृहे गच्छेत्तदशुद्धं गृहं भवेत्॥ ३४॥**
**पतिमातृगृहं गच्छेज्जारस्यैव† तु तद्गृहम्। इति॥**

सेयं दुर्ब्राह्मणी स्वनिवासार्थं पत्युर्वा मातुर्वा जारस्यान्यस्य वा, दाक्षिण्यविषयस्य कस्यचिद्बन्धोर्गृहं प्रविशति, तद्गृहं चण्डालाध्युषितगृहवदत्यन्तमपवित्रं भवति।

"अविज्ञातस्तु चण्डालो यत्र वेश्मनि तिष्ठति"—

इत्यादिना चण्डालवासे तत्प्रवेशे च यथा गृहशुद्धिरभिहिता, तथा पुंश्चल्या ब्राह्मण्याः प्रवेशेऽपि गृहशुद्धिः कर्त्तव्या।

तच्छुद्धिप्रकारमाऽध्यायपरिसमाप्तेर्दर्शयति,—

**उल्लिख्य तु गृहं‡ पश्चात् पञ्चगव्येन सेचयेत्॥ ३५॥**
**त्यजेच्च मृण्मयं पात्रं वस्त्रं काष्ठञ्च शोधयेत्।**
**सम्भारान् शोधयेत् सर्वान् गोकेशैश्च फलोद्भवान्॥३६॥**

---

* व्यभिचारीति,—इति मु०।

† पितृमातृगृहं यच्च जारस्यैव,—इति शा० सो० स०।

‡ तद्गृहं,—इति मु०।

ताम्राणि पञ्चगव्येन कांस्यानि दश भस्मभिः ।
प्रायश्चित्तं चरेद्विप्रो ब्राह्मणैरुपपादितम् ॥ ३७॥
गोद्वयं दक्षिणां दद्यात् प्राजापत्यद्वयञ्चरेत् ।
इतरेषामहोरात्रं पञ्चगव्यञ्च शोधनम् ॥ ३८ ॥
उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्याऽर्चनादिभिः ।
जपहोमदयादानैः शुद्ध्यन्ते ब्राह्मणादयः ॥ ३९ ॥
आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम् ।
न दुष्यन्ति च दर्भाश्च यज्ञेषु चमसा यथा ॥ ४० ॥

उल्लेखनं भूमेः। तेन कुड्यादिलेपनादिकमुपलक्ष्यते । पञ्चगव्यसेचनं भूमौ कुड्यादिषु च समानम्। मृण्मयस्य भाण्डस्य त्यागएव, न तु पञ्चगव्यसेचनादिभिः शुद्धिः । वस्त्रकाष्ठयोर्धान्यादिसम्भवानाञ्च* द्रव्यशुद्ध्यादि यथोक्तशोधनं कुर्य्यात् । नारिकेलकपित्थालाबुबिल्वादिफलसम्भूतानां पात्राणां गोवालैर्मार्जनम् । ताम्रस्याम्लादिना शुद्धिः पूर्व्वमुक्ता, अत्र पञ्चगव्येनेति विशेषः । कांस्यपात्राणां दशकृत्वोभस्मना घर्षणम् । गृहस्वामी तु परिषद्विनिर्दिष्टं सदक्षिणं प्राजापत्यद्वयं चरेत्। अन्येषान्तु तद्गृहवासिनामुपवासः, पञ्चगव्यप्राशनञ्च। तद्गृहवासिभिः सह व्यवहर्तॄणां गृहान्तरवासिनां ब्राह्मणादीनां निर्दिष्टेनोपवासादीनामन्यतमेन शुद्धिः। तद्गृहसम्बन्धिनामाकाशादीनां निर्लेपत्वात्र सम्पादनीया शुद्धिरस्ति। तत्र दृष्टान्तोयज्ञेष्विति। उच्छिष्टमुखसंसर्गेऽपि चमसानां यथा नोच्छि-

* काष्ठादीनां धान्यादिसम्भाराणाञ्च,—इति मु० ।

श्चेति, तथापि गत्वा कालान्तरेण शतसङ्ख्याकेषु पुरुषेषु सञ्चरतीति मत्वा बान्धवास्तां परित्यजेयुः। ब्राह्मण्या अपि बहुपुरुषसञ्चारिण्या गणिकात्वं भवति। तदाह प्रजापतिः,—

"अभिगच्छति या नारी बहुभिः पुरुषैर्मिथः।
व्यभिचारिणीति* सा ज्ञेया प्रत्यक्षगणिकेति च"—इति॥

यथोक्ताया ब्राह्मण्याश्चण्डालसमत्वमभिप्रेत्य गृहप्रवेशं निषेधति,—

**पुंसो यदि गृहे गच्छेत्तदशुद्धं गृहं भवेत्॥ ३४॥**
**पतिमातृगृहं गच्छेज्जारस्यैव† तु तद्गृहम्। इति॥**

सेयं दुर्ब्राह्मणी स्वनिवासार्थं पत्युर्वा मातुर्वा जारस्यान्यस्य वा, दाक्षिण्यविषयस्य कस्यचिद्बन्धोर्गृहं प्रविशति, तद्गृहं चण्डालाध्युषितगृहवदत्यन्तमपवित्रं भवति।

"अविज्ञातस्तु चण्डालो यत्र वेश्मनि तिष्ठति"—

इत्यादिना चण्डालवासे तत्प्रवेशे च यथा गृहशुद्धिरभिहिता, तथा पुंश्चल्या ब्राह्मण्याः प्रवेशेऽपि गृहशुद्धिः कर्त्तव्या।

तच्छुद्धिप्रकारमाऽध्यायपरिसमाप्तेर्दर्शयति,—

**उल्लिख्य तु गृहं‡ पश्चात् पञ्चगव्येन सेचयेत्॥ ३५॥**
**त्यजेच्च मृण्मयं पात्रं वस्त्रं काष्ठञ्च शोधयेत्।**
**सम्भारान् शोधयेत् सर्वान् गोकेशैश्च फलोद्भवान्॥३६॥**

---

* व्यभिचारीति,—इति मु०।

† पितृमातृगृहं यत्र जारस्यैव,—इति शा० सो० स०।

‡ तद्गृहं,—इति मु०।

ताम्राणि पञ्चगव्येन कांस्यानि दश भस्मभिः ।
प्रायश्चित्तं चरेद्विप्रो ब्राह्मणैरुपपादितम् ॥ ३७ ॥
गोद्वयं दक्षिणां दद्यात् प्राजापत्यद्वयञ्चरेत् ।
इतरेषामहोरात्रं पञ्चगव्यञ्च शोधनम् ॥ ३८ ॥
उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्याऽर्चनादिभिः ।
जपहोमदयादानैः शुद्ध्यन्ते ब्राह्मणादयः ॥ ३९ ॥
आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम् ।
न दुष्यन्ति च दर्भाश्च यज्ञेषु चमसायथा ॥ ४० ॥

उल्लेखनं भूमेः। तेन कुड्यादिलेपनादिकमुपलक्ष्यते । पञ्चगव्यसेचनं भूमौ कुड्यादिषु च समानम्। मृण्मयस्य भाण्डस्य त्यागएव, न तु पञ्चगव्यसेचनादिभिः शुद्धिः । वस्त्रकाष्ठयोर्धान्यादिसम्भवानाञ्च* द्रव्यशुद्ध्यादि यथोक्तशोधनं कुर्य्यात् । नारिकेलकपित्थालावुबिल्वादिफलसम्भूतानां पात्राणां गोवालैर्मार्जनम्। ताम्रस्याम्लादिना शुद्धिः पूर्व्वमुक्ता, अत्र पञ्चगव्येनेति विशेषः। कांस्यपात्राणां दशकृत्वोभस्मना घर्षणम् । गृहस्वामी तु परिषद्विनिर्दिष्टं सदक्षिणं प्राजापत्यद्वयं चरेत्। अन्येषान्तु तद्गृहवासिनामुपवासः, पञ्चगव्यप्राशनञ्च। तद्गृहवासिभिः सह व्यवहर्त्तॄणां गृहान्तरवासिनां ब्राह्मणादीनां निर्दिष्टेनोपवासादीनामन्यतमेन शुद्धिः। तद्गृहसम्बन्धिनामाकाशादीनां निर्लेपत्वात्र सम्पादनीया शुद्धिरस्ति। तत्र दृष्टान्तोयज्ञेष्विति। उच्छिष्टमुखसंस्पर्शेऽपि चमसानां यथा नोच्छि-

* काष्ठादीनां धान्यादिसम्भाराणाञ्च,—इति मु० ।

ष्टदोषः, शास्त्रदृष्ट्या तेषां निर्लेपस्वभावात्; तद्वदाकाशादिष्ववगन्तव्यम्। अत्र चण्डालीन्यायस्याभिप्रेतत्वाच्चिरकाल* विषयमिदं परिशोधनं द्रष्टव्यम्। सकृत्प्रवेशे तु मार्जनादिभिः शुद्धिर्निर्दिष्टव्या।

गम्येतराभिगमने सति निष्कृतिर्या
सा यत्र साधुहितकारणमभ्यधायि।
अध्यायमूर्ज्जितमतिर्दशमं स्वयुक्त्या
व्याख्यत्पराशरकृताविह माधवार्य्यः॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीरबुक्कभूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां दशमोऽध्यायः॥०॥

---

* चिरवास,—इति मु०।

## अथ एकादशोऽध्यायः ।



नीलनीरदनिभं निरन्तरं
निर्जिताखिलनिशाचरं वयम् ।
मन्महेऽमलविशाललोचनं
मारुतात्मजविभुं रघूद्वहम् * ॥

दशमेऽध्याये ह्युपपातकविशेषस्यागम्यागमनस्य प्रायश्चित्तमभिधाय तत्प्रसङ्गाद्गुरुतल्पादीनामपि प्रायश्चित्तमभिहितम् । एकादशाध्याये त्वभोज्यभोजनस्य प्रायश्चित्तं प्राधान्येनोपवर्ण्यते । तच्चानुपातमित्येके । सुरापानसमत्वेन मनुनोपवर्णनात् ।

"ब्रह्मोज्झता वेदनिन्दा कूटसाक्ष्यं सुहृद्वधः ।
गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्"—इति ।

उपपातकमित्यपरे । मनुनैव,—

"आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा"—

इत्यादिना कानिचिदनुक्रम्यान्ते "नास्तिक्यं चोपपातकम्"—इति निगमनात् । अत्रायं निर्णयः । यस्मिन्नभक्ष्यविशेषे गर्हाधिक्यात् कामकृताद्भ्यासाद्वा प्रायश्चित्तगौरवं स्मर्य्यते, तस्याभक्ष्यस्य भक्षणमनुपातकं, यच प्रायश्चित्ताल्पत्वं तदुपपातकम् । यथा पूर्व्वत्रागम्यगमनत्वोपाधिनैकाकारेऽपि† प्रायश्चित्ताल्पत्वात् पारदार्य्यमुपपातकम्, मातृभगिन्यादिगमनं प्रायश्चित्तबाहुल्यादतिपातकमिति विष्णुनाऽभिहितम् । एवं सर्व्वत्र नामसाम्येऽपि गौरवलाघवाभ्यां

---

* नास्त्ययं श्लोको मुद्रितातिरिक्तपुस्तकेषु ।

† त्वोपाधिनैकेनापि,—इति मु० ।

तत्तदवान्तरविशेषोनिश्चेतव्यः। तत्रादौ तावदमेध्यादिभोजने प्रायश्चित्तमाह,—

**अमेध्यरेतोगोमांसं चण्डालान्नमथापि वा।**
**यदि भुक्तन्तु विप्रेण कृच्छ्रं चान्द्रायणञ्चरेत्॥१॥**

अमेध्यं विण्मूत्रादि, तदुपस्पृष्टस्यान्नस्य* भोजनममेध्यभोजनम्। न चात्र केवलस्यामेध्यस्य विप्रेण भोजनं क्वचित् सम्भवति। तदुपस्पृष्टान्नभोजनन्तु सम्भाव्यते। बालापत्यसहभोजनस्य प्राचुर्य्येण लोके दर्शनात्। रेतोभोजनन्तु गलयोन्यादिव्याधिग्रस्तेषु सम्भावितम्। तथा गोमांसचण्डालान्नभोजनं वन्दीगृहीतादिषु। तत्र सर्वत्र चान्द्रायणेन शुद्धिः। अथवा। चतुर्विधं मेध्यं, तद्विपरीतममेध्यम्। तदाह देवलः,—

"वक्ष्यतेऽतः परं सर्वं मेध्यामेध्यसमुद्भवम्†।
शुचि पूतं स्वयं शुद्धं पवित्रं चेति केवलम्॥
मेध्यं चतुर्विधं लोके प्रजानां मनुरब्रवीत्।
दूषितं कश्मलं दुष्टं वर्जितं चेति लिङ्गतः॥
चतुर्विधममेध्यञ्च सर्वं व्याख्यास्यते पुनः।
नवं वा निर्मलं वाऽपि शुचीति द्रव्यमुच्यते॥
शुद्धं पवित्रभूतञ्च पूतमित्यभिधीयते।
स्वयमेव हि यद् द्रव्यं केवलं धन्यतां गतम्॥

---

* तदुपस्पृष्टस्यान्नस्य,—इति मु०। एवं परत्र।

† समुच्चयम्,—इति मु०।

स्थावरं जङ्गमं वाऽपि स्वयं शुद्धमति स्मृतिः ।
अन्यद्रव्यैरदुष्टं* यत् स्वयमन्यानि शोधयेत् ॥
हव्यकव्येषु पूज्यं यत् तत्पवित्रमिति स्मृतिः ।
अथ सर्वाणि धान्यानि सर्वाण्याभरणानि च ॥
अवर्ज्ये भक्ष्यजातं वा शुचीन्येतानि केवलम्"—

इत्यादिना चतुर्विधं मेध्यं निरूप्य, दूषितादिचतुर्विधममेध्यमित्थं निरूपितम्,—

"शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
मानुषास्थिवसाविष्ठारेतोमूत्रार्त्तवानि च ॥
कुणपं पूयमित्येतत् कश्मलञ्चाप्युदाहृतम् ।
स्वेदाश्रुविन्दवः फेनं निरस्तं नखरोम च ॥
आर्द्रचर्मासृगित्येतद्दुष्टमाहुर्द्विजातयः ।
व्यङ्गैः पतितचण्डालैर्ग्राम्यशूकरकुक्कुटैः ॥
श्वा च नित्यं विवर्ज्याः स्युः षड़ेते धर्मतः समाः ।
दुर्वर्णकृमिकाभूमि† र्मत्तोन्मत्तरजस्वलाः ॥
मृतबन्धुरशुद्धश्च वर्ज्यते च स्वकालतः"—इति ।

अत्र वर्णितेन चतुर्विधेनामेध्येनोपहतस्यान्नस्य शुद्धिमकृत्वा भोजने चान्द्रायणञ्चरेत् । रेतोमूत्रादिभक्षणे चान्द्रायणं बृहस्पतिरप्याह,—

---

* अन्यद्रव्यैरदूष्यं,—इति मु० ।

† प्रेरयां सूतिकाभूमि,—इति शा० । सप्रजः सूतकौ सूती,—इत्यन्यत्र पाठः ।

"अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे।
रेतोमूत्रपुरीषाणां शुद्धिश्चान्द्रायणं स्मृतम्"—इति॥

गोमांसादिभक्षणे चान्द्रायणं सम्वर्त्त आह,—

"गोमांसं मानुषञ्चैव सूतिहस्तात् समाहृतम्।
अभक्ष्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणञ्चरेत्॥
श्वविडालखरोष्ट्राणां कपेर्गोमायुकाकयोः।
प्राश्य मूत्रं पुरीषं वा चरेच्चान्द्रायणव्रतम्"—इति॥

मनुरपि,—

"विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः।
प्राश्य मूत्रं पुरीषं वा द्विजश्चान्द्रायणञ्चरेत्"—इति॥

शातातपोऽपि,—

"गोमांसभक्षणे प्रायश्चित्तं पूर्वमृषिभिः कृतम्।
समयं यद्यतिक्रामेत्ततश्चान्द्रायणञ्चरेत्"—इति॥

वृद्धपराशरोऽपि,—

"अगम्यागमने चैव मद्यगोमांसभक्षणे।
शुद्धौ चान्द्रायणं कुर्य्यात् नदीं गत्वा समुद्रगाम्॥
चान्द्रायणे ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम्।
अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्"—इति॥

शङ्खलिखितावपि। "शृगालकुक्कुटदंष्ट्रिक्रव्यादवानरखरोष्ट्रगजवाजिविड्वराहगोमानुषमांसभक्षणे चान्द्रायणम्"—इति। चाण्डालान्नभक्षणे चान्द्रायणमङ्गिरा आह,—

"अन्त्यावसायिनामन्नमश्नीयाद्यद्यकामतः।

स तु चान्द्रायणं कुर्य्यात् तप्तकृच्छ्रमथापि वा"—इति ॥

हारीतोऽपि,—

"चाण्डालान्नं प्रमादेन यदि भुञ्जीत यो द्विजः ।

ततश्चान्द्रायणं कुर्य्यात् मासमेकं व्रतं चरेत्"—इति ॥

यत्तु चतुर्विंशतिमतेऽभिहितम्,—

"विण्मूत्रभक्षणे विप्रश्चरेच्चान्द्रायणद्वयम् ।

श्वादीनाञ्चैव विण्मूत्रे चरेच्चान्द्रायणत्रयम् ॥

श्वकाकोच्छिष्टगोच्छिष्ट*कृमिकीटादिभक्षणे ।

अमेध्यानां च सर्व्वेषां चरेच्चान्द्रायणत्रयम्"—इति ॥

तदेतदभ्यासविषयम् । मूलवचने चान्द्रायणरूपं कृच्छ्रं चरेदित्य-भिप्रेत्य व्याख्यातम् । यदा तु कृच्छ्रमाचरेच्चान्द्रायणमाचरेदिति विभज्य व्याख्यायते, तदा कृच्छ्रशब्देन स्वपितृकृच्छ्रतप्तकृच्छ्रप्राजा-पत्यानि तन्त्रेणाभिधीयन्ते। तत्र स्वपितृकृच्छ्रमाहाङ्गिराः,—

"अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे ।

रेतोमूत्रपुरीषाणांस्वपितृकृच्छ्रं विशोधनम्"—इति ॥

तप्तकृच्छ्रमाह देवलः,—

"रेतोमूत्रपुरीषाणां प्राशनेऽमतिपूर्व्वके ।

काश्मीयात्तु त्र्यहं मत्या तप्तकृच्छ्रं चरेद्द्विजः"—इति ॥

प्राजापत्यमाह सम्वर्त्तः,—

"विण्मूत्रभक्षणे विप्रः प्राजापत्यं समाचरेत्"—इति ।

तप्तकृच्छ्रस्य विषयस्तद्वचने संस्पष्टः । अमत्या त्र्यहोपवासस्तप्त-

---

* श्वकाकोच्छिष्टसंस्पर्श,—इति मु० ।

कृच्छ्रं मत्येति तत्राभिधानात्। यत्तु प्राजापत्यकृच्छ्रं, तद्भुचितोद्गारितविषयम्। अल्पव्रतत्वात्। ऋषिकृच्छ्रं तु पूर्वोक्तचान्द्रायणद्वयेन समानविषयम्। अत्र सर्वत्र व्रतानुष्ठानानन्तरं पुनः संस्कारः कर्त्तव्यः। तदाह यमः,—

"असुरामद्यपाने च कृते गोभक्षणेऽपिवा।
तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुद्ध्यति"—इति॥

मनुरपि,—

"अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेवच।
पुनः संस्कारमर्हन्ति त्रयोवर्णा द्विजातयः"—इति॥

विष्णुरपि। "विड्वराहग्रामकुक्कुटगोमांसभक्षणेषु सर्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते पुनः संस्कारं कुर्य्यात्"—इति। तत्र विशेषमाह काश्यपः। "चीर्णान्ते प्राच्यामुदीच्यां वा दिशि* गत्वा यत्र ग्राम्यपशूनां शब्दो न श्रूयते तस्मिन् देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य्य प्राक् प्रणीतेन विधिना पुनः संस्कारमर्हति"—इति। यत्तु वृहद्यमेनोक्तम्,—

"वराहैकशफानाञ्च काककुक्कुटयोस्तथा।
क्रव्यादानाञ्च सर्वेषामभक्ष्याये च कीर्त्तिताः॥
मांसमूत्रपुरीषाणि प्राश्य गोमांसमेवच।
श्वगोमायुकपीनां च तप्तकृच्छ्रं विशोधनम्॥
उपोष्य द्वादशाहानि कुष्माण्डैर्जुहुयाद् घृतम्"—इति।

---

* प्राचीमुदीचीं वा दिशं,—इति मु०।

तत्र कामतः तप्तकृच्छ्रः, अभ्यासे तु कुष्माण्डसहितपराक[१] इति व्यवस्था । यत्तूशनसोक्तम्,—

"नरमांसं श्वमांसञ्च गोमांसञ्च तथैवच ।
भुक्त्वा पञ्चनखानाञ्च महासान्तपनञ्चरेत्"—इति ॥

तदकामविषयम् । यत्पुनः शङ्खेनोक्तम्,—

"भुक्त्वा चोभयतोदन्तान् तथैवैकशफानपि ।
उष्ट्रं गव्यं* तथा भुक्त्वा षण्मासान् व्रतमाचरेत्"—इति ॥

तत्कामतोऽत्यन्ताभ्यासविषयम् । यच्च स्मृत्यन्तरोक्तम्,—

"जग्ध्वा मांसं नराणाञ्च विड्वराहं खरं तथा ।
गवाश्वकुञ्जरोष्ट्राणां सर्वान् पञ्चनखांस्तथा ॥
क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरव्रतम्"—इति ।

तदत्यन्तानवच्छिन्नाभ्यासविषयम् । यदप्याङ्गिरसेनोक्तम्†,—

"अभक्ष्याणामपेयानामलेह्यानाञ्च भोजने ।
रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत् ॥
पद्मोदुम्बरबिल्वानां कुशाश्वत्थपलाशयोः ।
एतेषामुदकं पीत्वा षड्रात्रेण शुद्ध्यति"—इति ॥

---

* उष्ट्रगव्यं,—इति मु० ।

† यदप्यङ्गिरसोक्तम्,—इति मु० ।

---

(१) उपोष्य द्वादशाहानीत्यनेन पराकोऽभिहितः । पराकस्य द्वादशाहोपवासरूपत्वात् । तच्च मनुनोक्तम्,—

"यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराकोनाम कृच्छ्रोऽयं सर्व्वपापप्रणाशनः"—इति ।

तदीषदभ्यासविषयम्* । यदपि मनुनोक्तम्,—

"भुक्त्वाऽतोऽन्यतमस्यान्नममत्या तु त्र्यहं क्षपेत् ।
मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रमेवच"—इति ॥

अबुद्धिपूर्वं छर्दनासम्भवे त्र्यहोपवासो द्रष्टव्यः । गोमांसभक्षणस्यावृत्त्यनावृत्त्योर्व्यवस्थितं व्रतमाह प्रजापतिः,—

"चान्द्रायणत्रयं कुर्य्यादभक्षपशुभक्षणे ।
एकमेवा† सकृद्भुक्त्वा चरेदाह प्रजापतिः"—इति ॥

मूलवचने चण्डालान्नमित्यनेन महापातक्यादीनामन्नमप्युपलक्ष्यते। अतएव हारीतः,—

"यदन्नं प्रतिलोमस्य शूद्रजस्योत्तमस्त्रियाम् ।
महापातकिनश्चैव यदन्नं स्त्रीकृतघ्नयोः ॥
आरूढपतितस्यैव सगोत्राभर्तुरेवच ।
पाषण्डानाश्रितानाञ्च यतेश्चैव तथैवच ॥
अतिकृच्छ्रं चरेद्भुक्त्वा प्रमादाद् ब्राह्मणः सकृत् ।
मत्या चान्द्रायणं कुर्य्यादामश्चेर्दधमेवच ॥
तद्भुक्तभोजने वाऽपि त्रिगुणं सहभोजने ।
चतुर्गुणं तदुच्छिष्टे पानीये चार्द्धमेवच ॥
कृच्छ्राब्दपादमुद्दिष्टमभ्यासादन्नभोजने‡ ।
अत्यभ्यासे तथा कुर्य्यात् त्रिंशत्कृच्छ्रं द्विजोत्तमः"—इति ॥

---

* तदभ्यासविषयम्,—इति मु० ।

† एवमेव,—इति मु० ।

‡ कृच्छ्रार्द्धपादमुद्दिष्टमभ्यासाज्ज्ञानभोजने,—इति मु० ।

उत्तमस्त्री ब्राह्मणी, तस्यां प्रातिलोम्येन शूद्रादुत्पन्नश्चण्डालः। महापातकी ब्रह्महादिः। यद्यपि स्त्रीहत्यायां महापातक्यादिवद्दुष्टत्वं नास्ति, तथाप्यन्नदानाधिकाराभावात् तदीयमप्यन्नं पातक्यन्नवद्* गर्हितमेव। यस्तु परेणोपकृतः सन् स्वयं न प्रत्युपकरोति नाप्यनुमोदते प्रत्युतापकृतस्यापकारित्वमापादयति, स कृतघ्नः। उत्तमाश्रममारुह्य तं परित्यज्याधमाश्रमे उन्मार्गे वा वर्त्तमान आरूढपतितः। यः समानगोत्रामुद्वहति, स सगोत्राभर्त्ता। वैदिककुले समुत्पन्नोवेदमार्गमुत्सृज्य जैनबौद्धादिमार्गे वर्त्तमानः, पाषण्डः। अनाश्रिताः सत्यपि सामर्थ्ये नास्तिक्येन कञ्चिदप्याश्रमं न प्राप्ताः। एतेषां सर्व्वेषामन्ने समानं प्रायश्चित्तम्।

विप्रस्यामेध्यादिभोजने प्रायश्चित्तमभिधायेतरेषां वर्णानां तदाह,—

**तथैव क्षत्रियो वैश्योऽप्यर्द्धं चान्द्रायणं चरेत्।**
**शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत् ॥२॥ इति**

तथैवेत्यतिदिष्टस्योपदिष्टादल्पत्वेन क्षत्रियस्य पादोनं चान्द्रायणमवगन्तव्यम्। शूद्रोऽप्येवमित्यनेनामेध्यादिभोजनसाम्यं निर्द्दिश्यते। न तु भोजनसाम्यं, व्रतान्तरस्य तत्र विधानात्।

व्रतान्ते चतुर्वर्णानां कर्त्तव्यमाह,—

**पञ्चगव्यं पिवेत् शूद्रो ब्रह्मकूर्चं पिवेद्द्विजः।**
**एकद्वित्रिचतुर्गा वा दद्याद् विप्रादनुक्रमात् ॥ ३ ॥ इति**

---

* उपपातक्यन्नवद्,—इति मु०।

पञ्चगव्यब्रह्मकूर्च्चयोर्विधानमुत्तरत्र वक्ष्यते। तत्र शूद्रस्यामन्त्रस्या-मन्त्रकं पञ्चगव्यं, इतरेषां समन्त्रकं ब्रह्मकूर्च्चम्। विप्रोगामेकां दक्षिणां दद्यात्। क्षत्रियो द्वे, वैश्यस्तिस्रः, शूद्रश्चतस्रः। गवामसम्भवे सुवर्णं दद्यादित्यभिप्रेत्य वाशब्दः पठितः। तत्र सुवर्णस्य गोप्रत्याम्नायस्य परिमाणमाह प्रजापतिः,—

"गवामलाभे निष्कं वा* निष्कार्द्धं पादमेववा"—इति।

विप्रस्य शूद्राद्यन्नभोजने प्रायश्चित्तमाह,—

शूद्रान्नं सूतकान्नञ्च अभोज्यस्यान्नमेवच।
शङ्कितं प्रतिषिद्धान्नं पूर्व्वोच्छिष्टं तथैवच ॥४॥
यदि भुक्तन्तु विप्रेण अज्ञानादापदेऽपि वा।
ज्ञात्वा समाचरेत् कृच्छ्रं ब्रह्मकूर्च्चन्तु† पावनम् ॥५॥ इति

अत्र शूद्रान्नस्य गर्हितताऽङ्गिरसा प्रपञ्चिता‡,—

"आहिताग्निस्तु यो विप्रः शूद्रान्नं प्रतिगृह्य तु।
भोगात्तत्समतां याति तिर्य्यग्योनिं च गच्छति॥
यस्तु वेदमधीयानः शूद्रान्नमुपभुञ्जति।
शूद्रे वेदफलं याति शूद्रत्वं चापि गच्छति§॥

---

* निष्कं स्यात्,—इति शा०।

* ब्रह्मकुर्व्वन,—इति मु०।

‡ निषेधः आङ्गिरसा प्रपञ्चितः—इति मु०।

§ याति स द्विजः,—इति मु०।

आघ्राला चोष्मणा चैव स्पृष्ट्वा च प्रतिगृह्य च ।
प्रशस्य स्वस्ति चेत्युक्त्वा भोक्तैव तु न संशयः ॥
एते दोषा भवन्तीह शूद्रान्नस्य प्रतिग्रहे ।
अनुग्रहन्तु वक्ष्यामि मनुना चोदितं पुरा ॥
आमं वा यदि वा पक्वं शूद्रान्नमुपसाधयेत्* ।
किल्बिषं भजते भोक्ता यस्य विप्रः पुरोहितः ॥
गुर्व्वर्थं ह्यतिथीनान्तु भृत्यानान्तु विशेषतः ।
प्रतिगृह्य प्रदातव्यं न तु तृप्येत् स्वयं ततः ॥
शूद्रान्नरसपुष्टस्य ह्यधीयानस्य नित्यशः ।
जपतो जुह्वतो वाऽपि गतिरूर्द्धा न विद्यते ॥
षण्मासानथ यो भुङ्क्ते शूद्रस्यान्नं निरन्तरम् ।
जीवन्नेव भवेत् शूद्रो मृतः श्वा चापि जायते ॥
अकृत्वैव निवृत्तिं यः शूद्रान्नान्म्रियते द्विजः ।
आहिताग्निर्व्विशेषेण स शूद्रगतिभाग्भवेत्"—इति ॥

व्यासोऽपि,—

"शूद्रान्नरसपुष्टस्य दित्सोरपि च नित्यशः ।
यजतो जुह्वतो वाऽपि गतिरूर्द्धा न विद्यते ॥
मृतसूतकपुष्टाङ्गो द्विजः शूद्रान्नभोजनः ।
अहमेव न जनामि कां कां योनिं निगच्छति† ॥
गृध्रोद्वादश जन्मानि दश जन्मानि सूकरः ।

* साकयेत्,—इति मु० ।
† गमिष्यति,—इति मु० ।

श्वा चैव सप्त जन्मानि इत्येवं मनुरुक्तवान्* ॥
शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः।
स भवेत् सूकरो ग्राम्यस्तस्य वा जायते कुले"—इति॥

आपस्तम्बोऽपि,—

"यस्तु भुञ्जीत शूद्रान्नं मासमेकं निरन्तरम्।
इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते॥
शूद्रान्नं शूद्रसंस्पर्शः† शूद्रेण च सहासनम्।
शूद्राज्ज्ञानागमश्चैव ज्वलन्तमपि पातयेत्॥
आहिताग्निस्तु यो विप्रः शूद्रान्नेन प्रवर्त्तते।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः"—इति॥

सुमन्तुरपि,—

"राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्त्तिनः‡ ॥
कारुकान्नं प्रजा हन्ति बलं निर्णेजकस्य च।
गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति॥
रूपं चिकित्सिकस्यान्नं पुंश्चल्याश्च तथा श्रियम्§।
विष्ठा वार्द्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम्॥

---

* जन्मानीत्येवं मनुरुवाच ह,—इति मु०।

† शूद्रसम्पर्कः,—इति मु०।

‡ यशश्चर्म्मप्रवर्त्तिनः,—इति मु०। यशश्चर्म्मावकर्त्तिनः,—इत्यन्यत्र पाठः।

§ पुंश्चल्यास्त्वन्नमिन्द्रियम्,—इति मु०।

एतेभ्योऽन्ये त्वभोज्यान्नाः* क्रमशः परिकीर्त्तिताः ।
तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः"—इति ॥

तदिदं गर्हितं शूद्रान्नमज्ञानादाऽऽपत्काले वा यो विप्रो भुङ्क्ते, स ब्रह्मकूर्च्चमाचरेत् । तस्य पावनत्वं, बहुमन्त्रसंस्कृतत्वात् । यस्तु ज्ञात्वा शूद्रान्नं भुङ्क्ते, स प्राजापत्यमाचरेत् । तथा च मनुः,—

"भुञ्जानोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च"—इति ॥

न च ब्रह्मकूर्च्चस्यैकोपवासरूपत्वात् त्र्यहक्षपणेन विरोध इति शङ्कनीयम् । तयोः शक्ताशक्तविषयत्वात् । अत्र दिनत्रयोपवासं लिखितोऽप्याह,—

"भुक्त्वा वार्द्धुषिकस्यान्नमप्रत्तस्यासुरस्य च ।
शूद्रस्य तु तथा भुक्त्वा त्रिरात्रं स्यादभोजनम्"—इति ॥

प्रजापतिस्त्वत्र व्यवस्थितानि व्रतान्याह,—

"ब्राह्मणस्यैव शूद्रान्नमभोज्यं परिकीर्त्तितम् ।
सकृद्भुक्त्वा तदज्ञानाद्ब्रह्मकूर्चं सकृत्पिबेत् ॥
अभ्यासे च तदभ्यस्येदाममन्नमगर्हितम् ।
मत्या त्रिरात्रं कुर्व्वीत कृच्छ्रमभ्यासतश्चरेत्"—इति ॥

जाताशौचेन मृताशौचेन वा संयुक्तस्य पुरुषस्यान्नं सूतकान्नम् । तन्निन्दा च मनुना दर्शिता,—

"सूतान्नं† रजकस्यान्नं चोरस्यान्नं तथैव च ।

---

* एतेभ्योऽन्यच भोज्यान्नाः,—इति मु० ।

† तस्यान्नं,—इति मु० ।

मृतके सूतके चैव स्वर्गस्थमपि पातयेत्”—इति ॥

नटादिरभोज्यः। विप्रादीन् भोजयितुमनर्हत्वात्। तथाच बृहस्पतिः,—

“नटनर्त्तकचाण्डालचर्मकारः सुवर्णकृत्।

स्थाणुपाषण्डगणिका अभोज्यान्नाः प्रकीर्त्तिताः”—इति ॥

याज्ञवल्क्योऽपि,—

“कदर्य्यबद्धचोराणां क्लीवरङ्गावतारिणाम्।

वैणाभिशस्तवार्द्धुष्यगणिकागणरक्षिणाम् ॥

चिकित्सकातुरोन्मत्तपुंश्चलीक्रुद्धविद्विषाम्।

क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥

अवीरस्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम्।

स्त्रीविक्रयिकर्मकारतन्तुवायश्ववृत्तिनाम्* ॥

नृशंसराजरजककृतघ्नवधजीविनाम्।

चेलधावसुराजीवसहोपपतिवेश्मनाम् ॥

एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा”—इति।

शङ्कितमित्यत्र द्विविधा शङ्का विवक्षिता, विषप्रक्षेपिका शास्त्रनिश्चयत्वशङ्का चेति। तथाहि, केषुचित् कीकटदेशेषु प्रेतभूतगणादिरूपास्तामसदेवतास्तोषयितुं नरबलिं सङ्कल्प्य मनुष्यान्मारयितुं अन्नमध्ये गूढं विषं प्रक्षिपन्तीत्यस्ति महती प्रसिद्धिः। तादृशेषु गृहेषु विषशङ्कासम्भवात् शङ्कितमन्नमित्युच्यते। तत्तु न भोक्तुं योग्यम्,

“विषं चोपविषं भुक्त्वा चरेच्चान्द्रायणव्रतम्”—इति

---

* नास्तीदमर्द्धं मु० पुस्तके।

चतुर्व्विंशतिमते विषभोजननिन्दास्मरणात् । तथा, केचित् श्राद्धालवः शूद्रादयः स्वगृहे श्रोत्रियो न भुङ्क्ते इत्यभिप्रेत्य श्रोत्रियान्तरगृहे द्रव्यं दत्वा भोजयन्ति । तादृशस्य श्रोत्रियान्तरस्य गृहे सिद्धमन्नं निन्द्यत्वेन प्रक्षिप्तम् । प्रतिषिद्धान्नं गोघ्रातादि । तथाच याज्ञवल्क्यः,—

"गोघ्रातन्तु शुनोच्छिष्टं श्वस्पृष्टं* पतितेक्षितम् ।
उदक्यास्पृष्टसंदृष्टं† पर्य्यायान्नं विवर्जयेत्"—इति ॥

पात्रे पतितस्यान्नस्यार्द्धं भुक्त्वा शिष्टमन्नं कालान्तरे भोक्तुं यदि संगृह्यते, तदा तदन्नं पूर्व्वोच्छिष्टमित्यभिधीयते । तेष्वेतेषु सूतकान्नादिषु पूर्व्वोच्छिष्टान्तेषु पञ्चसु भुक्तेषु शूद्रान्नवद्ब्रह्मकूर्च्चकृच्छ्रौ वेदितव्यौ । सूतकान्ने ये वक्तव्यविशेषास्ते सर्व्वेऽप्युपरिष्टाद्वक्ष्यन्ते । यत्त्वभोज्यान्ने सुमन्तुनोक्तम् । "अभिशस्तपतितपौनर्भवपुंश्चल्यशुचिवित्रस्तकारतैलिकचाक्रिकध्वजिसुवर्णकारलेखकवैङ्किकपण्डकाबन्धकगणगणिकान्नानि चाभोज्यानि, सौनिकक्रव्यादनिषादवुरुड़चर्मकाराअभोज्यान्नाप्रतिग्राह्याश्च, अन्नप्रतिग्रहयोश्चान्द्रायणं चरेत्"—इति । तत्कामकृताभ्यासविषयम् । यच्च शङ्खेनोक्तम्,—

"शूद्रान्नं ब्राह्मणोभुक्त्वा तथा रङ्गावतारिणः ।
चिकित्सकस्य क्रूरस्य‡ तथा स्त्रीशूद्रजीविनः§ ॥

---

* गोघ्रातं शकुनोच्छिष्टमुच्छिष्टं,—इति मु० ।

† संघुष्टं,—इति मु० ।

‡ वस्त्र,—इति मु० ।

§ स्त्रीमृगजीविनः,—इति मु० ।

षण्डस्य कुलटायाश्च तक्ष्णो रजकस्य च* ।
कदर्य्यस्य नृशंसस्य वेश्यायाः कितवस्य च।
गणान्नं गणिकान्नञ्च† मृगजीविश्ववृत्तिनाम् ॥
सौनिकान्नं सूतिकान्नं भुक्त्वा मासं व्रती भवेत्"- इति ।

एतच्च पूर्व्वेण समानविषयम् । मासव्रतस्य चान्द्रायणरूपत्वात् । यदपि वृहस्पतिनोक्तम्,—

"शौण्डिकान्नं नटस्यान्नं क्लीवदण्डिकयोरपि ।
दुष्टान्नमवशिष्टान्नं सोमविक्रयिणस्तथा ॥
भृत्यान्नं सूतिकान्नञ्च वार्द्धुषेः पतितस्य च ।
एतेषां ब्राह्मणो भुक्त्वा द्वादशाहं यवान् पिवेत्"—इति ।

यदपि शङ्खलिखिताभ्यामुक्तम्। "अभिशस्तपतितरजकचाक्रिकतैलिकग्रामयाजकशूद्रसांवत्सरिककुलिकसुवर्णकारचर्मकारचित्रवृत्तिघोषकतन्तुवायरङ्गावतारिमानकूटशौण्डिकवधजीविनृशंसात्मविक्रयिवार्द्धुषिकश्वावभटवृत्तिव्रात्यतस्कराान्नभोजनेष्वतिकृच्छ्रं चरेत्"—इति । एतदुभयं पूर्व्वोक्तविषये चान्द्रायणं कर्त्तुमशक्तं प्रति वेदितव्यम् । यदपि वृहस्पतिना दर्शितम्,—

---

* षण्डस्य कुलटायाश्च तथा बन्धकरस्त्रियाः ।
अभिशस्तस्य चोरस्य अवीरायाः स्त्रियास्तथा ॥
चर्म्मकारस्य वेनस्य क्लीवस्य पतितस्य च ।
बन्धकारस्य तक्ष्णश्च रजकस्य च वार्द्धुषेः—इति मु० ।

† भूमिपालान्नं,—इति मु० ।

"गान्धर्व्वो लोहकारश्च सौनिकस्तन्तुवायकः ।
चक्रोपजीवी रजकः कितवस्तस्करस्तथा ॥
यजमानोपजीवी च शूद्राध्यापकयाजकौ ।
कुलटश्चित्रकर्मा च वार्द्धुषिश्चर्मविक्रयी ॥
समर्घं पण्यमाहृत्य महार्घं यः प्रयच्छति ।
स वै वार्द्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत् ॥
वृथाऽऽरामाश्रमाणाञ्च भेदकः पुण्यविक्रयी ।
विक्रयी ब्रह्मणो यश्च योनिसाङ्करिकश्च यः ॥
रङ्गोपजीवी कूटाग्रः कुहको गुप्तिकस्तथा* ।
भिषजोगरदश्चैव† रूपाजीवी च सूचकः ॥
सौनिको वणिकश्चैव निषादेन समाः स्मृताः ।
कर्मणा तेषु यो मोहाद् ब्राह्मणो वर्त्तते सदा ॥
प्रायश्चित्ते तु चरिते परिहार्य्यो भवेत् स हि‡ ।
एते ब्राह्मणचण्डालाः सर्व्वे ब्रह्महणः किल ॥
तस्माद् देवे च पित्र्ये च वर्जितास्तत्त्वदर्शिभिः ।
एतेषामेव सर्व्वेषां प्रत्यापत्तिस्तु§ मृग्यताम् ॥
भैक्षान्नमुपभुञ्जानो द्विजश्चान्द्रायणं चरेत् ।
एतेषां ब्राह्मणोभुक्त्वा दत्त्वा कृत्वा प्रतिग्रहम् ॥
प्राजापत्येन शुद्धेत् तु तस्मात् पापान्न संशयः"—इति ।

---

* कुहकोगुप्तगुप्तिकः,—इति मु० ।
† भिषक् च रजकश्चैव,—इति मु० ।
‡ भवेद्बहिः,—इति मु० ।
§ प्रत्यासत्तिस्तु,—इति मु० ।

तत्र चान्द्रायणं पूर्व्वोक्तचान्द्रायणेन समानविषयम्। प्राजापत्यन्तु तस्मिन्नेव विषये वेदविदं प्रत्यवगन्तव्यं, ब्राह्मण इति विशेषाभिधानात्। यच्चोक्तमङ्गिरसा,—

"अभोज्यानान्तु सर्व्वेषां भुक्त्वा चान्नमुपस्कृतम्।

अन्त्यावसायिनां भुक्त्वा पादकृच्छ्रेण शुद्ध्यति"—इति॥

यदपि विष्णुनोक्तम्। "गणगणक*स्तेनगायनान्नानि भुक्त्वा सप्तरात्रं पयसा वर्त्तेत। तच्चान्नं चर्मकर्त्तुश्च†। वार्द्धुषिककदर्य्यदीक्षितबद्धनिगलाभिशस्तषण्ढानाञ्च। पुंश्चलीदाम्भिकचिकित्सकलुब्धकक्रूरोच्छिष्टभोजिनां च। अवीरास्त्रीस्वर्णकारसपत्नपतितानाञ्च। पिशुनानृतवादिक्रतुधर्मसोमविक्रयिणाञ्च। शैलूषतन्तुवाय‡कृतघ्नरजकानां च। चर्मकारनिषादरङ्गावतारिवैण§शस्त्रविक्रयिणाञ्च। श्वजीविशौण्डिकतैलिकचेलनिर्णेजकानाञ्च। रजस्वलासद्योपपतिवेश्मनां च। भ्रूणघ्नावेक्षितमुदक्यासंस्पृष्टं पतत्रिणाऽवलीढं शुना संस्पृष्टं गवाघ्रातञ्च। कामतः पादस्पृष्टमवक्षुतं च। मत्तक्रुद्धातुराणां च। अनर्च्चितं वृथामांसञ्च पाठीनरोहितञ्च राजिवसिंहतुण्डं च सशल्कवर्जं सर्व्वमत्स्यमांसाशने त्रिरात्रमुपवसेत्"—इति। तत्र त्रिरात्रोपवासोऽकामकृतसकृद्भोजनविषयः। तस्मिन्नेव विषये मूलवचनोक्तब्रह्मकूर्च्चस्त्वशक्तं प्रति वेदितव्यः॥।

---

* गणगणक,—इति नास्ति मु० पुस्तके।

† चर्म्मकारकृतं च,—इति मु०।

‡ तुन्नवाय,—इति मु०।

§ वैद,—इति मु०।

‖ ब्रह्मकूर्चमशक्तं प्रति वेदितव्यम्,—इति मु०।

अप्तराचपयोव्रतमकामकृताभ्यासविषयम् । शङ्कितप्रतिषिद्धान्नयोर्हारीत आह,—

"मृतसूतकशूद्रान्नं मदोषेणापि संस्कृतम् ।
शङ्कितं प्रतिषिद्धान्नं विद्विषोऽन्नमथापिवा ॥
यदि भुञ्जीत विप्रो यः प्रायश्चित्ती ध्रुवं भवेत् ।
एकरात्रोपवासश्च गायत्र्यष्टशतं जपेत्* ॥
प्राशयेत् पञ्चभिर्मन्त्रैः पञ्चगव्यं पृथक् पृथक् ।
एतेन शुद्ध्यते विप्रो ह्यन्यैश्चाभोज्यभोजनैः"—इति ॥

एतच्च ब्रह्मकूर्च्चवद् व्याख्येयम् । पूर्व्वोच्छिष्टे तु ब्रह्मकूर्च्चसमानं व्रतं स्मृत्यन्तरे दर्शितम्,—

"स्वमुच्छिष्टन्तु योभुङ्क्ते यो भुङ्क्ते मुक्तभाजने ।
एवं वैवस्वतः प्राह भुक्त्वा सान्तपनं चरेत्"—इति ॥

पूर्व्वोच्छिष्टस्य पुनर्भोजने व्रतचरणमभिहितम् । तेनैव दृष्टान्तेन बालाद्युच्छिष्टस्याभोज्यत्वमाशङ्क्य स्वल्पशुद्ध्या भोज्यत्वमाह,—

**बालैर्नकुलमार्जारैरन्नमुच्छिष्टितं† यदा ।**
**तिलदर्भोदकैः प्रोक्ष्य शुद्ध्यते नात्र संशयः ॥६॥**

उच्छिष्टितम्‡ उच्छिष्टतामापादितम् । प्रोक्षितस्यान्नस्य§ श्रद्धाजडस्योच्छिष्टत्वशङ्काऽनपापात् पूर्णव्रतमाचरणीयमिति संशयः स्यात् ।

---

* भवेत्,—इति स० शा० ।
† मुच्छेषितं,—इति मु० ।
‡ उच्छेषितम्,—इति मु० ।
§ प्रोक्षितस्य भोजने,—इति शा० ।

अतो नात्र संशयः कर्त्तव्य इत्युक्तम्। प्रोक्षणमकृत्वा भुक्ते सति पञ्चगव्यं पातव्यम्। तदाह सम्वर्त्तः,—

"श्वकाकोच्छिष्टगोच्छिष्टभक्षणे तु त्र्यहं क्षिपेत्।
विड़ालमूषकोच्छिष्टे पञ्चगव्यं पिवेद्विजः*"—इति॥

शास्त्रीयपञ्चगव्यपाने योऽशक्तः, तं प्रत्युक्तं स्मृत्यन्तरे,—

"भुक्त्वोच्छिष्टन्तु काकानां विशुद्ध्येत त्र्यहोषितः।
भुक्त्वोच्छिष्टं विड़ालादेः पञ्चगव्यं पिवेद्विजः"—इति॥

मनुः,—

"विड़ालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च।
केशकीटावपन्नञ्च पिबेद्ब्राह्मीं सुवर्च्चलाम्†"—इति॥

विष्णुरपि। "विड़ालकाकनकुलाखूच्छिष्टभोजने ब्राह्मीं सुवर्च्चलां पिवेत्। श्वोच्छिष्टाशने दिनमेकमुपोषितः पञ्चगव्यं पिवेत्। पञ्चनखविण्मूत्राशने त्रिरात्रं पयसा वर्त्तेत ब्राह्मणः। शूद्रोच्छिष्टभोजने त्रिरात्रमुपवसेत्, दिनमेकं चोदके वसेत्। मधुमांसाशने प्राजापत्यम्। सप्तरात्रं वैश्योच्छिष्टभोजने। पञ्चरात्रं राजन्योच्छिष्टभोजने। त्रिरात्रं राजन्यः शूद्रोच्छिष्टाशी, पञ्चरात्रं वैश्योच्छिष्टाशी। त्रिरात्रं वैश्यः शूद्रोच्छिष्टाशी। चण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धान्नं भुक्त्वा पराकम्"—इति। उशनाऽपि। "ब्राह्मणोच्छिष्ट-

---

* श्वकाकोच्छिष्टभक्षणे त्र्यहं क्षिपेत्, विड़ालमूषकोच्छिष्टभक्षणे पञ्चगव्यं पिवेद् द्विजः,—इति मु०।

† सुवर्चसम्,—इति शा० स०। एवं परत्र।

भोजने प्राणायामशतं कुर्य्यात् । क्षत्रियोच्छिष्टभोजने प्राणायामसहस्रम् । वैश्योच्छिष्टभोजने दशसहस्रं प्राणायामम् । मतिपूर्व्वं प्राजापत्यमतिकृच्छ्रं कृच्छ्रातिकृच्छ्रं च । शूद्रोच्छिष्टभोजने सप्तरात्रं यवागूपानं, मतिपूर्व्वं चेत् पराकः । एवं द्विजात्युच्छिष्टभोजने शूद्राणाञ्च । ब्राह्मणोच्छिष्टानामपां पाने षोड़शप्राणायामं धारयेत् । क्षत्रियाणां त्रिंशद्वैश्यानाञ्चत्वारिंशत् शूद्राणां कुशवारिपानं त्र्यहम् । बुद्धिपूर्व्वं चेत्, त्र्यहं चतुरहं सप्तरात्रञ्च पञ्चगव्यपानं क्रमेण । अन्त्यजानामुच्छिष्टभोजनेऽबुद्धिपूर्व्वं महासान्तपनं, बुद्धिपूर्व्वं चान्द्रायणम्"—इति । मनुरपि,—

"शूद्रोच्छिष्टञ्च पीत्वा तु कुशवारि पिबेत् त्र्यहम् ।
अभोज्यानान्तु भुक्त्वाऽन्नं स्त्रीशूद्रोच्छिष्टमेवच ॥
जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं यवान् पिबेत्"—इति ।

जातूकर्णोऽपि,—

"जम्बूककाकमार्ज्जारश्वगोधानाञ्चवामपि ।
मत्योच्छिष्टं द्विजो भुक्त्वा कृच्छ्रं सान्तपनं चरेत्"—इति ॥

याज्ञवल्क्योऽपि*,—

"विप्रार्द्धं क्षत्रियस्य स्याद्वैश्यानां च तदर्द्धकम् ।
तदर्द्धमेव शूद्राणां प्रायश्चित्तं विदुर्ब्बुधाः"—इति ।

वृहद्विष्णुः । "ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रं पञ्चगव्यं पिबेत् । वैश्योच्छिष्टाशने पञ्चरात्रं, राजन्योच्छिष्टाशने त्रिरात्रं, ब्राह्मणोच्छिष्टाशने एकाहम्"—इति । शङ्खः । "ब्राह्मणोच्छिष्टाशने

* कण्वोऽपि,—इति मु० ।

महाव्याहृतिभिरभिमन्त्र्याप: पिबेत्। क्षत्रियोच्छिष्टाशने ब्राह्मणो-रसपक्केन त्र्यहं क्षीरेण वर्त्तयेत्। वैश्योच्छिष्टभोजने त्रिरात्रोपोषितो-ब्राह्मीं सुवर्च्चलां पिबेत्। शूद्रोच्छिष्टभोजने षड्रात्रमभोजनम्"—इति। यमः,—

"भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुद्ध्यति।
भूभुजा सह भुक्त्वाऽन्नं सप्तरात्रेण शुध्यति॥
वैश्येन सह भुक्त्वाऽन्नमतिकृच्छ्रेण शुद्ध्यति।
शूद्रेण सह भुक्त्वाऽन्नं चान्द्रायणमथाचरेत्"—इति।

आपस्तम्बः। "शूद्रोच्छिष्टभोजने तु सप्तरात्रमभोजनं स्त्री-णाञ्च"—इति। शङ्खः,—

"शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः।
क्षत्रियस्य तु सप्ताहं ब्राह्मणानां तथा दिनम्"—इति॥

बृहद्यमः,—

"माता वा भगिनी वाऽपि भार्य्या वाऽन्याश्च योषितः।
न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्"—इति॥

आपस्तम्बः,—

"अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः।
चान्द्रं कृच्छ्रं तदर्द्धं तु ब्रह्मक्षत्रविशां विधिः"—इति।

अङ्गिराः,—

"चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे।
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत्॥
षड्रात्रञ्च त्रिरात्रञ्च वर्णयोरनुपूर्वशः"—इति॥

वृद्धशातातपः,—

"पीतशेषन्तु यत् किञ्चिद्भाजने मुखनिःसृतम् ।

अभोज्यं तद्विजानीयाद् भुक्त्वा चान्द्रायणं चरेत्"—इति ।

शातातपः,—

"शूद्रस्योच्छिष्टभोजी तु त्रिरात्रोपोषितः शुचिः* ।

सुराभाण्डोदकं पीत्वा छर्द्दितो घृतसेवकः ।

अहोरात्रोपवासेन शुद्धिमाप्नोति वै द्विजः"—इति ॥

षट्त्रिंशन्मतौ†,—

"दीपोच्छिष्टन्तु यत्तैलं रात्रौ रथ्याहृतन्तु यत् ।

अभ्यङ्गाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुद्ध्यति"—इति ॥

अत्र बालोच्छिष्टप्रसङ्गादुदाहृतेषु वचनेष्वेकस्मिन्विषये श्रूयमाणानां बहूनां व्रतानामावृत्तितारतम्यविषयत्वेन व्यवस्था वर्णनीया ।

भुक्तोच्छिष्टभोजने प्रायश्चित्तमभिधाय पङ्क्त्युच्छिष्टभोजने प्रायश्चित्तमाह,—

**एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने ।**
**यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ ७ ॥**
**मोहाद्भुञ्जीत यस्तत्र पङ्क्तावुच्छिष्टभोजने ।**
**प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं तथा‡ ॥ ८ ॥ इति ।**

---

* क्वचित्,—इति मु० ।

† षट्त्रिंशतिमते,—इति मु० ।

‡ चरेत्,—इति मु० ।

एको विप्रः सहसा स्वभोजने समाप्ते वा भोजनमध्ये येन केनचिद् विघ्नेन वा भोजनपात्रं परित्यज्य इतरेषु विप्रेषु भुञ्जानेष्वेव सत्सु स्वयमुत्थाय यदि गच्छेत्, तदा विप्रान्तरैः स्वस्वपात्रेषु भुक्तशिष्टमन्नं न भोक्तव्यम्। तमिमं शास्त्रीयनिषेधमज्ञात्वा यो भुङ्क्ते, स सान्तपनं चरेत्। निमित्तस्याल्पत्वाच्च द्विरात्रसान्तपनं वेदितव्यम्। अस्मिन्नेव विषये समानं व्रतं स्मृत्यन्तरे दर्शितम्,—

"यस्तु भुङ्क्ते द्विजः पङ्क्तावुच्छिष्टायां कदाचन।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति"—इति॥

वस्त्रादिव्यवधाने पङ्क्त्युच्छिष्टदोषो नास्ति। एतच्चाचारकाण्डे दर्शितम्।

अभिनवक्षीरादिभोजने प्रायश्चित्तमाह,—

**पीयूषं* श्वेतलशुनवृन्ताकफलशृञ्जनम्।**
**पलाण्डुवृक्षनिर्यासं देवस्वकवकानि† च॥ ९॥**
**उष्ट्रीक्षीरमविक्षीरमज्ञानाद् भुञ्जते द्विजः।**
**त्रिरात्रमुपवासेन पञ्चगव्येन शुद्ध्यति॥ १०॥ इति।**

पीयूषत्वं पयसोऽभिनवत्वं, प्रसवकालीनत्वमित्येके। दशाहान्तःपातित्वमित्यपरे। दशाहादूर्द्ध्वमपि प्रसवप्रयुक्तरक्ताद्यार्द्रतासद्भावकालीनत्वमिति केचित्। श्वेतशब्दो लशुनवृन्ताकाभ्यां सम्बध्यते।

---

* पीय्यूषम्,—इति मु०। एवं परत्र।

† कवकानि,—इति मु०। एवं परत्र।

तेन रक्तलशुनकृष्णवृन्ताकादौ नेदं प्रायश्चित्तमित्युक्तं भवति । गृञ्जनं पत्रविशेषः । यदीयं चूर्णं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्ति । विटास्तु स्वराद्यर्थम्* । मूलविशेषो वा गृञ्जनापरपर्य्यायः । पलाण्डुः स्थूलकन्दो-लशुनविशेषः । वृक्षनिर्यासो हिङ्गुकर्पूरादिव्यतिरिक्तः । हिंग्वादीनां भोज्यत्वाभ्यनुज्ञानात् । देवतार्थमुपकल्पिते चैत्यादावुत्पन्नमन्नं देवस्वम् । कवकं भूमौ छत्राद्याकारेणोत्पन्नं शिलीन्ध्रशब्दवाच्यम् । पीयूषादिभोजी त्रिरात्रमुपोष्य चतुर्थे दिवसे पञ्चगव्यं पिबेत् । मतिपूर्वे तु भोजने मनुराह,—

"छत्राकं विड्वराहञ्च लशुनं ग्राम्यकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः"—इति ॥

अमतिपूर्वे स एवाह,—

"अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् ।
यतिचान्द्रायणं वाऽपि शेषेषूपवसेदहः"—इति ॥

तच्च सप्तरात्रात्मकं सान्तपनं वेदितव्यम् । "अबुद्धिपूर्वे सान्तपनं सप्तरात्रं वा"—इति गौतमेन सप्तरात्रोपवाससमविकल्पस्मरणात् । एवञ्च सति मूलवचनोक्तत्र्यहोपवासोभक्षितोद्गारितविषयः द्रष्टव्यः । चान्द्रायणन्त्वावृत्तिविषयम् । शेषेषूपवसेदहरित्येतत् कुसुम्भादिषु द्रष्टव्यम् । तथा चतुर्विंशतिमते,—

"पलाण्डुं श्वेतवृन्ताकं कुसुम्भं वनकुक्कुटम् ।

---

* वेश्यास्तु मदाद्यर्थम्,—इति मु० ।

† वृन्तवृन्ताकम्,—इति मु० ।

नालिकां बालपुष्पञ्च भुक्त्वा दिनमभोजनम्"—इति ॥

न चैतस्य पलाण्डौ मूलवचनविरोधः शङ्कनीयः। अवान्तर-जातिभेदेन व्यवस्थापनात्। "पलाण्डोर्दश जातयः"—इत्यभिधानात्। यत्तु सुमन्तुनोक्तम्। "लशुनपलाण्डुगृञ्जनभक्षणे सावित्र्यष्टसहस्रेण मूर्द्ध्नि सम्पातान्नयेत्"। तद्बलात्कारेणानिच्छतोभक्षणविषयम्। तदेकसाध्यव्याध्युपशमार्थभक्षणविषयं वा। अतएवानन्तरं तेनैवोक्तम्। "एतान्येवातुरस्य भिषक्क्रियायामप्रतिषिद्धानि भवन्ति। यानि चान्यान्येवंप्रकाराणि तेष्वप्यदोषः"—इति। यानि तु व्रतान्तराण्यनुक्रान्तपीयूषादिविषये मुनिभिः स्मर्य्यन्ते, तेषु सर्वेषु व्रतगौरवानुसारेणावृत्तिगौरवविषयत्वं कल्पनीयम्। व्रतान्तराणि तु लिख्यन्ते। तत्र शातातपः,—

"लशुनं गृञ्जनं जग्ध्वा पलाण्डुं कृष्णवृन्तकम्* ।
छत्राकं विड्वराहञ्च ग्राम्यकुक्कुटमेवच ॥
उष्ट्रीं च मानुषीं वाऽपि रासभीक्षीरभोजनात् ।
उपनयनं पुनः कुर्य्यात् तप्तकृच्छ्रं चरेन्मुहुः"—इति ॥

याज्ञवल्क्यः,—

"पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।
लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत्"—इति ।

वृहद्यमः,—

"नालिकां नालिकेरीञ्च श्लेष्मातकफलानि च ।

---

* पलाण्डुं च तथा शुनीम्,—इति मु० ।

भूस्तृणं शिग्रुकञ्चैव खड्गाख्यं कवकं तथा ॥
एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद्द्विजः”—इति ।

विष्णुः । “भूर्ना मांसाशने कुचाककवकाशने सान्तपनम् । यवगोधूमजं पयोविकारं खेराकञ्च शुष्कशाडवञ्च वर्जयित्वा* पर्य्युषितं प्राश्योपवसेत् । अशुनामेध्यप्रभवांश्च लोहितान् वृक्षनिर्यासान् तैलञ्च वृथा कृसरञ्च यवपायसापूपशष्कुलीश्च देवान्नानि हवींषि च गोऽजाविमहिषीवर्ज्जं† सर्व्वपयांसि चानिर्द्दशाहैतान्यपि च स्यन्दिनीसन्धिनी विवत्साक्षीरञ्चामेध्यभोजनञ्च दधिवर्ज्जं‡ केवलं सर्वशुक्तानि ब्रह्मचर्य्याश्रमी श्राद्धाशने§ त्रिरात्रमुपवसेत्‖ दिनमेकं चोदके वसेत्”—इति । यमः,—

“लशुनं च पलाण्डुञ्च¶ गृञ्जनं कवकानि** च ।
चतुर्णां भक्षणं कृत्वा तप्तकृच्छ्रेण शुध्यति”—इति ॥

कूर्मपुराणे,—

“अलावुं†† किंशुकं चैव भुक्त्वाऽप्येतद् व्रतं चरेत् ।

---

* खेराकञ्च वर्ज्जयित्वा,—इति मु० ।

† गोऽजामहिषीवर्ज्जम्, इति शा० ।

‡ नास्त्ययमंशः स० शा० पुस्तकयोः ।

§ श्रद्धधानः,—इति मु० ।

‖ नास्त्ययमंशः मु० पुस्तके ।

¶ लशुनं सपलाण्डुं च,—इति शा० स० ।

** करकानि,—इति शा० स० । एवं परत्र ।

†† अलाबूम्,—इति मु० ।

श्चौदुम्बरञ्च कामेन* तप्तकृच्छ्रेण शुद्ध्यति"—इति ॥

शङ्खलिखितौ। "लशुनपलाण्डुगृञ्जनक्रियाकूवककुसुम्भ† भक्षणे द्वादशरात्रं पयः पिबेत्। कलञ्जशिग्धुश्लेश्मातककोविदारघनच्छत्राक-वृन्तकभक्षणे पञ्चगव्यं पिबेत्"—ति। चतुर्विंशतिमतेऽपि,—

"लशुनं गृञ्जनं चैव तृणराजफलं तथा।
वल्लीं चैव द्विजो भुक्ता चरेच्चान्द्रायणव्रतम्॥
कन्दमूलफलादीनि अज्ञानाद्भक्षयेत्तु यः।
उपवासो भवेत्तस्य पराशरवचो यथा॥
स्त्रीक्षीरन्तु‡ द्विजः पीत्वा कथञ्चित् काममोहितः।
पुनः संस्कृत्य चात्मानं प्राजापत्यं समाचरेत्॥
अजोष्ट्रीसन्धिनीक्षीरं मृगाणां वनचारिणाम्।
अनिर्दशाहगोश्चैव पीत्वा दिनमभोजनम्"—इति॥

पूर्व्वञ्च गोमांसस्यैव भक्षणे प्रायश्चित्तमुक्तं, न त्वन्यस्य। इदानीं मांसान्तरस्य भक्षणे प्रायश्चित्तमाह,—

**मण्डूकं भक्षयित्वा तु मूषिकामांसमेवच।**
**ज्ञात्वा विप्रस्त्वहोरात्रं यावकान्नेन शुद्ध्यति॥११॥इति॥**

अज्ञानकृते सकृद्भक्षणे मतमिदमवगन्तव्यम्(१)। असकृद्भक्षणे तूशनसोक्तं

* दुम्बरञ्च सकामेन,—इति शा०।
† कोपातुम्भीक,—इति शा०।
‡ स्त्रिवारन्तु,—इति मु०।

(१) मूलवचने भक्षयित्वा ज्ञात्वा इत्यभिधानात् अज्ञानतोभक्षणानन्तर-मेतन्निषिद्धमांसं मया भुक्तमिति ज्ञात्वेत्यर्थोऽवसेयः, न तु ज्ञान-पूर्व्वकभोजनं तदर्थइति ध्येयम्।

द्रष्टव्यम् । "बलाकप्लवहंसकारण्डव*चक्रवाकखञ्जरीटश्येनकपोतभार-चटकरक्तपादोलूकशुकसारसटिट्टिभमद्गुचाषभासजालपादनखकुषि-विष्किरमत्स्यक्रव्यादामेध्यानां भक्षणे पञ्चगव्यं पिबेत् त्रिरात्रम्"—इति । शङ्खलिखितौ मतिपूर्वं प्रत्याहतुः । "बकबलाकहंसप्लवचक्र-वाकखञ्जरीटकाककारण्डवक्कटभारचटकश्येनकपोतशुकसारसटिट्टि-भमद्गुभल्लूकरक्तपाद† जालपादचाषभासमद्गुशिशुमारनक्रमकर-तिमितिमिङ्गिलनकुलविड़ालसर्पमण्डूकमूषकवल्गुलीकादिमांसभक्षणे द्वादशाहमनाहारः, पिबेद्वा गोमूत्रयावकम्"—इति । एतच्च काम-कृताभ्यासविषयम् । कामकृतसकृद्भक्षणे तु याज्ञवल्क्य आह,—

"देवतार्थं हविः शिग्रु लोहितान् व्रश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि‡कवकानि§ च ॥
क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ।
सारसैकशफान् हंसान् सर्वांश्च ग्रामवासिनः ॥
कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ।
वृथा कृसरसंयावपायसापूपशष्कुलीः ॥
कलविङ्कं च काकोलं कुररं रज्जुदालकम्|| ।
जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥

---

* कारण्डव,—इति नास्ति मु० पुस्तके ।

† टिट्टिभोलूकरक्तपाद,—इति मु० ।

‡ विविधानि,—इति मु० ।

§ करकानि,—इति मु० ।

|| दारुकम्,—इति शा० ।

चाषांश्च वक्रपादांश्च* सौरं वल्लूरमेवच।

मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्"—इति॥

विष्णुस्तु जीवविशेषेण व्यवस्थितं प्रायश्चित्तमाह। "खरोष्ट्रकाकश्वहंसाशने चान्द्रायणं कुर्य्यात्। शश्वाद्यातं सूनास्थं शुष्कमांसं च। क्रव्यादमृगपक्षिमांसाशने तप्तकृच्छ्रम्। कलविङ्कप्लवहंसचक्राङ्कसारसरज्जुवालकं†दात्यूहशुकसारिकाबकबलाककोकिलखञ्जरीटाशने त्रिरात्रमुपवसेत्। एकशफोभयदन्ताशने च‡"—इति। शङ्खस्तु भक्ष्याभक्ष्यविभागपुरःसरमभक्ष्येषु प्रायश्चित्तमाह,—

"भुक्त्वा पलाण्डुं लशुनं मद्यञ्च कवकानि च।

नारं शौनं तथा मांसं विड्वराहं खरं तथा॥

गामश्वं कुञ्जरोष्ट्रौ च सर्वान् पञ्चनखांस्तथा।

क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरव्रतम्॥

भक्ष्याः पञ्चनखास्त्वेव गोधाकच्छपशल्यकाः।

खड्गश्च शशकं चैव तान् भुक्त्वा नाचरेद् व्रतम्॥

हंसं मत्स्यश्च§ काकोलं काकं वा खञ्जरीटकान्।

मत्स्यादांश्च तथा मत्स्यान् बलाकाः शुकसारिकाः॥

चक्रवाकं प्लवं काकं मण्डूकं|| भुजगं तथा।

---

* रक्तपादांश्च,—इति मु०।

† दालक,—इति शा०।

‡ शुनां मांसाशने च,—इति शा०।

§ सद्गुश्च,—इति शा०।

|| कोकं मुद्गरकम्,—इति शा०।

मासमेकं व्रतं कुर्य्याद् भूयश्च न च भक्षयेत् ।
राजीवान् सिंहतुण्डांश्च सशल्कांश्च* तथैवच ॥
पाठीनरोहितौ चापि भक्ष्या मत्स्येषु आह्निकाः ।
ग्रामेचरान् जालपादान्† प्रतुदान् नखविष्किरान् ॥
रक्तपादांस्तथा जग्ध्वा सप्ताहं व्रतमाचरेत् ।
तित्तिरिं च मयूरं च लावकञ्च कपिञ्जलम् ॥
पाठीनञ्चैव संवर्त्तं भोज्यानाह यमः सदा ।
भुक्त्वा चोभयतोदन्तांस्तथैवैकशफानपि ॥
दंष्ट्रिणश्च तथा भुक्त्वा मांसं मासं समाचरेत् ।
माहिषं चाजमौरभ्रं मार्जारं चौर्म्मेवच ॥
भक्षमार्गं समुद्दिष्टं यच्च वै पार्षदं भवेत् ।
वाराहञ्च ततो भुक्त्वा महारण्यनिवासिनम् ॥
मांसमज्ञानतो‡ भुक्त्वा मासं प्रोक्तं समाचरेत् ।
शुनां मांसं शुष्कमांसमात्मार्थे च तथा कृतम् ॥
भुक्त्वा मासव्रतं कुर्य्यात्§ प्रयतः सुसमाहितः”—इति ।

अत्र श्रुतव्रतविशेषाः आवृत्तितारतम्यविषयत्वेन व्यवस्थापनीयाः ।
शूद्रान्नं सूतकान्नं चेत्यत्र ब्राह्मणस्य शूद्रान्नभोजननिषेधमभिप्रेत्य

---

* शल्कांश्च,—इति मु० ।

† जलेचरांश्च जलजान्,—इति मु० ।

‡ मांसमद्ये तथा,—इति मु० ।

§ मत्वा,—इति मु० ।

तत्र प्रायश्चित्तमभिहितम् । तेनैव न्यायेन हीनवर्णत्वसाम्यात् "राजान्नं हरते तेजः"—इत्यादिशास्त्राच्च क्षत्रियाद्यन्नभोजनेऽपि विप्रस्य प्रायश्चित्तं प्रसज्येत । अतस्तदपनुत्तये क्षत्रियाद्यन्नभोजनमनुजानाति,—

**क्षत्रियस्यापि वैश्यस्य क्रियावन्तौ शुचिव्रतौ ।**
**तद्गृहेषु द्विजैर्भोज्यं हव्यकव्येषु नित्यशः ॥ १२ ॥ इति ॥**

क्रियावन्तौ विहिताध्ययनयजनादियुक्तौ । शुचिव्रतौ; व्रतं स्मार्त्तो धर्मः, तच्च यथाविध्यनुष्ठितं शुचि भवति, तद्युक्तौ शुचिव्रतौ । श्रौतस्मार्त्तधर्मनिष्ठयोः क्षत्रियवैश्ययोर्गृहेषु हव्ये कव्ये वा शिष्टैर्विप्रैर्भोक्तव्यम् । क्रियावन्तौ शुचिव्रताविति विशेषणात् तदितरक्षत्रियादिविषयाणि तदन्ननिषेधशास्त्राणीत्यवगन्तव्यम् । तथाच चतुर्विंशतिमते तदन्ननिषेधमभिप्रेत्य प्रायश्चित्तमभिहितम्,—

"सहस्रन्तु जपेद्देव्याः क्षत्रियस्यान्नभोजने ।
तथोपवासं* वैश्यस्य सहस्रं सार्द्धमेवच"—इति ॥

क्षत्रियान्नवत् शूद्रान्नस्यापि घृतादिद्रव्यविशेषरूपस्याभ्यनुज्ञामाह,—

**घृतं तैलं तथा क्षीरं भक्ष्यं स्नेहेन† पाचितम् ।**
**गत्वा नदीतटे विप्रो भुञ्जीयात् शूद्रभोजनम् ॥ १३ ॥ इति ॥**

---

* एकोपवासं,—इति मु० ।

† शुक्तैलेन,—इति शा० ।

स्नेहपाचितं* पूरिकाशष्कुल्यादि। भुज्यते इति भोजनं भोज्य-द्रव्यं, शूद्रस्य सम्बन्धि भोजनं शूद्रभोजनम्। तादृग्घृतादिकं यथा† भोक्तव्यं भवति, तदा क्षत्रियादिगृहेष्विव न शूद्रगृहे भोक्तव्यं, किं तर्हि तद्गृहीत्वा शूद्रगृहात् निर्गत्य नदीतीरादौ भुञ्जीत। एतच्च क्षत्रियादिवर्णत्रयभोजनस्याभ्यनुज्ञानं मार्गश्रान्त्यादौ पूर्ववर्णासम्भवे वेदितव्यम्। आपदि यावता विना प्राणरक्षणं न भवति, तावदन्न-मनुज्ञायते। न तु ततोऽधिकम्। अतएव छन्दोगा उद्गीथपर्वण्युष-स्तिकाण्डे परमापदं प्राप्तस्योषस्तेर्गजोच्छिष्टानां पुनर्गजपालोच्छि-ष्टानां कुल्माषाणां जीवनाय भक्षणं, ततोऽधिकस्य तदीयोच्छि-ष्टोदकपानस्य प्रतिषेधं चामनन्ति। "हन्तानुपानमिति, उच्छिष्टं वै मे पीतं स्यादिति होवाच, न स्विदेतेऽप्युच्छिष्टा इति, न वाअजी-विष्यमिमानखादन्निति होवाच, कामो म उदकपानम्"—इति। एतच्च, "सर्व्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् (वे० ३ अ० ४ पा० २८ सू०)"—इत्यस्मिन् वैयासिके सूत्रे सम्यङ्मीमांसितम्। स्मृतिश्च भवति,—

"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा"—इति॥

याज्ञवल्क्योऽपि,—

"आपद्गतः संप्रगृह्णन् भुञ्जानोऽपि यतस्ततः।

* तैलपाचितं,—इति ग्रा०।

† इत्थमेव पाठः सर्व्वत्र। ममतु, यदा,—इति पाठः प्रतिभाति।

लिप्यते नैनसा* विप्रोज्ज्वलनार्कसमो हि सः”—इति ॥

एतदेवानेकोपाख्यानपुरःसरं मनुराह,—

“सर्व्वतः प्रतिगृह्णीयाद् ब्राह्मणस्त्वनयं गतः।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते ॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनार्कसमा हि ते।
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
आकाशमिव पङ्केन न स दोषेण लिप्यते ॥
अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः।
न चालिप्यत दोषेण† क्षुत्प्रतीकारमाचरन् ॥
श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्माधर्मविचक्षणः।
प्राणानां रक्षणार्थाय वामदेवो न लिप्तवान् ॥
भरद्वाजः क्षुधार्त्तस्तु सपुत्रो निर्जने वने।
बह्वीर्गाः प्रतिजग्राह वृहत्प्रज्ञो महातपाः ॥
क्षुधाऽऽर्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम्।
चण्डालहस्तादादाय धर्माधर्मविचक्षणः”—इति ॥

स्नेहपाचितेत्यनेनारनालादय उपलक्ष्यन्ते। तथा च चतुर्व्विंशतिमते,—

“आरनालं तथा क्षीरं कौतुकं‡ दधिसक्तवः।

---

* न लिप्येतैनसा,—इति मु०।

† पापेन,—इति मु०।

‡ कान्दवं,—इति मु०।

स्नेहपक्वञ्च तक्रञ्च शूद्रस्यापि न दुष्यति"—इति ॥

अङ्गिराश्च शूद्रं* प्रक्रम्याह,—

"मांसं दधि घृतं† धान्यं चीरमाज्यमथौषधम्(१) ।

गुड़ोरसस्तथोदश्विद् भोज्यान्येतानि नित्यशः ॥

अशृतश्चारनालञ्च कान्दकाः सक्तवस्तिलाः ।

फलानि माध्वीकमथो‡ ग्राह्यमौषधमेवच"—इति ।

घृताद्यन्नभोजने हेयोपादेयौ शूद्रौ विविनक्ति,—

**मद्यमांसरतं नित्यं नीचकर्मप्रवर्त्तकम् ।**

**तं शूद्रं वर्जयेद्विप्रः श्वपाकमिव दूरतः ॥ १४ ॥**

**द्विजशुश्रूषणरतान्मद्यमांसविवर्जितान् ।**

**स्वकर्मणि रतान् नित्यं न तान् शूद्रान् त्यजेद्विजः ॥१५॥**

जातिशूद्राः, नीचाः प्रतिलोमजाः सूतमागधादयः, तेषां कर्माश्वसारथ्यादि, तस्य प्रवर्त्तकाः, तेन जीविताः। तादृशात् शूद्रात् श्वपाकादिव घृतादिकं न स्वीकार्य्यम् । ये तु मार्गवर्त्तिनः§ शूद्राः विहितपाकयज्ञादिकर्मणि निरताः, तान् शूद्रान् घृतादिभोजने न परित्यजेत् ।

---

* शूद्रप्रतिग्रहं,—इति मु० ।

† दधिघृते,—इति शा० स० ।

‡ पिण्याकमथो,—इति मु० ।

§ इत्थमेव पाठः सर्व्वत्र । मम तु, सन्मार्गवर्त्तिनः,—इति पाठः प्रतिभाति ।

---

(१) चतुर्भिरेव यत् पूतं तदाज्यमितरद्घृतम्—इत्याज्यघृतयोर्भेदः । घृतशब्द उदकपर्य्यायोऽपि पठितो नैघण्टुककाण्डे ।

शूद्रान्नं सूतकान्नञ्चेत्यत्र सूतकान्नस्य* सामान्येन प्रायश्चित्तमभिहितम्। इदानीं सूतक-जाति-विशेषाननूद्य† तत्र व्रतविशेषान् प्रश्नपूर्व्वकमाह,—

अज्ञानाद् भुञ्चते विप्राः सूतके मृतकेऽपिवा।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे‡ विनिर्दिशेत्? ॥ १६ ॥
गायत्र्यष्टसहस्रेण शुद्धिः स्यात् शूद्रसूतके।
वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्रिये ॥ १७ ॥
ब्राह्मणस्य यदा भुङ्क्ते द्वे सहस्रे तु दापयेत्§।
अथवा वामदेव्येन साम्ना चैकेन शुध्यति ॥ १८ ॥

सूतकिनः शूद्रस्यान्नं विप्रो भुक्त्वाऽष्टौ सहस्राणि गायत्रीं जपेत्। सूतकिनोविप्रोऽन्नं भुक्त्वा पञ्चसहस्रगायत्रीजपेन शुद्धिः। क्षत्रिये सूतकिनि सति तदन्नं भुक्त्वा त्रिसहस्रगायत्रीजपं कुर्य्यात्। सूतकिनो ब्राह्मणस्यान्नं यो भुङ्क्ते, तं प्रति द्विसहस्रगायत्रीजपं विदध्यात्। कयानश्चित्र आभुवदित्यस्यामृच्युत्पन्नः सामगानां प्रसिद्धो गानविशेषो वामदेव्यं साम। तस्यैकस्य साम्नः सकृज्जपो-

---

* सूतकान्नस्य,—इति नास्ति मु० पुस्तके।

† सूतकविशेषाननूद्य,—इति मु०।

‡ सर्व्ववर्णे,—इति शा०।

§ जापयेत्,—इति मु०।

द्विसहस्रगायत्रीजपेन विकल्प्यते। ते च जपरूपा व्रतविशेषा अशक्तविषये वेदितव्याः । शक्तन्तु प्रति छागलेय आह,—

"अज्ञानाद् भुञ्जते विप्राः सूतके मृतके तथा ।
प्राणायामशतं कृत्वा शुद्ध्यन्ते शूद्रसूतके ॥
वैश्ये षष्टिर्भवेद्राज्ञि विंशतिर्ब्राह्मणे दश ।
एकाहं च त्र्यहं पञ्च सप्तरात्रमभोजनम् ॥
ततः शुद्धिर्भवेत्तेषां पञ्चगव्यं पिबेत्ततः"—इति ॥

ब्राह्मणादिक्रमेणैकाहत्र्यहादयो योज्याः । यत्तु मार्कण्डेयेनोक्तम्,—

"भुक्त्वाऽन्नं* ब्राह्मणाशौचे चरेत् सान्तपनं द्विजः ।
भुक्त्वा तु क्षत्रियाशौचे चरेत् कृच्छ्रं तथैव हि ॥
वैश्याशौचे तथा भुक्त्वा महासान्तपनं चरेत् ।
शूद्राशौचे तथा भुक्त्वा द्विजश्चान्द्रायणं चरेत्"—इति ।

एतत्तु कामकारविषयम् । यच्च शङ्खेनोक्तम्,—

"शूद्रस्य सूतके भुक्त्वा षण्मासान् व्रतमाचरेत् ।
वैश्यस्य च तथा भुक्त्वा चतुर्मासान् व्रतं चरेत्† ॥
क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् ।
ब्राह्मणस्य तथाऽशौचे भुक्त्वा मासं व्रतं चरेत्‡"—इति ।

---

* भुक्त्वा तु,—इति शा० ।

† त्रीन् मासान् व्रतमाचरेत्,—इति शा० स० ।

‡ भवेत्,—इति शा० ।

तदभ्यासविषयम्। यदपि गर्गेणोक्तम्,--

"शावे च सूतके चैव मत्या भुक्त्वैन्दवं चरेत्।
मत्याऽभ्यासे तथा कुर्य्यात् कृच्छ्रं चान्द्रायणोत्तरम्।
त्र्यहं चाकामतः कुर्य्यादभ्यासे कृच्छ्रमेवच॥
द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि च।
क्षत्रविट्शूद्रजातीनामाशौचे परिकीर्त्तितम्॥
सवर्णानान्तु सर्व्वेषां विप्रवन्निष्कृतिः स्मृता।
क्रमाद्वृद्धं क्रमाद्धीनं हीनजात्युत्तमं प्रति"॥

तदेतद्गुणहीनसूतकिविषयतया योजनीयम्। गुणवत्सूतकि-विषये तु मूलवचनोक्तं द्रष्टव्यम्। सर्व्वत्राशौचोत्तरकालमेव* प्राय-श्चित्तं द्रष्टव्यम्। "ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदेवाशौचं यावत्तेषामाशौचापगमे च प्रायश्चित्तं कुर्य्यात्"—इति विष्णुस्मरणात्। यच्च विष्णुनैव व्रतमुक्तम्। "सवर्णाशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य तस्यां निमग्नस्त्र्यघमर्षणं जप्त्वोत्तीर्य्य सावित्र्यष्टशतं जपेत्। क्षत्रियाशौचे ब्राह्मणस्त्रिरात्रोपोषितस्य। ब्राह्मणाशौचे राजन्यः क्षत्रियाशौचे वैश्यः स्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत्।

वैश्यस्य ब्राह्मणाशौचे गायत्र्यष्टशतं जपेत्।
शूद्राशौचे द्विजोभुक्त्वा प्राजापत्यव्रतं चरेत्॥
शूद्रोवैश्यो द्विजाशौचे ब्राह्मणः स्नानमाचरेत्†।

---

* सर्व्वाशौचकालान्तरमेव,—इति मु०।

† नास्तीदमर्द्धं मु० पुस्तके।

शूद्राशौचे द्विजः स्नातः पञ्चगव्यं पिबेत् सदा”—इति ;

एतन्मूलवचनेन समानविषयतया योजनीयम्। यदपि वसिष्ठेन,—

“आशौचे यस्तु शूद्रस्य* सूतके वाऽपि भुक्तवान्।

क्रिमिर्भूत्वा स देहान्ते तद्विष्ठामुपजीवति ॥

अनिर्द्दशाहे पारशवे शूद्रान्नं भुक्तवान् द्विजः।

स गच्छेन्नरकं घोरं तिर्य्यग्योन्याञ्च जायते ॥

द्वादश मासान् द्वादशार्द्धमासान् वा संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते”—इति। तदेतदत्यन्ताभ्यासविषयम्। ननूक्तरीत्या जातिविशेषेण व्रतविशेषाणां व्यवस्थितौ सत्यां ब्राह्मणादिजातिविशेषविहितस्य‡ सामान्यसूतकिनः कस्यचिदभावात् शूद्रान्नं सूतकान्नं चेत्युक्तविषयः कोऽपि न लभ्यते। अत्र हि प्राजापत्यं ब्रह्मकूर्चं चेति व्रतद्वयमभिहितम्। नायं दोषः। सामान्यतः प्रोक्तस्य प्राजापत्यस्य विष्णुप्रोक्तविशेषे व्यवस्थापनात्। विष्णुः,—

“शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यव्रतं चरेत्”—इति।

ब्रह्मकूर्चन्तु गर्गप्रोक्तत्र्यहव्रतसमानविषयतया योजनीयम्। दशाहविषये अङ्गिरा आह,—

“अन्तर्दशाहे भुक्त्वाऽन्नं सूतके मृतकेऽपि वा”§।

---

* आशौचे ब्राह्मणोयस्तु,—इति पा०

† नियोगाद्,—इति मु०।

‡ इत्यमेव पाठः सर्व्वेषु पुस्तकेषु। मम तु, ‘ब्राह्मणादिजातिविशेषरहितस्य’,—इति पाठः प्रतिभाति।

§ एतावन्मात्रमेव सर्व्वेषु पुस्तकेषु।

मूलवचनोक्तसूतकान्नभोजनप्रसङ्गेन श्राद्धभोजने प्रायश्चित्तानि लिख्यन्ते। तत्र विष्णुः,—

"प्राजापत्यं नवश्राद्धे पादोनं त्वाद्यमासिके।
त्रैपक्षिके तदर्द्धन्तु पञ्चगव्यं द्विमासिके"—इति॥

इदञ्चापद्विषयम्। अनापदि तु,—

"चान्द्रायणं नवश्राद्धे प्राजापत्यन्तु मिश्रके।
एकाहन्तु पुराणेषु[1] प्रायश्चित्तं विधीयते"—इति

हारीतोक्तं द्रष्टव्यम्। प्राजापत्यन्तु मिश्रके,—इत्येतदाद्यमासिकविषयम्। ऊनमासिकादिषु पादोनप्राजापत्यादीनि कर्त्तव्यानि। तदुक्तं चतुर्विंशतिमते,—

"प्राजापत्यं नवश्राद्धे पादोनं मासिके तथा।
त्रैपक्षिके तदर्द्धं स्यात्पादौ द्वौ मासिके ततः॥
पादोनं कृच्छ्रमुद्दिष्टं षाण्मासे चाब्दिके तथा।
त्रिरात्रं चान्यमासेषु प्रत्यब्दं चेदहः स्मृतम्"—इति॥

क्षत्रियादिश्राद्धभोजने त्वनापदि तत्रैव विशेष उक्तः,—

"चान्द्रायणं नवश्राद्धे पादोनं मासिके स्मृतम्*।
क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम्।
वैश्यस्यार्द्धाधिकं प्रोक्तं क्षत्रियस्य मनीषिभिः॥

---

* पराकोमासिके स्मृतः,—इति मु०।

---

(१) नवश्राद्धं दशाहानि नवमिश्रन्तु षड्टृतून्। अतःपरं पुराणं स्यात्,—इत्युक्तदिशा नव-मिश्रक-पुराणानि ज्ञेयानि।

शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम् ।
सार्द्धं चान्द्रायणं मासे त्रिपक्षे त्वैन्दवं स्मृतम् ।
मासद्वये पराकः स्यादूर्द्धं सान्तपनं स्मृतम्"—इति ।

यत्तु शङ्खवचनम्,—

"चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
पक्षत्रयेऽतिकृच्छ्रं स्यात् षाण्मासे कृच्छ्रएव तु ।
आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके ॥
अत ऊर्द्धं न दोषः स्याच्छङ्खस्य वचनं यथा"—इति ।

तत्सर्पादिमरणविषयम्*। ये स्तेनपतितक्लीवाः,—इत्यपाङ्क्तेय-विषयं वा ।

"चण्डालादुदकात् सर्पात् ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च नखिभ्यश्च† मरणं पापकर्मणाम् ॥
पतनानाशकैश्चैव‡ विषोद्बन्धनकैस्तथा ।
भक्तेषां षोड़शश्राद्धे कुर्य्यादिन्दुव्रतं द्विजः"—इति,
"अपाङ्क्तेयान् यदुद्दिश्य श्राद्धमेकादशेऽहनि ।
ब्राह्मणस्तत्र भुक्त्वाऽन्नं शिशुचान्द्रायणं चरेत् ।
आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुद्ध्यति ॥
सङ्कल्पिते तथा भुक्त्वा त्रिरात्रं क्षपणं भवेत्"—इति

---

* सर्पाभिहितविषयम्,—इति शा० ।

† पशुभ्यश्च,—इति शा० ।

‡ पतनानशनैश्चैव,—इति मु० ।

भरद्वाजेन प्रायश्चित्तविशेषाभिधानात्। ब्रह्मचारिणस्तु वृहद्-यमो विशेषमाह,—

"मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः।
त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति"—इति।

इदमज्ञानविषयम्। ज्ञानपूर्व्वके तु सएवाह,—

"मधु मांसं च योऽश्नीयात् श्राद्धे सूतकएवच।
प्राजापत्यं चरेत् कृच्छ्रं व्रतशेषं समापयेत्"—इति।

आमश्राद्धे* तु सर्व्वचार्द्धम्।

"आमश्राद्धे भवेदर्द्धं प्राजपत्यन्तु सर्व्वदा"—इति

षट्त्रिंशन्मतेऽभिधानात्। यत्तूशनसोक्तम्,—

"दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः।
ततः सन्ध्यामुपासीत शुद्ध्येच्च तदनन्तरम्"—इति॥

तदनुक्तप्रायश्चित्तश्राद्धविषयम्। संस्काराङ्गश्राद्धभोजने व्यासेन विशेष उक्तः,—

"निवृत्तौ† चूड़होमे तु प्राङ्नामकरणात्ततः॥
चरेत् सान्तपनं भुक्त्वा जातकर्मणि चैव हि।
अतोऽन्येषु च भुक्त्वाऽन्नं संस्कारेषु द्विजोत्तमः॥
नियोगादुपवासेन शुद्ध्यते निन्द्यभोजनात्"—इति।

---

* अमाश्राद्धे,—इति शा०। एवं परत्र पङ्क्तौ।

† प्रवृत्ते,—इति मु०।

सीमन्तोन्नयनादिषु तु धौम्यो विशेषमाह,—

"ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्"—इति ।

तत्र ब्रह्मौदनाख्यं कर्माधानाङ्गभूतं, सोमसाहचर्य्यात् । यत्तु भरद्वाजेनोक्तम्*,—

"भुक्तश्चेत् पार्व्वणश्राद्धे प्राणायामान् षड़ाचरेत् ।
उपवासस्त्रिमासादि वत्सरान्तं प्रकीर्त्तितम् ॥
प्राणायामत्रयं वृद्धावहोरात्रं† सपिण्डने ।
असङ्कल्पे‡ स्मृतं नक्तं व्रतपारणके§ तथा ।
द्विगुणं क्षत्रियस्यैव त्रिगुणं वैश्यभोजने ।
साक्षाच्चतुर्गुणं चैव स्मृतं शूद्रस्य भोजनम्"—इति ॥

तदप्यापद्विषयम् । अनापद्यधिकप्रायश्चित्तस्योक्तत्वात् ।

घृतं तैलं तथा क्षीरमित्यत्र शूद्रसम्बन्धिनां घृतादीनां भोजनमभ्यनुज्ञातम् । इदानीं शूद्रतण्डुलादीनामभ्यनुजानाति,—

**शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आगतम् ।**
**पक्वं विप्रगृहे भुक्तं भोज्यं तन्मनुरब्रवीत् ॥१९॥ इति ।**

शुष्कान्नं व्रीहितण्डुलादि । गोरसः क्षीरादिः । स्नेहस्तैलादिः ।

---

* यदपि स्मृत्यन्तरम्,—इति मु० ।

† कुर्य्यादहोरात्रं,—इति मु० ।

‡ असमाप्ते,—इति मु० ।

§ व्रते वा पार्व्वणे,—इति मु० ।

तत् सर्व्वं शूद्रगृहादानीय ब्राह्मणगृहे यदि पक्वं भवति, तदा तदन्नं भोज्यम्। यस्त्वामपक्वयोः साधारणो निषेधः पूर्व्वमुदाहृतः, सोऽयमसच्छूद्रविषयः। अतएव, मद्यमांसरताः,—इत्युक्तम्।

पूर्व्वमज्ञानादापदोऽपि वेत्यत्रापन्नस्य विप्रस्य शूद्रान्नभोजने ब्रह्मकूर्च्चव्रतमभिहितम्। तदविद्वद्विषयम्। इदानीं विद्वांसं प्रत्याह,—

**आपत्कालेषु विप्रेण भुक्तं शूद्रगृहे यदि।**
**मनस्तापेन शुद्ध्येत द्रुपदां वा जपेच्छतम् ॥२०॥ इति।**

द्विविधा हि विद्या; वेदपाठमात्रावसायिनी, तदर्थज्ञानानुष्ठानपर्य्यन्ता च। तयोर्मध्येऽनुष्ठाता आहिताग्निर्मनस्तापेन शुद्ध्यति। केवलवेदपाठकस्तु द्रुपदादिव मुमुचान इत्येतामृचं गायत्रीच्छन्दसं शतकृत्वो जपेत्। मनस्तापस्य शुद्धिहेतुत्वं याज्ञवल्क्योऽप्याह,—

"पश्चात्तापोनिराहारः सर्व्वेऽमी शुद्धिहेतवः"—इति।

मनुरपि,—

"ख्यापनेनानुतापेन तपसाऽध्ययनेन च।
पापकृन्मुच्यते पापात् तथा दानेन चापदि"—इति।

बौधायनोऽपि,—

"परित्यागस्तपोदानमनुतापोऽनुकीर्त्तिनम्।
विद्याभ्यासो ह्युपस्पर्शः सप्ताङ्गं* पापनाशनम्"—इति।

द्रुपदायाः पापविनाशकत्वं याज्ञवल्क्येनोक्तम्,—

---

* सर्व्वं तत्,—इति मु०।

"द्रुपदा नाम गायत्री यजुर्व्वेदप्रतिष्ठिता ।
सर्व्वपापहरा जप्तुर्महतोऽप्येनसः स्मृतम्"—इति ।

द्विजशुश्रूषणे रतानित्यत्र भोज्यान्नाः शूद्राः सामान्येन निर्दिष्टाः । तानेतानिदानीं विशेषतो निर्दिशति,—

दासनापितगोपालकुलमित्रार्द्धसीरिणः ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥२१॥ इति ।

दासादय आत्मनिवेदकान्ताः षट् शूद्रा भोज्यान्नाः ।
दासादीनां लक्षणमाह,—

शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कारात्तु भवेद्दासः असंस्कारात्तु नापितः* ॥२२॥
क्षत्रियात् शूद्रकन्यायां सुतो जायेत नामतः† ।
स गोपाल इति ज्ञेयो भोज्यो विप्रैर्न संशयः ॥२३॥
वैश्यकन्यासमुद्भूतो ब्राह्मणेन तु संस्कृतः ।
स ह्यार्धिक इति ज्ञेयो भोज्योविप्रैर्न संशयः॥२४॥ इति।

ब्राह्मणः शूद्रकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति, स यद्य-न्यकैर्निषेकादिभिः संस्कारैः संस्कृतो भवति, तदा दास इत्युच्यते;

* असंस्काराद्भवेद्दासः संस्कारादेव नापितः,—इति ग्रा० ।
† समुत्पन्नस्तु यः सुतः,—इति मु० ।

संस्काराभावे तु नापित इत्यभिधीयते। क्षत्रियः शूद्रकन्यामूढ़ा तस्यां यं पुत्रमुत्पादयति, स नामतो गोपालेत्यत्र विवक्षितो न त्वर्थतः। गोरक्षणरूपस्यार्थस्य कृष्यादिवद्वैश्यकर्मत्वात्।

यद्यपि क्रमप्राप्तस्य कुलमित्रस्यात्र लक्षणं नोक्तं, तथापि शब्द-सामर्थ्यात् प्रक्रमबलाद्वा तल्लक्षणमुन्नेयम्। शब्दसामर्थ्यतः तावत्, कुलस्य मित्रं कुलमित्रमिति व्युत्पत्त्या पितृपितामहादिक्रमादायात-प्राप्तः शूद्रः कुलमित्र इत्यभिधीयते। प्रक्रमानुसारेण त्वेवमुप-संख्यातव्यम्। वैश्यः शूद्रकन्यामूढ़ा तस्यां यं पुत्रमुत्पादयति, स कुलमित्र इति।

ब्राह्मणः वैश्यकन्यामूढ़ा तस्यां यं पुत्रमुत्पादयति, संस्कृतः स नाम्ना आर्द्धिक इति वा अर्द्धसीरीति वाऽभिधीयते। यस्तु वाङ्मनःकाय-कर्मभिस्त्वावाहमित्यात्मानं निवेदयति, स आत्मनिवेदकः। यद्वा, आर्द्धिकसाहचर्य्यात् क्षत्रियायां ब्राह्मणेनोत्पादितः संस्कृत आत्म-निवेदकः। अस्मिन् पक्षे यद्यप्यशूद्रावार्द्धिकात्मनिवेदकौ, तथापि नीचजातित्वसामान्येनाभोज्यान्नत्वशङ्कायां तदपनोदनायेदमभिधी-यते,—इत्यदोषः। दासादीनां भोज्यान्नत्वं याज्ञवल्क्योऽप्याह,—

"शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्"--इति।

चतुर्विंशतिमतेऽपि,—

"आर्द्धिकः कुलमित्रञ्च गोपालो दासनापितौ।
एते शूद्रेषु भोज्यान्नाः यश्चात्मानं निवेदयेत्"-इति॥

दासादिवत् कुम्भकारोऽपि भोज्यान्नएव। तदाह देवलः,—

"खदासो*नापितो गोपः कुम्भकारः कृषीवलः ।
ब्राह्मणैरपि भोक्तव्याः पञ्चैते शूद्रयोनयः†"—इति ॥

स्मृत्यन्तरेऽपि । "गोपालनापितकुम्भकारकुलमित्रार्द्धसीरिनिवेदितात्मनोभोज्यान्नाः"—इति ।

पूर्व्वत्राभोज्यान्नानां नटादीनामन्ने भुक्ते प्रायश्चित्तमभिहितम् । इदानीं तेषामेव जलादौ पीते प्रायश्चित्तं प्रश्नपूर्व्वकमाह,—

**भाण्डस्थितमभोज्येषु जलं दधि घृतं पयः ।**
**अकामतस्तु यो भुङ्क्ते प्रायश्चित्तं कथं भवेत् ॥२५॥**
**ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा उपसर्पति ।**
**ब्रह्मकूर्चोपवासेन याज्यवर्णस्य‡ निष्कृतिः ॥२६॥**
**शूद्रस्य नोपवासः स्यात् शूद्रो दानेन शुद्ध्यति ।**
**ब्रह्मकूर्चमहोरात्रं श्वपाकमपि शोधयेत् ॥२७॥ इति ।**

अभोज्येष्वभोज्यान्नानां नटादीनां गृहेषु यद्भाण्डं तत्र स्थितं जलादिकं पात्रान्तरव्यवधानमकृत्वा भुक्तं चेत्, तदा ब्रह्मकूर्चं पातव्यम् । यथा सूतकान्ने ब्राह्मणादिवर्णभेदेन व्रतभेदा अभिहिताः, न तथा जलादिपाने; किन्तु चतुर्णामपि वर्णानां ब्रह्मकूर्चं समानमित्यभिप्रेत्य

---

* सदासो,—इति मु० ।

† शुद्धयोनयः,—इति पु० ।

‡ योज्या वर्णस्य,—इत्यशुद्धः पाठ आदर्शपुस्तकेषु ।

ब्राह्मणाद्युपन्यासः। उपसर्पति प्रायश्चित्तमनुज्ञापयितुं परिषदमुपसादयतीत्यर्थः*। अहोरात्रमुपोष्य दिनान्तरे ब्रह्मकूर्चं पातव्यम्। ब्रह्मकूर्चहेतुरुपवासो ब्रह्मकूर्चोपवासः, तेन यजनयोग्यस्य त्रैवर्णिकस्य निष्कृतिर्भवति। शूद्रस्य तूपवासप्रत्याम्नायोदानम्। अतः शूद्रोदानं कृत्वा पश्चाद्ब्रह्मकूर्च्चं पिबेत्। तदिदमहोरात्रोपवासपूर्व्वकब्रह्मकूर्चं श्वपाकसदृशमत्यन्तपापकारिणमपि शोधयति, तत्र किमु वक्तव्यं अल्पपापेन निषिद्धजलादिपानेनोपेतं शोधयतीति।

ब्रह्मकूर्चस्य द्रव्याण्याह,--

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।**
**निर्द्दिष्टं पञ्चगव्यन्तु पवित्रं पापशोधनम् ॥२८॥ इति।**

गोमूत्रादिकं पञ्चगव्यं, यच्च कुशोदकं, तदुभयं स्वतः पवित्रं; अतः पापशोधनमिति धर्मशास्त्रेषु निर्द्दिष्टम्।

ब्रह्मकूर्चाङ्गभूतानां गोमूत्रादीनां पञ्चानां कारणभूताः याः पञ्च गावः, तासां वर्णविशेषानाह,—

**गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव गोमयम्।**
**पयश्च ताम्रवर्णाया रक्ताया गृह्यते दधि ॥२९॥**
**कपिलाया घृतं ग्राह्यं सर्व्वं कापिलमेव वा। इति।**

विचित्रवर्णानां पञ्चानां गवामसम्भवे गोमूत्रादिपञ्चकं सर्व्वमपि कापिलमेव ग्राह्यम्।

---

* परिषदमुपसेवेदित्यर्थः,—इति मु०।

गोमूत्रादीनां कुशोदकान्तानां षणां द्रव्याणां प्रत्येकं परिमाण-विशेषमाह,—

**मूत्रमेकपलं दद्यादङ्गुष्ठार्द्धं तु गोमयम् ॥३०॥**
**क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते ।**
**घृतमेकं पलं दद्यात् पलमेकं कुशोदकम् ॥३१॥** इति ।

पर्व्वद्वयोपेतमङ्गुष्ठं, तत्रोपरितनेन पर्व्वणा समानपरिमाणं गोमयं ग्राह्यम् । दध्यादीन्येकस्मिन् पलाशादिपात्रे* यथोक्तपरिमाणषड्-द्रव्याणि निक्षिपेत् । तत्र पात्रं प्रजापतिराह,—

"पालाशं पद्मपत्रं वा ताम्रं वाऽथ हिरण्मयम् ।
गृहीत्वाऽऽसादयित्वा च ततः कर्म समाचरेत्†"--इति ।

वृद्धपराशरस्तु गोमूत्रादीनां परिमाणान्तरमाह,—

"गोमूत्रे‡ माषकान्यष्टौ गोमयस्य तु षोड़श ॥
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः ।
गोमूत्रवद् घृतस्याष्टौ तदर्द्धं तु कुशोदकम्"--इति ॥

एतदशक्तबालादिविषयं द्रष्टव्यम् । प्रजापतिस्तु प्रकारान्तरमाह,—

"गोमयाद्द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम् ।
क्षीरमष्टगुणं देयं दधि पञ्चगुणं तथा"--इति ।

---

* पलाशादिपत्रे,—इति शा० ।

† समारभेत्,—इति मु० ।

‡ गोमूत्रं,—इति मु० ।

अत्र गोमयस्य परिमाणविशेषानभिधानात् वचनान्तरानुसारेणाङ्गुष्ठार्द्धपरिमितं गोमयं स्वीकृत्य यथोक्तोत्तराभिद्रव्या गोमूत्रादीनि योजयेत्। एतत् च मूलवचनोक्तपरिमाणेन सह विकल्प्यते, वैषम्यस्याल्पत्वात् ।

गोमूत्रादीनां षण्णां प्रत्येकं मन्त्रानाह,—

गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णस्तथा दधि ॥३२॥
तेजोऽसि शुक्रमित्याज्यं* देवस्य त्वा कुशोदकम् ।
पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ ॥३४॥ इति ।

ऋचेति पदं गायत्र्यादिभिः प्रत्येकमभिसम्बध्यते । तेजोसि† देवस्य त्वेत्यनयोर्मन्त्रत्वसाम्यादृक्त्वमुपचरितम्[१]। तैरेतैर्मन्त्रैर्गृहीतं पञ्चगव्यं होमार्थमग्निसन्निधौ स्थापयेत् ।

---

* तथा शुक्रमसीत्याज्यं,—इति मु० ।
† शुक्रमसि,—इति मु० ।

---

(१) पादबद्धामन्त्रा ऋचः। तथाच जैमिनिसूत्रम् । "तेषामृग्यत्रार्थवशेन पादव्यवस्थितिः (मी० २अ० १पा० ३५सू०)"—इति । एवञ्च गायत्र्यादीनां पादबद्धत्वात् (छन्दोबद्धत्वात्) ऋक्त्वम्। तेजोसीत्यादि मन्त्रद्वयन्तु न ऋक्, पादबद्धत्वाभावात् । किन्तु यजुः, गद्यरूपत्वात् । तथाच जैमिनिसूत्रम् । "शेषे यजुःशब्दः (मी० २अ० १पा० ३७ सूत्रम्)"—इति । "या न गीतिर्न च पादबद्धं, तत् प्रश्लिष्टपठितं यजुः"—इति शावरभाष्यम् । तथाचाच च्छत्रिन्यायेन यजुष्यपि ऋक्शब्दप्रयोग इति भावः ।

स्थापयित्वा चालोड़नाभिमन्त्रणे कर्त्तव्ये इत्याह,--

**आपोहिष्ठेति चालोद्य मानस्तोकेति मन्त्रयेत्*।**

आपोहिष्ठा,--इत्यादिकं त्र्यृचं विज्ञेयं, प्रायशस्तथा विनियोगात्[१]। मानस्तोके,--इत्येकैव ऋक्[२]।

अत्रावदानहोमसाधनानां स्रुवादीनामभावात् केनावदाय होतव्यमित्याकाङ्क्षायामाह,--

**सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः॥३५॥**
**एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि। इति।**

सप्तसंख्या अवरा अधमा येषां दर्भाणां, ते सप्तावराः। सप्ताष्टाद्यधिकसंख्या ग्रहीतव्या, न तु षट्पञ्चादिन्यूनसंख्येत्यर्थः। शुकवत् त्विट् दीप्तिर्येषां, ते शुकत्विषः; हरितवर्णा इति यावत्। आर्द्राणां

---

* मानस्तोकेभिमन्त्रयेत्,--इति मु०।

---

(१) विशेषविधिं विना त्र्यृचसूक्तानामादिप्रतीकमात्रोपादानेऽपि ऋक्त्रयस्यैव ग्रहणमिति नियमः। तथाच लाट्यायनसूत्रम्। "तृचसूक्तानामादिग्रहणेन विधिरनादेशे (६प्र० ३क० १सूत्रम्"--इति। आपोहिष्ठेत्यादि तृचसूक्तञ्च सामवेदसंहितोत्तरार्चिकविंशतितमाध्यायसप्तमखण्डीयद्वितीयम्।

(२) "मन्त्रविधिस्त्वादिग्रहणेन (१प्र० १क०२ सूत्रम्)"--इति लाट्यायनसूत्रेणादिमात्रोपादानेऽपि समस्तस्यैव मन्त्रस्य ग्रहणीयत्वादिति भावः।

छायाशुष्काणां वा भवति हरितलम्। तैर्दर्भैरवदाय पलाशपत्रेण होतव्यम्। तथा च प्रजापतिः,--

"स्थापयित्वाऽथ दर्भेषु पालाशैः पत्रकैरथ।

तत्समुद्धृत्य होतव्यं देवताभ्यो यथाक्रमम्"—इति।

दर्भेष्वित्यभिधानात् पत्रस्याधस्तादपि* दर्भानास्तृणुयात्।

अथ होममन्त्रानाह,--

**इरावती इदं विष्णुर्मानस्तोके तु† शंवती ॥३५॥**
**एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः॥ इति।**

इरेत्यादीनि त्रीणि ऋक्प्रतीकानि। शमित्येष शब्दो यस्यामृचि अस्ति, सा शंवती। शमग्निरग्निभिस्करदिति वा, शं नो देवीरभिष्टये इति वा, सा द्रष्टव्या। एतच्चाग्नये स्वाहेत्यादीनामपि मन्त्राणामुपलक्षणम्। अतएव प्रजापतिः,--

"अग्नये चैव सोमाय सावित्र्यै च‡ तथैवच।

प्रणवेन तथा हुत्वा स्विष्टकृच्च तथैवच।

एवं हुत्वा च तच्छेषं पिबेच्चैव समाहितः"—इति॥

पानस्येतिकर्त्तव्यतामाह,—

**आलोड्य प्रणवेनैव निर्मन्थ्य प्रणवेन तु ॥३६॥**
**उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु॥ इति।**

---

* पात्रस्याधस्तादपि,—इति मु०।

† इरावतीदं विष्णुश्च मानस्तोके च,—इति शा०।

‡ सावित्र्या च,—इति शा०।

आलोडनं हस्तेन, निर्मन्थनं काष्ठेनेति तयोर्भेदः ।

ननु गोवधादिषु यः प्रत्यवायः, स केवलादृष्टरूपत्वात्* तस्य प्रायश्चित्तजन्येन सुकृता पूर्व्वेण निवृत्तिर्युज्यते । अभक्ष्यभक्षणजन्यस्तु प्रत्यवायो न केवलमदृष्टरूपः, किन्तु दृष्टरूपोऽपि । तस्याहारस्य त्वगस्थ्यादिरूपेण परिणतत्वात् । अतो न तस्य व्रतेन निवृत्तिर्युज्यते, इत्यत आह,--

यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम् ॥३७॥
ब्रह्मकूर्चो दहेत् सर्वं प्रदीप्ताग्निरिवेन्धनम् ॥ इति ।

अभक्ष्याणि यथा त्वगस्थ्यादिरूपेण परिणतानि, तथा गोमूत्रादीन्यपि तेन रूपेण परिणमन्ति । परिणम्य चाग्निः काष्ठानीव स्वविरोध्यभक्ष्यपरिणामान् दृष्टमुखेनापि विनाशयन्ति, न तु केवलमदृष्टेनैव मुखेन । तस्माद्ब्रह्मकूर्चेनाभक्ष्यभक्षणनिवृत्तिरुपपद्यते । ब्रह्मकूर्चस्य कालविशेषं प्रजापतिराह,--

"चतुर्द्दश्यामुपोष्याथ पौर्णमास्यां समाचरेत्"--इति ।

जाबालिरपि,--

"अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः ।
पञ्चगव्यं पिबेत् प्रातः ब्रह्मकूर्चं ततः† स्मृतम्"--इति ॥

देशविशेषं शातातप आह,--

---

* इत्थमेव पाठः सर्व्वेषु पुस्तकेषु ।

† ब्रह्मकूर्चमिति, इति मु० ।

"नदीतीरेषु गोष्ठेषु पुण्येष्वायतनेषु च।
तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेत्"—इति।

ब्रह्मकूर्चस्य सर्व्वपापदाहकत्वमुपपादयति,—

पवित्रं त्रिषु लोकेषु देवताभिरधिष्ठितम् ॥३८॥
वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः।
दध्नि वायुः समुद्दिष्टः सोमः क्षीरे घृते रविः ॥३९॥

वरुणादिभिरधिष्ठितत्वात् पापदाहकत्वमुपपन्नम्।

अभोज्यान्नानां भाण्डेऽवस्थितं जलादिकं पीत्वा व्रतं चरेदित्युक्तम्। अथ जलस्य स्वमुखनिःसृतस्य* पुनः पाने प्रायश्चित्तमाह,—

पिवतः पतितं तोयं भोजने† मुखनिःसृतम्।
अपेयं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥४०॥

जलं पिवतः पुरुषस्य मुखनिःसृतं भोजनादिना पतितं यत्तोयं तत् त्रैवर्णिकैः पुनर्न पेयम्। कथञ्चित् पीते सति चान्द्रायणेन शुद्धिः। यत्तु मुखं प्रविश्य न निःसृतं, किन्त्वेकस्मिन् पात्रे अर्द्धं पीत्वाऽवशेषितं; तस्य पाने त्रिरात्रोपवासमाह शङ्खः,—

"पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित्।
त्रिरात्रन्तु व्रतं कुर्य्याद् वामहस्तेन वा पुनः"—इति।

---

* 'निःसृत' स्थाने, निःस्रुत,—इत्येवं पठ्यते सर्व्वत्र मु० पुस्तके।

† भाजने,—इति पुरा०।

श्वशृगालादिमरणोपहतकूपादिजलपाने वर्णविशेषेण प्रायश्चित्तविशेषमाह,—

**कूपे च पतितं दृष्ट्वा श्वशृगालौ च मर्कटम् ।**
**अस्थिचर्मादि पतितं पीत्वाऽमेध्या अपो द्विजः ॥४१॥**
**नारन्तु कुणपं काकं विड्वराहखरोष्ट्रकम् ।**
**गावयं सौप्रतीकञ्च मायूरं खड्गकं तथा ॥४२॥**
**वैयाघ्रमार्क्षं सैंहं वा कूपे यदि निमज्जति ।**
**तटाकस्याथ दुष्टस्य पीतं स्यादुदकं यदि ॥४३॥**
**प्रायश्चित्तं भवेत् पुंसः क्रमेणैतेन सर्वशः ।**
**विप्रः शुद्ध्येत् त्रिरात्रेण क्षत्रियस्तु दिनद्वयात् ॥४४॥**
**एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुद्ध्यति । इति ।**

कूपे पतित्वा मृतं श्वादिकं व्याघ्रादिकं वा दृष्ट्वा तादृशीरमेध्या अपः पीत्वा प्रायश्चित्ती भवेदिति शेषः । नरस्य मनुष्यस्य संबन्धि कुणपं नारम् । काकस्य सम्बन्धि काकम् । विड्वराहादिषु सम्बन्धिवाची तद्धितो लुप्तो द्रष्टव्यः । तथाच सति वैड्वराहं खारं औष्ट्रमित्युक्तं भवति । गवयस्य सम्बन्धि गावयम् । शोभनाः पुष्टाः प्रतीका अवयवा यस्य गजस्य स सुप्रतीकः, तस्य सम्बन्धि सौप्रतीकम् । मयूरस्य सम्बन्धि मायूरम् । खड्गो मृगविशेषः, तस्य सम्बन्धि खड्गकम् । व्याघ्रस्य सम्बन्धि वैयाघ्रम् । ऋक्षस्य सम्बन्धि आर्क्षम् । सिंहस्य सम्बन्धि सैंहम् । एतेषामन्यतमं पतितं कुणपं दृष्ट्वा तद्युक्तयोः कूपतटाकयोः स्नानपाने यः

कुर्य्यात्; तदा तादृशस्य पुंसः सर्व्ववर्णसम्बन्धिनः, एतेन—समनन्तरं निर्दिश्यमानेन क्रमेण, प्रायश्चित्तं भवेत्। स च क्रमः त्रिरात्रोपवासादिः। अहादिव्रतचरणानन्तरं पञ्चगव्यं पिबेत्। तदाह विष्णुः। "मृतपञ्चनखात्कूपादत्यन्तोपहतमुदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेद् द्व्यहं राजन्य एकाहं वैश्यः शूद्रोनक्तं सर्व्वे चान्ते पञ्चगव्यं पिबेयुः"—इति। यदा तु तत्रैव शवमुच्छूनतयोद्भिन्नं भवति, तदा हारीतोविशेषमाह,—

"क्लिन्ने भिन्ने शवे तोयं तत्रस्थं यदि तत्पिबेत्।
शुद्धौ चान्द्रायणं कुर्य्यात् तप्तकृच्छ्रमथापि वा।
यदि कश्चित् तत्र* स्नायात् प्रमादेन द्विजोत्तमः।
जपंस्त्रिषवणस्नायी अहोरात्रेण शुद्ध्यति"—इति।

इदं चान्द्रायणं कामतो मानुषशवोपहतकूपजलपानविषयम्। अकामतस्तु षड्रात्रं,—

"क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते।
पयः पिबेत् त्रिरात्रेण मानुषे द्विगुणं स्मृतम्—

इति देवलस्मरणात्। मद्यभाण्डस्थितोदकपाने यम आह,—

"सुराभाण्डस्थिता आपो यदि कश्चित् पिबेत् द्विजः।
कुशमूलविपक्केन त्र्यहं क्षीरेण शुद्ध्यति॥
द्वादशाहं च पयसा पिबेद्ब्राह्मीं सुवर्च्चलाम्।
गायत्र्यास्तु सहस्रं† वा जपं कुर्व्वीत मानसम्"—इति।

एतन्मतिपूर्व्वकाभ्यासविषयम्। अकामतोऽभ्यासे तु मनुराह,—

---

* ततः,—इति मु०।
† गायत्र्यष्टसहस्रं,—इति मु०।

"अपः सुराभाजनस्था मद्यभाण्डस्थिताः तथा ।
पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीशृतं पयः"—इति ।

यत्तु विष्णूक्तम् । "अपः सुराभाजनस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीशृतं पयः पिबेत्"—इति । तत् कामतः सकृत्पाने द्रष्टव्यम् । यत्तु शातातपेनोक्तम् । "सुराभाण्डोदकपाने छर्दनं घृतप्राशनमहोरात्रोपवासश्च"—इति । तत् शुष्कसुराभाण्डस्थोदकपानविषयम् । तत्रैव पर्य्युषितोदकपाने तेनैवोक्तम्,—

"सुरापानस्य यो भाण्डे आपः पर्य्युषिताः पिबेत् ।
शङ्खपुष्पादिपक्वन्तु क्षीरं स तु पिबेत् त्र्यहम्"-इति ॥

सुरापस्य मुखगन्धाघ्राणे तु मनुराह,--

"ब्राह्मणस्तु सुरापस्य मुखमाघ्राय सोमपाः ।
प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुद्ध्यति"--इति ।

स्त्र्याद्युच्छिष्टपाने हारीत आह,--

"स्त्रियोच्छिष्टस्थिता आपो यदि कश्चित् पिबेद्द्विजः ।
शङ्खपुष्पीविपक्वेन त्र्यहं क्षीरेण शुद्ध्यति ॥
शूद्रोच्छिष्टस्थिता आपो यदि कश्चित् पिबेद्द्विजः ।
कुशमूलविपक्वेन त्र्यहं क्षीरेण पावयेत्"—इति ॥

यमः,—

"शुनोच्छिष्टस्थिता आपो यदि कश्चित् पिबेद्द्विजः ।
शङ्खपुष्पीविपक्वेन त्र्यहं क्षीरेण शुध्यति"—इति ।

ब्राह्मणेष्वेव केषाञ्चिदभोज्यान्नलमभिप्रेत्य तदन्नभोजने प्रायश्चित्तमाह,—

**परपाकनिवृत्तस्य परपाकरतस्य च ॥४५॥**
**अपचस्य च भुक्त्वाऽन्नं द्विजश्चान्द्रायणं चरेत्। इति।**

परपाकनिवृत्तादीनां त्रयाणां स्वरूपं स्वयमेव वक्ष्यति। तदीयान्नभोजनं यद्यप्यल्पनिमित्तं*, तथाप्यभ्यासाभिप्रायेण महद्व्रतमविरुद्धम्। अनभ्यासेन ईदृशान्नभोजने भरद्वाज आह,—

"परपाकनिवृत्तस्य परपाकरतस्य च।
निराचारस्य विप्रस्य निषिद्धाचरणस्य च।
अन्नं भुक्त्वा द्विजः कुर्य्याद्दिनमेकमभोजनम्"—इति ॥

अपचस्यान्नप्रदाने तदन्नभोक्तुरेव प्रत्यवायोऽभिहितः। यदा त्वपचो-भुङ्क्ते इतरः प्रयच्छति, तदानीमुभयोः प्रत्यवाय इत्याह,—

**अपचस्य च यद्दानं दातुश्चास्य कुतः फलम् ॥४६॥**
**दाता प्रतिग्रहीता च तौ द्वौ निरयगामिनौ। इति।**

अपचस्य, अपचायेत्यर्थः। तस्मै यद्दानमन्येन क्रियते, तस्मिन् दाने तस्य दातुर्दानफलं नास्ति। न केवलं फलाभावः, किन्त्वसौ दाता सह ग्रहीत्रा नरकं याति।

परपाकनिवृत्तादीनां त्रयाणां क्रमेण लक्षणमाह,—

**गृहीत्वाऽग्निं समारोप्य पञ्चयज्ञान्न निर्व्वपेत् ॥४७॥**

---

* यद्यपि महद्व्रतस्यानिमित्तं,—इति मु०।

† नास्तीदमर्द्धं मुद्रितातिरिक्तपुस्तकेषु।

परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ।
पञ्चयज्ञान् स्वयं कृत्वा परान्नेनोपजीवति ॥ ४८ ॥
सततं प्रातरुत्थाय* परपाकरतस्तु सः ।
गृहस्थधर्म्मो यो विप्रो ददातिपरिवर्ज्जितः ॥ ४९ ॥
ऋषिभिर्धर्म्मतत्त्वज्ञैरपचः परिकीर्त्तितः । इति ॥

परस्य पुरुषान्तरस्य गृहे क्रियमाणः पाकः परपाकः । तस्मान्निवृत्तः, परपाकनिवृत्तः । परान्नभोजनपरित्यागीति यावत् । यद्वा, वैश्वदेवाद्यर्थं क्रियमाणः पाक उत्कृष्टत्वात् परपाक इत्युच्यते । तस्मात् परपाकान्निवृत्तः, पञ्चमहायज्ञरहित इत्यर्थः । तच्चोभयं, विवक्षितत्वात्तन्त्रेणोच्चरितम् । तथाच सति परान्नवर्जनस्य गुणत्वेऽपि पञ्चमहायज्ञादिराहित्यस्य दोषत्वादस्य पुरुषस्य निन्द्यत्वम् ।

अक्षरार्थस्तु, अग्निं गृहीत्वा विवाहं कृत्वा स्मार्त्ताग्नौ केवलमौपासनं कृत्वा तमात्मनि† समारोपयति, न तु तस्मिन्नग्नौ वैश्वदेवादिकं करोति । सोऽयं वैश्वदेवाद्यनुष्ठानरहितः पुरुषोऽत्र परपाकशब्देन विवक्षितः । एतस्माद्विपरीतः परपाकरतः, उभयविधपरपाकरतत्वात् । तत्र पञ्चमहायज्ञानुष्ठानस्य गुणत्वेऽपि परान्नभोजनस्य दोषत्वात्तादृशस्य पुरुषस्य निन्द्यत्वम् । प्रतिदिनं प्रातरुत्थाय यथाविधि पञ्चमहायज्ञान् कृत्वा परान्नेनोपजीवतीति योजनीयम् ।

---

* परपाकाशी,—इति ग्रा० ।

† 'विवाहं कृत्वा आत्मनि,—इति ग्रा० स० ।

यस्तु विप्रोविधानेन गार्हस्थ्यं स्वीकृत्य अन्नदानादिवर्जितः केवलं स्वयमेव भुङ्क्ते, सोऽपच इत्युच्यते। तस्य निन्दा प्रत्यक्षश्रुतावाम्नायते,—

"नार्यमणं पुष्यति नो सखायं
केवलाघो भवति केवलादी"—इति।

ददातिपरिवर्जितः,—इत्यत्र ददातीत्यर्थनिर्द्देशत्वाद्दानक्रियामाचष्टे। "ईक्षतेर्नाशब्दम् (वे० १अ० १पा० ५सू०)"—इत्यस्मिन् व्याससूत्रे, "यजतेः पूर्व्ववत्त्वम् (मी० ७अ० ४पा० १सू०"—इत्यस्मिन् जैमिनिसूत्रे चार्थनिर्द्देशेऽपि श्तिप्प्रत्ययप्रयोगदर्शनात्। "इक्श्तिपौधातुनिर्द्देशे"—इत्येतत्तु वाररुचं वार्त्तिकं प्रचुरप्रयोगाभिप्रायं, न त्वर्थनिर्द्देशव्यवच्छेदकम्।

परपाकनिवृत्तादिवद्वृथापाकादेरप्यन्नं न भोक्तव्यम्। तद्भोजने तु प्रायश्चित्तं कर्त्तव्यम्। तदाहतुः शातातपवृहस्पती,—

"योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥
वृथापाकस्य भुक्त्वाऽन्नं प्रायश्चित्तं चरेद् द्विजः।
प्राणायामांस्त्रिरभ्यस्य घृतं प्राश्य विशुध्यति"—इति।

प्राणायामशतङ्कृत्वेति पाठे त्वावृत्तिविषयत्वं कल्पनीयम्। वृथापाके यत्प्रायश्चित्तं, तदेव ब्राह्मणनिन्दकादावपि द्रष्टव्यम्। निन्दावचने सहपाठात्। तथाच व्यासः,—

"पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः।
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः"—इति।

वेदविक्रयिणः स्वरूपमाह शातातपः,—

"प्रख्यापनं प्रत्ययनं प्रश्नपूर्व्वः प्रतिग्रहः ।

याजनाध्यापने वादः षड्विधो वेदविक्रयः"—इति ।

ननूक्तरीत्या कलियुगे सर्व्वेऽप्यभोज्यान्ना अभक्ष्यभक्षणाश्च; तथा सत्येतद्विषयं प्रायश्चित्तशास्त्रं निरर्थकं, कृतेऽपि प्रायश्चित्ते पुनरपि तत्प्रवृत्तेः परिहर्तुमशक्यत्वात्। प्रायश्चित्तविधायिकायाः परिषदोऽसंभवाच्च। न हि पापप्रवृत्तानां परिषत्त्वं युक्तं, स्वकर्मरतविप्राणामिति तल्लक्षणात्। न चाभक्ष्यभक्षणादिभ्यः पापेभ्यो निवृत्तानां शिष्टानां परिषत्त्वं स्यादिति शङ्कनीयम्। तादृशस्य पुरुषस्य कस्याप्यदृष्टचरत्वात्। अतः कलियुगे सर्वेषां निन्द्यत्वादेतदेव युगमुद्दिश्य प्रवृत्तस्य पराशरधर्मशास्त्रस्य निर्विषयत्वादित्याशङ्क्याह*,—

**युगे युगे तु ये धर्म्मास्तेषु तेषु च ये द्विजाः ॥५०॥**
**तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः। इति॥**

अस्याक्षरार्थः प्रथमाध्याये वर्णितः। अयमाशयः। द्विविधा ह्यधर्मप्रवृत्तिः; युगप्रयुक्ता, प्रमादालस्यादिप्रयुक्ता च। तत्र युगप्रयुक्तायाः प्रवृत्तेरपरिहार्य्यत्वान्न तन्निवृत्तये पराशरस्योद्यमः। या तु प्रमादालस्यादिप्रयुक्ता प्रवृत्तिः, तत्र सावकाशं धर्मशास्त्रम्। तद्यथा। अध्ययनविधिस्तावदर्थज्ञानपर्य्यन्तं† साङ्गवेदपाठमाचष्टे(१)। न च

* इत्थमेव पाठः सर्व्वेषु पुस्तकेषु। मम तु, निर्व्विषयत्वमित्याशङ्क्याह,—इति पाठः प्रतिभाति ।

† दर्थज्ञानानुष्ठानपर्य्यन्तं,—इति शा० ।

(१) "स्वाध्यायोऽध्येतव्यः"—इति तावदध्ययनविधिरस्ति। तच्चाध्ययनं किमक्षरग्रहणमात्ररूपं, किं वाऽर्थावगतिपर्य्यन्तपर्य्यवसितमिति

कलौ युगे तादृशं विप्रं कञ्चिदप्युपलभामहे। तथा, ब्रह्मचारिप्रकरणे तदाश्रमधर्मा अध्ययनधर्माश्च सहस्रशः स्मर्य्यन्ते। न च तान् सर्व्वान् यथावदनुतिष्ठन्माणवकः कोऽप्युपलभ्यते। यदाऽध्ययनस्यैव ईदृशी गतिः, तदा कैव कथा साङ्गकृत्स्नवेदार्थानुष्ठानस्य। तथा सति शास्त्रीयमुख्यब्राह्मण्योपेतस्य कस्याप्यभावात्, चत्रियवैश्यजात्योश्च स्वरूपेणैवोच्छिन्नत्वात्, शुश्रूषयितव्यानां द्विजानामसम्भवे तत् शुश्रूषकस्य मुख्यस्य शूद्रस्यात्यन्तमनाशङ्कनीयत्वात्[१], किं चातुर्वर्ण्यमुद्दिश्य प्रवृत्तं धर्मशास्त्रं स्वरूपेणैव लुप्यतां, किं वा मुख्यासम्भवेऽपि यथासम्भवं चातुर्व्वर्ण्यमाश्रित्य धर्मशास्त्रं प्रवर्त्ततामिति मीमांसायां, स्वरूपलोपादरं यथासम्भवानुष्ठानमित्यभिप्रेत्य युगप्रवृत्तां सर्वैरप्यवर्जनीयामधर्मप्रवृत्तिमदोषत्वेनाभ्युपगम्य, तेषां निन्दा न कर्त्तव्या,--इत्युक्तम्। ततः सम्भाविताध्ययनाद्युपेतानां शक्यायां धर्मप्रवृत्तौ प्रमादालस्यादिरहितानाञ्च परिषत्त्वं कुतो न स्यात्। कृतप्रायश्चित्तस्य पुनः प्रमादालस्यादिवर्जनस्य सुकरत्वात् प्रायश्चित्तशास्त्रञ्च सार्थकमिति।

---

सन्देहे, अक्षरग्रहणमात्रपरत्वे विश्वजिन्न्यायेन स्वर्गएव तत्फलं वाच्यम्। निष्फलत्वे प्रवृत्त्यनुपपत्तेः। तथा चादृष्टार्थत्वापत्तिः। तस्मादर्थावगतिपर्य्यन्तमेवाध्ययनम्। तत्रार्थावगतिस्तु दृष्टमेव फलमिति नादृष्टकल्पनादोषः। स्पष्टमिदं स्वकृतजैमिनीयन्यायमालाविस्तरे प्रथमाधिकरणएव।

(१) द्विजशुश्रूषयैव शूद्राणां मुख्यत्वम्। द्विजाएव तु यदा केचिन्मुख्या न सन्ति केचिच्च स्वरूपेणैवोच्छिन्नाः, तदा तच्छुश्रूषकरूपस्य मुख्यशूद्रस्य सद्भावः शङ्कितुमपि न शक्यइति भावः।

इत्यमुपपातकविशेषस्याभक्ष्यभक्षणस्य प्रायश्चित्तमभिधाय जाति-भ्रंशकरस्य ब्राह्मणतिरस्कारस्य प्रायश्चित्तमाह,—

हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं च गरीयसः ॥ ५१ ॥
स्नात्वा तिष्ठन्नहःशेषमभिवाद्य प्रसादयेत् । इति ॥

ब्राह्मणो वेदपारगो ब्रह्मविद्वा । तं प्रति लौकिके शास्त्रीये वा व्यवहारे तद्भर्त्सनाय हुङ्कारं यः प्रयुङ्क्ते, यश्च वयसा विद्यया वा ज्येष्ठं पुरुषं प्रति त्वमित्येकवचनं प्रयुङ्क्ते; तावुभौ स्नात्वा यावदस्तमयं निराहारौ स्थित्वा रात्रावभिवादनेन तं क्षमापयेत् । निराहारत्वं मनुराह,--

"हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारन्तु गरीयसः ।
स्नात्वाऽनश्नन्नहःशेषमभिवाद्य प्रसादयेत्"--इति ।

यमोऽपि*,--

"हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः† ।
स्नात्वा तिष्ठन्नहःशेषं‡ प्रणिपत्य प्रसादयेत्"--इति ॥

शङ्खोऽपि§,—

"हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः ।
दिनमेकं व्रतं कुर्य्यात् प्रयतः सुसमाहितः"--इति ।

---

* शङ्खोऽपि,—इति मु० ।
† प्रायश्चित्तं विधीयते,—इति शा० ।
‡ अहोरात्रोषितः स्नात्वा,—इति शा० ।
§ यमोऽपि,—इति मु० ।

एतदभ्यासविषयम्। ननु, ब्राह्मणस्य रुजःकृत्या,--इति जातिभ्रंशकरेषु परिगणनाद्वक्ष्यमाणं ताडनादिकमेव जातिभ्रंशकरं, न तूक्तं हुङ्कारादिकमिति चेत्। न, हुङ्कारादिनाऽपि ब्राह्मणस्य मनसि रुजःसमुत्पादनात्।

ताड़नादौ प्रायश्चित्तमाह,--

**ताड़यित्वा तृणेनापि कण्ठे बध्वाऽपि वाससा ॥ ५२ ॥**
**विवादेनापि निर्जित्य प्रणिपत्य प्रसादयेत्। इति ॥**

यद्यपि तृणताड़नवस्त्रबन्धनविवादजयैर्न शरीरोपघातः, तथापि प्रायश्चित्तं चरितव्यमित्यपिशब्दस्यार्थः। प्रणिपातेनोपवासोऽप्युपलक्ष्यते। तदाह वृहस्पतिः,--

"गुरुं लंघत्य गर्व्वेण विप्रं निर्जित्य वादतः।
ताड़यित्वा तृणेनापि प्रसाद्योपवसेद्दिनम्"--इति ॥

याज्ञवल्क्योऽपि,--

"गुरुं लंघत्य हुङ्कृत्य विप्रं निर्जित्य वादतः।
बद्धा वा वाससा चिप्रं प्रसाद्योपवसेद्दिनम्"--इति ॥

यत्तु बौधायनेनोक्तम्,--

"वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्*"--इति।

---

* क्षमापयेत्,—इति मु०।

तदभ्यासविषयम् । पादस्पर्शादौ मण्वाह,—

"पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया ।
दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ॥
अवाच्यं ब्राह्मणस्योक्त्वा प्रायश्चित्तं विधीयते ।
कृच्छ्रातिकृच्छ्रं कृत्वा तु प्रणिपत्य प्रसादयेत् ॥
आक्रोशमनृतं कृत्वा कृच्छ्रं कुर्वीत मानवः"—इति ।

ब्राह्मणावगोरणादौ प्रायश्चित्तमाह,—

**अवगूर्य्य त्वहोरात्रं त्रिरात्रं क्षितिपातने ॥ ५३ ॥**
**अतिकृच्छ्रञ्च रुधिरे कृच्छ्रोऽभ्यन्तरशोणिते । इति ॥**

अवगूर्य्य बधार्थं दण्डमुद्यम्य, दिनमेकमुपवसेत् । भूमौ निपात्य त्रिरात्रमुपवसेत् । प्रहारेण रुधिरे निर्गते अतिकृच्छ्रं चरेत् । अनिर्गतं रुधिरमन्तरेकत्र* घनीभूतञ्चेत्, तदा कृच्छ्रं चरेत् । अवगोरणादेः शतसंवत्सरादिनरकहेतुत्वोपन्यासपुरःसरं प्रतिषेधः प्रत्यक्षश्रुतावुपलभ्यते । तथा च तैत्तिरीयब्राह्मणम् । "योऽवगुरेत्, शतेन यातयात्, योनिहनेत् सहस्रेण यातयात्, यो लोहितं करवत् यावतः प्रस्कन्द्य यावतः पांशून् संगृह्णात्तावतः संवत्सरान् पितृलोकं न प्रजानादिति, तस्माद्ब्राह्मणाय नावगुरेत् न निहन्यात् न लोहितं कुर्य्यादेतावता हैनसाऽयुक्तो भवति"—इति । गौतमोऽपि । "अभिक्रुद्धावगुरणं ब्राह्मणस्य वर्षशतमस्वर्ग्यं, निपाते† सहस्रं, लोहितदर्शने यावतः प्रस्कन्द्य पांशून् संगृह्णीयात्"—इति । मनुरपि,—

* अन्तरे कुत्रचित्,—इति मु० ।
† निहते,—इति मु० ।

"अवगूर्य्य लब्दशतं सहस्रमभिहत्य तु।
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥
शोणितं यावतः पांशून् संग्टह्णीयाद्द्विजन्मनः।
तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत् ॥
अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने।
कृच्छ्रातिकृच्छ्रौ कुर्व्वीत विप्रस्योत्पाद्य शोणितम्"—इति।

याज्ञवल्क्योऽपि,—

"विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने।
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते"—इति।

यमः,—

"ताड़ने च्छेदने चैव शोणितस्य प्रवर्त्तने।
कृच्छ्रातिकृच्छ्रौ कुर्व्वीत चान्द्रायणमथाचरेत्।
दशसंख्यास गादस्थुरङ्गच्छेदो यदा भवेत्"—इति।

वृहस्पतिः,—

"काष्ठादिना ताड़यित्वा त्वग्भेदे कृच्छ्रमाचरेत्।
अस्थिभेदेऽतिकृच्छ्रस्तु पराकस्त्वङ्गकर्त्तने"—इति।

पैठीनसिरपि। "लङ्कारक्षङ्कारावगोरणनिपातनलोहितप्रवर्त्तनोन्तरजयेषु प्रणिपत्यैकरात्रोपवासकृच्छ्रातिकृच्छ्रंश्चरित्वा प्रसादयेत् यथासंख्यम्"—इति। एतत् सर्व्वं सजातीयविषयम्। विजातीये तु प्रजापतिराह,—

"द्विगुणं त्रिगुणं चैव चतुर्गुणमथापिवा।
चत्रविट्शूद्रजातीनां ब्राह्मणस्य वधे व्रतम्"—इति।

आक्रोशादौ शङ्खलिखितावाहतुः । "आक्रोशेऽनृतवादे वा एकरात्रं त्रिरात्रं चोपवासः"—इति । सुमन्तुः । "देवर्षिगोब्राह्मणाचार्य्यमातृपितृनरेन्द्राणां प्रतिषेधने आक्रोशने जिह्वां दहेद्धिरण्यं दद्यात्"—इति ।

अतिकृच्छ्रं च रुधिरे,—इत्युक्तम् । कोऽसावतिकृच्छ्रः? इत्याकाङ्क्षायां तत्स्वरूपमाह,—

**नवाहमतिकृच्छ्रः* स्यात् पाणिपूरान्नभोजनः ॥५४॥**
**त्रिरात्रमुपवासः स्यादतिकृच्छ्रः स उच्यते । इति ।**

अतिकृच्छ्रमाचरन् विप्रस्त्रिरावृत्तैकभक्तनक्तायाचितदिनेषु नवसु यावता पाणिः पूर्य्यते तावदेव भुञ्जीत, उपवासदिनेषु प्राजापत्यवदुपवासमेव चरेत् । सोऽयमतिकृच्छ्र इत्युच्यते । एतदेवाभिप्रेत्य याज्ञवल्क्यः प्राजापत्यमुपदिश्य तस्यैव गुणविकृतित्वेनातिकृच्छ्रं निर्द्दिशति,—

"अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजने"—इति ।

गौतमोऽपि प्राजापत्यं प्रपञ्च्यानन्तरमाह† । "एतेनैवातिकृच्छ्रो-व्याख्यातो यत् सकृदाददीत तावदश्नीयात्"—इति । यद्वा, नैरन्तर्य्येण नवसु दिनेषु पाणिपूरान्नं भुक्त्वा त्रिषु दिनेषु उपरवसेत् । तदाह यमः‡,—

* इत्थमेव पाठः सर्व्वत्र । मम तु, नवाहमतिकृच्छ्रे,—इति पाठः प्रतिभाति ।

† प्राजापत्यव्रतानन्तरमाह,—इति मु० ॥

‡ मनुः,—इति मु० ।

"एकैकं पिण्डमश्नीयात् त्र्यहं कल्ये त्र्यहं निशि।
अयाचितस्त्र्यहं चैव वायुभक्षः परं त्र्यहम्॥
अतिकृच्छ्रं चरेदेतत् पवित्रं पापनाशनम्"—इति॥

अतिमानादतिक्रोधादित्यारभ्य कृच्छ्रोऽभ्यन्तरशोणिते,—इत्यन्तेष्वष्टस्वध्यायेषु नानाविधान् पापविशेषाननूद्य प्रायश्चित्तविशेषा निरूपिताः। यानि त्वन्यानि प्रतिपदोक्तप्रायश्चित्तरहितानि, तेषां साधारणं प्रायश्चित्तमाह,—

**सर्व्वेषामेव पापानां सङ्करे समुपस्थिते॥ ५५॥**
**दशसाहस्रमभ्यस्ता गायत्री शोधनं परम्। इति।**

अयञ्च गायत्रीजपः प्राजापत्यादीनामुपलक्षकः। तानि च प्रतिपदोक्तप्रायश्चित्तव्यतिरिक्तानि व्रतानि मुनिभिः प्रपञ्चितानि। तत्र मनुविष्णुविश्वामित्राः,—

"अनुक्तनिष्कृतीनान्तु पापानामपनुत्तये।
शक्तिं चावेक्ष्य पापञ्च प्रायश्चित्तं प्रकल्पयेत्"—इति।

याज्ञवल्क्यः,—

"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः।
प्रायश्चित्तं प्रकल्प्यं स्याद् यत्र चोक्ता न निष्कृतिः"—इति।

शङ्खलिखितौ। "क्रयविक्रयदुष्टभोजनप्रतिग्रहेष्वनादिष्टप्रायश्चित्तेषु सर्व्वेषु चान्द्रायणं प्राजापत्यञ्च"—इति। स्मृत्यन्तरे,—

"भक्ष्याभक्ष्याण्यनेकानि ब्राह्मणानां विशेषतः।
तत्र शिष्टा यथा ब्रूयुस्तत्कर्त्तव्यमिति स्मृतिः"—इति।

शातातपः,—

"अनुक्तेषु विधिं ज्ञात्वा प्रायश्चित्तं समाचरेत् ।

सर्व्वत्र सर्व्वपापेषु द्विजश्चान्द्रायणं चरेत्"—इति ॥

उशना,—

"यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनम् ।

प्राजापत्येन कृच्छ्रेण शुद्ध्यते नात्र संशयः"—इति ।

अभोज्ये भोज्यत्वप्रमितिमभिसंकल्प्य मनसा

प्रसक्तिं स्वाच्छन्द्यादिह विदधतः संज्ञतिमतः ।

मतं प्रायश्चित्तं दधतमिममेकादशमसा-

वकार्षीद्व्याख्यं स्फुटविवरणं माधवसुधीः ॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीर-वुक्कभूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां एकादशोऽध्यायः ॥०॥

---

# अथ द्वादशोऽध्यायः।

आचारकाण्डे त्रिभिरध्यायैर्यावन्त आचाराः प्रतिपादिताः, प्रायश्चित्तकाण्डे चाष्टभिरध्यायैर्यानि प्रायश्चित्तान्यभिहितानि ; तेभ्योऽतिरिक्तानां परिशिष्टानां केषाञ्चिदाचाराणां प्रायश्चित्तानाञ्च विधानायायं द्वादशाध्याय आरभ्यते। तत्रादौ दुःस्वप्नादिनिमित्तकं स्नानमाह,—

**दुःस्वप्नं यदि पश्येत् तु वान्ते तु क्षुरकर्मणि।**
**मैथुने प्रेतधूमे च स्नानमेव विधीयते ॥१॥ इति।**

स्वप्नो द्विविधः, सुस्वप्नो दुःस्वप्नश्च, तत्र यो दर्शनकाले द्रष्टुः सुखं जनयन् भावि श्रेयश्च सूचयति, स सुस्वप्नः। तस्योदाहरणं छन्दोगा आमनन्ति,—

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने"--इति।

तद्वैपरीत्येन दर्शनकाले दुःखं जनयन् पुरुषस्य भावि चारिष्टं यः सूचयति, स दुःस्वप्नः। एतस्य तूदाहरणं बहृचाः पठन्ति। तत्रहि मरणसूचकानि जागरणारिष्टानि बहून्यभिधाय अन्ते प्रत्यक्षदर्शनानीत्युपसंहृत्यानन्तरं स्वप्नारिष्टान्येवमाम्नायन्ते। "अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽवगिरति मध्वश्नाति

विसानि भक्षयत्येकं पुण्डरीकं धारयति खरैर्वराहैर्युक्तैर्याति कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणाभिमुखोऽव्रजति"—इत्यादि। स्वप्नाध्यायविदश्च स्वप्नस्य भाविसूचकं वचनमाहुः,--

"आरोहणं गोवृषकुञ्जराणां
प्रासादशैलाग्रवनस्पतीनाम्।
विष्ठाऽनुलेपोरुदितं* मृतञ्च
स्वप्नेष्वगम्यागमनञ्च धन्यम्॥
कृष्णाम्बरधरा नारी कृष्णगन्धानुलेपना।
अवगूहति† यं स्वप्ने मृत्युं तस्य विनिर्दिशेत्"--इति।

एतत्सर्व्वमभिप्रेत्य स्वप्नाधिकरणे भगवान् वादरायणः सूत्रयामास। "सूचकश्च हि श्रुतेराचक्षते च तद्विदः (व० ३ अ० २ पा० ४ सू०)"--इति। तत्र भाव्यरिष्टसूचके दुःस्वप्ने दृष्टे सति प्रातरुत्थाय तन्निमित्तकं स्नानं कर्त्तव्यम्। तथा, भुक्तेऽन्ने वान्ते सति तदैव स्नातव्यम्। तथा, चौरमैथुनप्रेतधूमाघ्राणेषु च स्नानमाचरेत्। एवं दुर्जनस्पर्शनादावपि स्नानं द्रष्टव्यम्। तदाह यमः,--

"अजीर्णेऽभ्युदिते वान्ते क्षुरकर्म्मणि मैथुने।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमेव विधीयते"--इति॥

वृद्धपराशरोऽपि,--

"दुःस्वप्ने मैथुने वान्ते विरिक्ते क्षुरकर्मणि।
चितियूपश्मशानानां स्पर्शने स्नानमाचरेत्"--इति।

---

* रुधिरं,—इति मु०।
† उपगूहति,—इति मु०।

मैथुने स्नानमृतुकालविषयम्। तदाह शातातपः,--

"ऋतौ तु गर्भशंकित्वात् स्नानं मैथुनिनः स्मृतम्।

अनृतौ तु यदा गच्छेत् शौचं मूत्रपुरीषवत्*"—इति।

वमनादौ विशेषमाह मनुः,--

"वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत्।

आचामेदेव भुक्त्वाऽन्नं स्नानं मैथुनिनः स्मृतम्"—इति।

भुक्त्वाऽन्नं अनन्तरं वान्तः आचामेदित्यर्थः।

अथ प्रायश्चित्तिनः पुनः संस्कारनिमित्तान्याह,—

**अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च।**
**पुनः संस्कारमर्हन्ति त्रयोवर्णा द्विजातयः॥२॥ इति।**

अयञ्च संस्कारो व्रतचरणानन्तरभावी। तत्र वचनानि† च पूर्व्वाध्यायएव प्रायश्चित्तप्रसङ्गादुदाहृतानि।

आद्यसंस्कारवत् पुनः संस्कारेऽप्यजिनादिप्राप्तावपवदति,--

**अजिनं मेखला दण्डो भैक्ष्यचर्य्या व्रतानि च।**
**निवर्त्तन्ते द्विजातीनां पुनः संस्कारकर्मणि॥३॥ इति।**

अजिनादिवद् वपनमपि निवर्त्तते। तदाह विष्णुः। "सर्व्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्। वपनमेखलादण्ड-भैक्षचर्य्याव्रतानि पुनः संस्कारकर्मणि वर्ज्जनीयानि"--इति। व्रतानि सौम्यप्राजापत्यादीनि, मधुमांसाञ्जनादिवर्जनानि च।

* तत्र पुरीषवत्,—इति पा०।

† तत्रैव साक्षिवचनानि,—इति पा०।

पूर्व्वाध्यायाद्दावमेध्यरेतोगोमांसविण्मूत्रप्राशने चान्द्रायणमित्युक्तम् । तत्कामकारविषयम् । अतएव तत्र बालापत्यसहभोजनमस्माभिरुदाहृतम् । अत्र त्वकामतोविण्मूत्रादिभोजने प्रायश्चित्तमाह,—

विण्मूत्रभोजी शुद्ध्यर्थं* प्राजापत्यं समाचरेत् ।
पञ्चगव्यञ्च कुर्व्वीत स्नात्वा पीत्वा शुचिर्भवेत् ॥४॥ इति ।

प्राजापत्यं चरित्वा पश्चात् पञ्चगव्येनैव स्नानं कृत्वा तत्पञ्चगव्यं प्राश्य शुद्धो भवति । एतच्च पुनः संस्कारात् प्रागेव कर्त्तव्यम् । "प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्"—इतिविष्णुवचनात् । जले तु विण्मूत्रोपहते कूर्मपुराणोक्तं द्रष्टव्यम्,—

"अपोमूत्रपुरीषाद्यैर्दूषिताः प्राशयेद् यदा ।
तदा सान्तपनं कृच्छ्रं व्रतं पापविशोधनम्"—इति ॥

चतुर्षु वर्णेषु यः कोऽपि स्वात्मघातार्थमुद्यम्य कथंचिद्घातात् प्रागेव विवर्त्तते, तस्य प्रायश्चित्तं प्रश्नपूर्व्वकमाह,—

जलाग्निपतने चैव प्रव्रज्याऽनाशकेषु च ।
प्रत्यावसितवर्णानां कथं शुद्धिर्विधीयते ॥ ५ ॥
प्राजापत्यद्वयेनैव तीर्थाभिगमनेन च ।
वृषैकादशदानेन वर्णाः शुद्ध्यन्ति ते त्रयः ॥ ६ ॥
ब्राह्मणस्य प्रवक्ष्यामि वनं गत्वा चतुष्पथे ।
सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत् ॥ ७ ॥

---

* विण्मूत्रस्य च शुद्ध्यर्थं,—इति मु० ।

**गोद्वयं दक्षिणां दद्यात् शुद्धिं पाराशरोऽब्रवीत्।**
**मुच्यते तेन पापेन ब्राह्मणत्वञ्च गच्छति ॥ ८ ॥**

जलाग्न्यादयः पञ्च मरणहेतवः। नदीतटाकादिप्रवेशेनाग्निप्रवेशेन भृगुपतनेन महाप्रस्थानगमनेनानशनेन च म्रियते। तत्र जलादिमरणं त्रिविधं, विहितं प्रतिषिद्धमनुज्ञातञ्च। विहितं च द्विविधं; काम्यतपोरूपं, प्रायश्चित्तरूपञ्च। तत्र तपोरूपं कूर्मपुराणे नर्मदामाहात्म्ये प्रदर्शितम्,—

"अग्निप्रवेशं यः कुर्य्यात् सोमतीर्थे[१] नराधिप।
जले वाऽनाशके वाऽपि नासौ मर्त्त्योऽभिजायते"—इति ॥

तत्रैव प्रयागमाहात्म्येऽभिहितम्,—

"गङ्गायमुनयोर्मध्ये करीषाग्निं विशेत्तु यः।
अहीनांगो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः।
यावन्ति रोमकूपाणि तस्य गात्रेषु मानवः॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते।
जलप्रवेशं यः कुर्य्यात् सङ्गमे लोकविश्रुते॥
राहुग्रस्ते यदा सोमे विमुक्तः सर्व्वपातकैः।
सोमलोकमवाप्नोति सोमेन सह मोदते"—इति।

तदेतत्प्रायश्चित्तरूपं मरणम्। क्रोधादिना यज्जलादिमरणं, तत्प्रतिषिद्धम्। तथाचाशौचप्रकरणे, क्रोधात् प्रायमित्यादिस्मृतिवाक्यमुदाहृतम्। प्रबलरोगग्रस्तस्य यज्जलादिमरणं, न तद्विहितं

---

(१) सोमतीर्थं नर्म्मदा। "रेवा तु नर्म्मदा सोमोद्भवा"—इत्युक्तेः।

नापि प्रतिषिद्धं; किन्तु शास्त्रेण केवलमनुज्ञातम् । तत्र* तस्मिन्नेव प्रकरणे दुश्चिकित्स्यैरित्यादिवाक्येनोदाहृतम् । तत्राभ्यनुज्ञानस्यैच्छिकत्वात्तत्र फलालाभमात्रं केवलं भवति, न लघौ प्रायश्चित्ती । योऽपि प्रायश्चित्तार्थं मर्त्तुमुद्यम्य ततो निवर्त्तते, तस्यापि पूर्व्वपापं न निवर्त्तते इत्येतावदेव; न तु तेन कर्त्तव्यं किञ्चित् प्रायश्चित्तान्तरमस्ति। एवञ्च सति प्रतिषिद्धमेव परिशिष्यते। तत्रापि मर्त्तुमुद्यम्य मृतस्य दुर्मरणत्वेऽपि न तस्येदं प्रायश्चित्तं, तत्कर्त्तुरेवाभावात्(१) । यस्तूद्यम्य मरणान्निवर्त्तते, तस्येदं प्रायश्चित्तम्। ननु तस्यापीदं न युक्तम्, आत्महत्यायाः शास्त्रनिषिद्धत्वेन तन्निवृत्तेः शास्त्रीयत्वात् । वाढम् । न हि वयं निवृत्तिनिमित्तमिदं प्रायश्चित्तं ब्रूमः, किन्तु निषिद्धाचरणोद्यमनिमित्तम् । उद्यममात्रस्य निमित्तत्वादेव प्रायश्चित्तस्य स्वल्पत्वमुपपद्यते ।

जलाग्न्यादिषु मर्त्तुमुद्यम्य ततो निवृत्ताः प्रत्यावसिताः, तादृशानां चतुर्णां वर्णानां पृथक् पृथक् प्रायश्चित्तं कर्त्तव्यमिति प्रश्नवाक्यस्यार्थः । तत्र क्षत्रियस्य प्राजापत्यद्वयं, वैश्यस्य तीर्थयात्रा, शूद्रस्य वृषभसहितगोदशकदानं, ब्राह्मणस्य वनगमनादिव्रतम्† ।

---

* इत्थमेव पाठः सर्व्वत्र । मम तु, तत्र,—इति पाठः प्रतिभाति ।

† वनगमनादि प्रपर्षितम्,—इति मु० ।

---

(१) दुर्म्मरणं हि पापजनकम् । मरणात् परमेव दुर्म्मरणजं पापमुत्पद्यते । एवञ्च सति मृतस्य पापभागित्वेऽपि न तस्य प्रायश्चित्तकर्त्तृत्वसम्भवः । जीवतएव तत्राधिकारादिति भावः ।

आत्महननोद्यमेन ब्राह्मणत्वमपगतं, चण्डालत्वमायातम्। पुनर्व्रताचरणेन चण्डालत्वनिवृत्तौ पुनः पूर्व्वसिद्धं ब्राह्मण्यं प्रतिपद्यते। तदाह वृद्धपराशरः,—

"अनाशकान्निवृत्तस्तु चातुर्व्वर्ण्यव्यवस्थितः।
चण्डालः स तु विज्ञेयो वर्जनीयः प्रयत्नतः॥
लुप्तधर्मास्तु चण्डालाः परिव्राजकतापसाः।
तेभ्योजातान्यपत्यानि चण्डालैः सह वासयेत्॥
जलाग्निपतने चैव प्रव्रज्याऽनशने तथा।
प्रत्यावसितवर्णानां प्रायश्चित्तं कथं भवेत्॥
ब्राह्मणानां प्रसादेन* तीर्थाभिगमनेन च।
गवाञ्च दशदानेन† वर्णाः शुद्ध्यन्ति ते त्रयः॥
ब्राह्मणस्य प्रवक्ष्यामि गत्वाऽरण्यं चतुष्पथम्।
सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम्॥
सावित्र्यष्टसहस्रन्तु जपेच्चैव दिने दिने।
मुच्यते सर्व्वपापेभ्यो ब्राह्मणत्वञ्च गच्छति॥
भैक्षार्थी विचरेद् ग्रामं गृहान् सप्त वने वसन्।
तां च‡ भिक्षां समश्नीयादब्दार्द्धेन विशुद्ध्यति"—इति॥

अत्रैव व्रतान्तराण्याह वशिष्ठः,—

"जीवन्नात्मत्यागी कृच्छ्रं द्वादशरात्रं चरेत्।

* प्रवादेन,—इति मु०।

† शतदानेन,—इति शा०।

‡ दत्तां,—इति मु०।

त्रिरात्रं वाऽप्युपवसेन्नित्यं क्लिन्नेन वाससा ॥
प्राणानात्मनि संयम्य त्रिः पठेदघमर्षणम् ।
अपिवैतेन कल्पेन गायत्रीं परिवर्त्तयेत् ॥
अपिवाऽग्निं समाधाय कुष्माण्डैर्जुहुयाद्घृतम्"—इति ॥

तत्र जपाहोमौ विद्वद्विषयौ कल्पनीयौ । द्वादशरात्रत्रिरात्रौ त्वविद्वद्विषये शक्ताशक्तभेदेन व्यवस्थापनीयौ ।

मूलवचने प्रव्रज्याशब्देन पूर्व्वं महाप्रस्थानगमनं व्याख्यातम् । अथवा परिव्रज्या तेन विवक्ष्यते । तथाच सति परिव्रज्यातः प्रच्युतस्य ब्राह्मणस्य प्रायश्चित्तमुक्तं भवति* । तदिदं श्रद्धालोः पुनरुपनयनादि-पुरःसरं पारिव्रज्यं जिघृक्षोर्वेदितव्यम् । यस्तु पुनः पारिव्रज्यं न जिघृक्षति, तस्य मरणान्तं राजदासत्वादिकम् । अत्र नारदः,—

"राज्ञएव तु दासः स्यात् प्रव्रज्याऽवसितोद्विजः ।
न तस्य प्रतिशोधोऽस्ति न विशुद्धिः कथञ्चन"—इति ॥

कात्यायनः,—

"प्रव्रज्याऽवसिता यत्र त्रयोवर्णा द्विजातयः ।
निर्व्वासं कारयेद्विप्रं दास्यं क्षत्रविशोर्नृपः"—इति ।

दक्षः,—

"पारिव्रज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तं राज्यात्क्षीप्रं प्रवासयेत्" इति ।

याज्ञवल्क्यः,—

"प्रव्रज्याऽवसितो राज्ञोदासः स्यात् मरणान्तिकम्"—इति ।

---

* प्राजापत्यं प्रायश्चित्तमुक्तं भवति.—इति मु० ।

अथाचारकाण्डशेषत्वेन स्नानभेदानाह,—

**स्नानानि पञ्च पुण्यानि कीर्त्तितानि मनीषिभिः ।**
**आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेवच ॥९॥ इति ।**

आग्नेयादीनामुद्दिष्टानां पञ्चानां क्रमेण स्वरूपं विविनक्ति,—

**आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम् ।**
**आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥१०॥**
**यत्तु सातपवर्षेण तत्स्नानं दिव्यमुच्यते ।**
**तत्र स्नात्वा तु गङ्गायां स्नातो भवति मानवः ॥११॥इति ।**

भस्मस्नानं द्विविधं, पादादिकं मूर्द्धादिकञ्च । तत्र पादादिकं विरक्तविषयं, संहारक्रमत्वात् । तच्च कूर्मपुराणे दर्शितम्,—

"आग्नेयं भस्मना पादमस्तकाद्देहधूलनम्"—इति ।

मूर्द्धादि लिङ्गपुराणे दर्शितम्,—

"ईशानेन शिरोदेशं मुखं तत्पुरुषेण तु ।
उरोदेशमघोरेण गुह्यं वामेन सुव्रतः ॥
सद्येन पादौ सर्वाङ्गं प्रणवेन तु शोधयेत्"—इति ।

जलावगाहनरूपन्तु वारुणस्नानं, प्रथमाध्याये "सन्ध्या स्नानं जपो होमः"—इत्यत्र प्रपञ्चितम् । ब्राह्मन्तु तिसृभिरापोहिष्ठेत्यृग्भिः[१] पादहृदयमूर्द्धप्रदेशेषु कुशोदकैर्मार्जनम् । तदुक्तं कूर्मपुराणे,—

---

(१) यद्यपि "आपोहिष्ठेति"—इत्येतावन्मात्रमुक्तं, तथापि आपोहिष्ठेत्यादि ऋक्त्रयमेव ग्राह्यम् । "दृचसूक्तानामादियहणेन विधिर-

"आग्नन्तु मार्जनं मन्त्रैः कुशैः सोदकविन्दुभिः"—इति ।

तच्च त्रिःकृत्वोऽभ्यस्तेषु स्थानेषु कर्त्तव्यम्। तत्प्रकारश्च बौधायनेन दर्शितः,—

"भुवि मूर्द्ध्नि तथाऽऽकाशे मूर्द्धन्याकाशे तथा भुवि ।
आकाशे भुवि मूर्द्ध्नीति मन्त्रस्नानं विधीयते"—इति ।

सायंकाले गोषु मार्गेष्वागच्छन्तीषु वायुना समुत्थिते गोपादरजस्यवस्थानं वायव्यम्। आतपयुक्तेन वर्षोदकेन देहस्याप्लावनं दिव्यस्नानम्। तदिदं पूर्व्वोक्तेभ्यः प्रशस्तम्। एतेन यौगिकसारस्वते अपि द्वे स्नाने उपलक्ष्येते। यौगिकं योगेन विष्णुचिन्तनम्। तदाह व्यासः,—

"ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेवच।
वारुणं यौगिकं तद्वत् षोढ़ा स्नानं समासतः ॥
वारुणं चावगाहस्तु मानसं त्वात्मवेदनम् ।
यौगिकं स्नानमाख्यातं योगैर्विष्णुविचिन्तनम्"—इति ।

विद्वदाशिषा सम्पादितं सारस्वतं स्नानम् । तदाह वृहस्पतिः,—

"वायव्यं गोरजः प्रोक्तमस्तं गच्छति गोपतौ ।
विद्वत्सरस्वतीप्राप्तं स्नानं सारस्वतं स्मृतम्"—इति ।

विद्वदुक्तिप्रकारमाह व्यासः,—

"स्वयमेवोपपन्नाय विनयेन द्विजातये ।

---

नादेशे (६, ३, १,)"—इति लाट्यायनसूत्रात्। आपोहिष्ठेति तृच-सूक्तञ्च सामवेदीयोत्तरार्चिकस्य नवमप्रपाठकस्य द्वितीयार्द्धे पठ्यते । तच्च तत्र दशमं सूक्तम्।

तज्ज्ञः सम्पादयेत् स्नानं शिष्याय च सुताय च।
दार्वायणमयैः कुम्भैर्मन्त्रवल्लाङ्गवीजलैः॥
कृतमङ्गलपुण्याहैः स्नानमस्तु तदर्थिनाम्।
आदौ तावत् प्रभासे बहुगुणसलिले मध्यमे पुष्करे वा
गङ्गाद्वारे प्रयागे कनखलसहिते भद्रकर्णे गयायाम्।
राहुग्रस्ते च सोमे दिनकरसहिते सन्निपात्यां विशेषा-
दैतैर्विख्याततीर्थैस्त्रिभुवनविदितैः स्नानमच्छिद्रमस्तु"—इति।

एतेषु सप्तसु स्नानेषु वारुणं मुख्यमितराणि बहुगौणानि। मुख्यगौणभेदेन शङ्खवचनमाचारकाण्डएवोदाहृतम्। तत्र गौण-स्नानान्यशक्तविषयाणि। तदुक्तं कूर्मपुराणे,—

"अशायत्ये समुत्पन्ने स्नानमेवं समाचरेत्।
ब्राह्मादीनि तथाऽशक्तौ स्नानान्याहुर्मनीषिणः"—इति।

वारुणस्नाने तर्पणस्य पूर्व्वभावित्वं वस्त्रनिष्पीड़नस्योत्तरभावित्व-मुपपत्तिपुरःसरं विदधाति,—

**स्नातुं यान्तं द्विजं सर्व्वे देवाः पितृगणैः सह।**
**वायुभूतास्तु गच्छन्ति तृष्णार्त्ताः सलिलार्थिनः॥१२॥**
**निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीड़ने कृते।**
**तस्मान्न पीड़येद्वस्त्रमकृत्वा पितृतर्पणम्॥१३॥ इति।**

स्नातुं गच्छन्तं येऽनुगच्छन्ति, ते सर्व्वे पूर्व्वं वस्त्रे निष्पीड़िते सति निराशाः गच्छन्ति,—इत्येवोपपत्तिः। अस्मिन्नर्थे योगियाज्ञ-वल्क्यादिस्मृत्यन्तरवचनानि पूर्व्वमेवोदाहृतानि।

तर्पणवेलायां तिलाः पाणितले विलोमप्रदेशे पात्रान्तरे वा स्थापनीयाः,न तु सलोम्नि पाणिपृष्ठे,—इत्यभिप्रेत्य तत्र स्थापने प्रत्यवायमाह,—

**रोमकूपेष्ववस्थाप्य यस्तिलैस्तर्पयेत् पितॄन् ।**
**तर्पितास्तेन ते सर्वे रुधिरेण मलेन च ॥१४॥ इति ।**

अस्मिन्नर्थे देवलवचनं पूर्व्वमुदाहृतम् ।

स्नानवेलायां केशधूननादि प्रतिषेधति,—

**अवधूनोति यः केशान् स्नात्वा प्रस्रवतो द्विजः* ।**
**आचामेद्वा जलस्थोऽपि स बाह्यः पितृदैवतैः ॥१५॥ इति ।**

स्नात्वेत्येतत्पदं काकाक्षिवदुभयतः सम्बध्यते। तथा च सति यः स्नानानन्तरमार्द्रान् केशानवधुनुयात्, यश्च स्नानानन्तरमार्द्रवस्त्रो-मलमूत्रे विसृजेत्, यश्च नद्यादावस्नानकाले जलमध्ये स्थित्वा आचामेत्, स त्रिविधोऽपि पुरुषः पितृभिः दैवतैश्च बाह्यः कृतः। पैतृकं दैविकं चानुष्ठानमनुष्ठातुमनर्ह इत्यर्थः ।

आचमनकाले शिरःप्रावरणादीनि निषेधति,—

**शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।**
**विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवेत् ॥१६॥ इति ।**

वस्त्रेण शिरः कण्ठं वा प्रावृत्य नाचामेत् । तथा, मुक्तकच्छो-वा मुक्तशिखो वा यज्ञोपवीतरहितो वा नाचामेत् ।

आचमने नियमान्तरमाह,—

---

* इत्यमेव पाठः सर्व्वत्र । परन्तु, "यश्च स्नानानन्तरमार्द्रवस्त्रोमलमूत्रे विसृजेत्"—इति व्याख्यादर्शनात्, प्रस्रवते द्विजः,—इति पाठएव समीचीनः प्रतिभाति ।

जले स्थलस्थो नाचामेत् जलस्थश्च वहिः स्थले।
उभे स्पृष्ट्वा समाचान्त उभयत्र शुचिर्भवेत्॥१७॥ इति।

योहि पद्भ्यां जलमस्पृष्ट्वा शुद्धस्थलएवोपविश्य प्रक्षोजलएव विन्दून् पातयन्नाचमति, स जलस्थलयोरुभयोर्न शुद्ध्यति। यश्च तद्वैपरीत्येन जले पादद्वयमवस्थाप्य स्थले विन्दून् पातयन्नाचामति, सोऽपि नोभयत्र शुद्ध्यति। अतस्तथा नाचान्तव्यं, किन्त्वेकेन पादेन स्थलमपरेण जलं स्पृष्ट्वा समाचामेत्। तथा चोभयत्र शुद्ध्यति। एतच्च स्नात्वा य आर्द्रवस्त्रस्तद्विषयम्।

द्विराचमननिमित्तान्याह,—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे।
आचान्तः पुनराचामेद्वासोविपरिधाय च॥१८॥ इति।

आचमनप्रतिनिधित्वेन श्रोत्रस्पर्शे निमित्तान्याह,—

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्॥१९॥ इति।

श्रोत्रस्पर्शस्य शुद्धिहेतुत्वमुपपादयति,—

अग्निरापश्च वेदाश्च सोमसूर्य्यानिलास्तथा।
सर्व्वएव तु विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे॥२०॥ इति।

अरुणोदयात् पूर्व्वं स्नानं निषेधति,—

भास्करस्य करैः पूतं दिवास्नानं प्रशस्यते।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात्॥२१॥ इति।

ग्रहणस्नाने रात्रिस्नानस्य प्रतिप्रसवं विवक्षित्वा राहोरन्यत्र दर्शनादित्युक्तम्।

स्नानदृष्टान्तेन दानादीनामपि प्रतिप्रसवमाह,—

**स्नानं दानं जपो होमः कर्त्तव्यो राहुदर्शने ।**
**अन्यदा त्वशुचीरात्रिस्तस्मात्तां परिवर्जयेत् ॥२२॥ इति।**

यद्यपि रात्रौ दानादिप्रतिषेधो न मूलवचने प्रस्तुतः, तथापि शास्त्रान्तरसिद्धं प्रतिषेधं हृदि निधायायं प्रतिप्रसव इति द्रष्टव्यम् । अन्यदा राहुदर्शनरहिते काले रात्रिः स्नानादिष्वशुचिः, तस्मात् स्नानादिकं चिकीर्षुस्तां रात्रिं परिवर्जयेत् ।

सोमग्रहणकालस्य दानाद्यर्हत्वमुपपादयति,—

**मारुता वसवो रुद्रा आदित्याश्चैव देवताः ।**
**सर्व्वे सोमे प्रलीयन्ते तस्माद्दानन्तु संग्रहे ॥२३॥ इति।**

राहुदर्शनइव खलयज्ञादावपि रात्रिदानमभ्यनुजानाति,—

**खलयज्ञे विवाहे च संक्रान्तौ ग्रहणे तथा ।**
**शर्व्वर्य्यां दानमस्त्येव नान्यत्रैवं विधीयते ॥ २४ ॥ इति।**

पुनरपि राहुदर्शनं दृष्टान्तेनोदाहृत्य पुत्रजन्मादौ रात्रिदानमभ्यनुजानाति,—

**पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि ।**
**राहोश्च दर्शने दानं प्रशस्तं नान्यदा निशि ॥२५॥ इति।**

अत्ययकर्म मरणम् । तस्मिन् प्रस्तुते सति गोदानतिलपात्रादिदानं निश्यपि कर्त्तव्यम् ।

नान्यदा निशीत्ययं निषेधो दानइव स्नानेऽप्यस्तीत्यभ्युपेत्य पूर्व्वपश्चिमयामयोः स्नानस्य प्रतिप्रसवमाह,—

**महानिशा तु विज्ञेया मध्यस्थप्रहरद्वयम्।**
**प्रदोषपश्चिमौ यामौ दिनवत् स्नानमाचरेत्॥२६॥इति।**

निशिनिषेधो महानिशाविषयः। महानिशाशब्दश्च द्वितीयतृतीययामावभिधत्ते। तथाच सति प्रथमचतुर्थयामौ दिनवत् स्नानादियोग्यौ। तस्मात्तत्र स्नानादिकमाचरेत्। एतच्चापद्विषयम्। अन्यथा भास्करस्य करैरित्यनेन विरुद्ध्येत। काम्यनैमित्तिके स्नाने तु महानिशाऽपि न निषिध्यते। तदाह देवलः,—

"महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम्।
तत्र स्नानं न कुर्व्वीत काम्यनैमित्तिकादृते"—इति।

रात्रौ स्नानस्य निमित्तं राहुदर्शनं पूर्व्वमुक्तम्। इदानीं निमित्तान्तराण्याह,—

**चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी।**
**एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासाजलमाविशेत्॥२७॥ इति।**

चितेर्योग्यं श्मशानस्थानं चैत्यम्। तत्र समारोपितोवृक्षः चैत्यवृक्षः। चित्यादयः प्रसिद्धाः। तेषां स्पर्शनं स्नाननिमित्तं, तद्यदि कथञ्चित् रात्रौ सम्पद्यते, तदा रात्रावपि स्नातव्यमित्यभिप्रायः।

स्नानस्य निमित्तान्तरमाह,—

**अस्थिसंचयनात् पूर्व्वं रुदित्वा स्नानमाचरेत् ।**
**अन्तर्दशाहे विप्रस्य ह्यूर्द्धमाचमनं भवेत् ॥२८॥ इति ।**

प्रथमेऽह्नीत्यादिशास्त्रैर्विहितानां दिनानां मध्ये यदाऽस्थिसञ्चयनं क्रियते, ततः पूर्व्वस्मिन् काले रोदनं स्नाननिमित्तम् । अस्थिसञ्चयनादूर्द्धं रोदनं त्वाचमनस्यैव निमित्तं, न तु स्नानस्य ।

ननु सोमग्रहणे रात्रावपि स्नातव्यमित्युक्तम् । तदयुक्तम् । उदकस्य शुद्ध्यभावात् । तदाह पैठीनसिः,—

"अपेयन्तु तथा तोयं रात्रौ मध्यमयामयोः ।
स्नानं चैव न कर्त्तव्यं तथैवाचमनक्रिया"—इति ॥

तस्माद्रात्रौ स्नानं कथमभ्युपगम्यते ? इत्याशङ्क्य, सोमग्रहादिव्यतिरिक्तविषयेयमशुद्धिरित्याह,—

**सर्व्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ।**
**सोमग्रहे तथैवोक्तं स्नानदानादिकर्म्मसु ॥२९॥ इति ।**

सोमग्रहस्योपलक्षणत्वात् संक्रान्त्यादिष्वपि नास्त्यशुद्धिदोषः ।

सोमग्रहादीनां यथोदकप्राशस्त्यहेतुत्वं, तथा कुशस्यापीत्याह,—

**कुशपूतन्तु यत्स्नानं कुशेनोपस्पृशेद्द्विजः ।**
**कुशेनोद्धृततोयं यत् सोमपानसमं भवेत् ॥३०॥ इति ।**

कुशैर्मार्ज्जनं कृत्वा स्नानं क्रियते यत्, तत् कुशपूतं स्नानम् । कुशाननामिकायां धृत्वा यदाचमनं, तत्कुशोदकोपस्पर्शनम् । सन्ध्यावन्दनादौ मार्जनार्थं कुशाग्रैरुद्धृतं विन्दुजातं, कुशोद्धृततोयम् । तत्तोयं सोमपानवत् प्रशस्तम् ।

अथ कृत्स्नवेदाध्ययनं कर्त्तुमशक्तस्यैकदेशाध्ययनमभ्यनुज्ञातुमध्ययनाभावं निन्दति,—

अग्निकार्य्यात् परिभ्रष्टाः सन्ध्योपासनवर्जिताः।
वेदं चैवानधीयानाः सर्व्वे ते वृषलाः स्मृताः॥३१॥ इति।

उभयोः सन्ध्ययोर्ब्रह्मचारिभिः समिदाधानमग्निकार्य्यम्। तेन गृहस्थानामौपासनमप्युपलक्ष्यते। अग्निकार्य्यादिरहितानां वृषलत्वं शूद्रादिसमानत्वम्*।

कियदंशाध्ययनमभ्यनुजानाति,—

तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः।
अध्येतव्योऽप्येकदेशो यदि सर्व्वं न शक्यते॥३२॥ इति।

न चाध्ययनन्यायेनाग्निकार्य्यसन्ध्योपासनयोरप्येकदेशानुष्ठानं शङ्कनीयम्। प्रयासरहितत्वेन तयोरशक्यत्वमसम्भवात्। क्वचित्तद्वर्जनस्य नास्तिक्यालस्यादिमूलकत्वात्†। वृषलभीतेन वृषलत्वाद्भीतेनेत्यर्थः।

अथ शूद्रान्नं प्रतिषेधति,—

शूद्रान्नरसपुष्टस्याप्यधीयानस्य‡ नित्यशः।
जपतोजुह्वतोवाऽपि गतिरूर्द्ध्वा न विद्यते॥३३॥ इति।

---

* शूद्रादिसमानत्वम्,—इति नास्ति मु० पुस्तके।

† नास्तिक्यादिमूलकत्वात्,—इति मु०।

‡ पुष्टस्य ह्यधीयानस्य,—इति मु०।

अध्ययनजपहोमास्तावदशेषपापक्षयहेतुतया पवित्रतामापादयन्तीति धर्मशास्त्रेषु नियमः * । तथाच मनुः,—

"वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा ।

नाशयन्त्याशु पापानि महापातकजान्यपि"—इति ।

बृहस्पतिरपि,—

"यथा जातबलोवह्निर्दहत्यार्द्रानपि द्रुमान् ।

तथा दहति वेदज्ञः कर्मजं दोषमात्मनः"—इति ॥

वशिष्ठोऽपि,—

"यथाऽग्निर्वायुना पूतो हविषा चैव दीप्यते ।

तथा जप्यपरोनित्यं † मन्त्रयुक्तः समाहितः"—इति ।

चतुर्विंशतिमतेऽपि,—

"वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैवच ।

ऋतावृतौ प्रयुञ्जानः पुनाति दशपूरुषम्"—इति ॥

यस्तु नैरन्तर्य्येण शूद्रान्नं भुञ्जानः तद्रसेन पुष्टो भवति, तं पुरुषं यथोक्ता अध्ययनादयोऽपि न पूतयितुं क्षमाः । तस्मात् शूद्रान्नं यत्नेन वर्जयेदित्याशयः ।

शूद्रान्नं दृष्टान्तीकृत्य तद्वच्छूद्रसम्पर्कादीन् प्रतिषेधति,—

**शूद्रान्नं शूद्रसम्पर्कः शूद्रेण तु सहासनम् ।**

**शूद्राज्ज्ञानागमश्चापि ज्वलन्तमपि पातयेत् ॥३४॥ इति ।**

---

* छिद्रिमः,—इति मु० ।

† तथैवाध्यापकोनित्यं,—इति मु० ।

एकस्मिन् गृहे शूद्रेण सह वासः, शूद्रसम्पर्कः। कृष्यादिकं कारयतां कृषीवलैः शूद्रैः सह कदाचिदेकस्मिन् शकटादावुपवेशनं, सहासनम्। पुराणादिश्रवणादिजातधर्माधर्मविवेकात् प्राज्ञात् शूद्राद्धर्माधर्मप्राप्तिर्ज्ञानागमः। एते शूद्रान्नादयः ज्वलन्तं ब्रह्मवर्चसेन विख्यातमपि पुरुषं नरके पातयन्ति। तस्मात्ते वर्जनीयाः।

वर्ज्यान्तरमाह,—

**यः शूद्रा पाचयेन्नित्यं शूद्री च गृहमेधिनी।**
**वर्जितः पितृदेवेभ्यो रौरवं याति स द्विजः॥३५॥ इति।**

यो विप्रः केनचिन्निमित्तेन परस्थलादौ निवसन्* स्वकीयमेवान्नं शूद्रस्त्रिया पाचयेत्। यस्य च ग्रामे निवसतोऽपि ऊढाऽनूढा वा शूद्रा गृहिणी भवति। द्विविधोऽपि स विप्रोहव्यकव्यानुष्ठानायोग्यः सन्नरकमाप्नोति।

शूद्रान्नवत् सूतकान्नं निन्दति,—

**मृतसूतकपुष्टाङ्गं द्विजं शूद्रान्नभोजिनम्।**
**अहन्तन्न विजानामि कां कां† योनिं गमिष्यति॥३६॥**
**गृध्रो द्वादश जन्मानि दश जन्मानि सूकरः।**
**श्वयोनौ सप्त जन्मानि इत्येवं‡ मनुरब्रवीत्॥३७॥ इति।**

मृताशौचे जाताशौचे वा अशौचिनोऽन्नमन्यो यो विप्रोदश-

---

* परस्थलादौ निवसन्,—इति नास्ति शा०।

† कां वा,—इति मु०।

‡ जन्म स्यादित्येवं,—इति शा०।

ऽपि दिनेषु भुक्का शरीरं पुष्णाति, सोऽयं शूद्रान्नपुष्टांगो-विप्रः* बहुषु कष्टयोनिषु जायते । कां कां योनिं गमिष्यतीत्येतत् न जाने इत्युक्का योनीनामतिकष्टत्वं वर्णितं, न तु स्वाज्ञानं प्रकटीकृतम् । अन्यथा श्वादिजन्मोदाहरणं व्याहन्येत । न च श्वादिवाक्यं मनुरब्रवीदित्यभिधानात् तत्पूर्वकं, स्वाज्ञानमुपवर्णित-मिति शङ्कनीयम् । तद्वर्णनेन प्रयोजनाभावात् । मनुशब्दोदाह-रणं प्रामाण्यदार्ढ्यार्थम् । तथा च सति शूद्रान्नसूतकान्नयोः कष्टत्व-स्यात्यन्तं प्रतिपादितत्वात् तदुभयं सर्व्वथा वर्जनीयमित्युक्तं भवति ।

शूद्रार्थे होमानुष्ठानं प्रतिषेधति,—

**दक्षिणार्थन्तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।**
**ब्राह्मणस्तु भवेत् शूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥३८॥ इति ।**

यो विप्रः शूद्राद्दक्षिणामादाय तदीयं हविः शान्तिपुष्ट्यादि-सिद्धये वैदिकैर्मन्त्रैर्जुहोति, तस्य ब्राह्मणस्यैव तत्र प्रत्यवायः शूद्रस्तु होमफलं लभेदिति ।

अथ भोजनकाले मौनं विदधाति,—

**मौनव्रतं समाश्रित्य आसीनो न वदेद्द्विजः ।**
**भुञ्जानो हि वदेद्यस्तु तदन्नं परिवर्जयेत् ॥३९॥ इति ।**

यत्तु मौनेन भोक्तव्यमिति व्रतं तपोरूपेण स्वीकृत्य वर्त्तते,

* इत्थमेव पाठः सर्व्वत्र । मम तु, सोऽयं मृतसूतकपुष्टाङ्गः, यस्तु शूद्रान्नं भुक्का शरीरं पुष्णाति सोऽयं शूद्रान्नपुष्टाङ्गोविप्रः,—इति पाठो भवितुमुचितः प्रतिभाति ।

स भोक्तुमासीन उत्थानपर्य्यन्तं किमपि वचनं न वदेत्। यदि प्रमा-दाद्भोजनमध्ये किञ्चिद्वाक्यं वदेत्, तदाऽवशिष्टमन्नं परित्यजेत्।

भोजनपात्रेण जलपानं निषेधति,—

**अर्द्धं भुक्ते तु* यो विप्रः तस्मिन् पात्रे जलं पिबेत्।**
**हतं† दैवं च पित्र्यञ्च आत्मानं चोपघातयेत्‡ ॥४०॥ इति।**

कांस्यादिपात्रे प्रक्षिप्तमन्नं भुक्त्वा भोजनसमाप्तेः प्रागेव तत्पात्र-मुद्धृत्य जलं यः पिबेत्, तेनानुष्ठितं हव्यं कव्यं च देवान् पितॄंश्च तर्पयेत्। तेन दोषेण स्वात्मानं नरके पातयित्वाऽवघातयेत्।

पङ्क्त्युच्छिष्टकारित्वं प्रतिषेधति,—

**भुञ्जानेषु तु विप्रेषु योऽग्रे पात्रं विमुञ्चति।**
**स मूढः स च पापिष्ठो ब्रह्मघ्नश्च खलूच्यते ॥४१॥ इति।**

एकपङ्क्त्युपविष्टेषु भुञ्जानेषु सत्सु तन्मध्ये कश्चिदितरभोजनस-माप्तेः पूर्व्वमेव स्वपात्रं परित्यज्य भोजनान्तउदकं पीत्वा तिष्ठति, तस्य निन्दाऽतिमहती। तदर्थमेव मूढादिशब्दाः प्रयुक्ताः।

श्राद्धकाले भोजनपात्रचलनात्पूर्व्वं स्वस्तिवाचनं निषेधति,—

**भाजनेषु च तिष्ठत्सु स्वस्ति कुर्व्वन्ति ये द्विजाः।**
**न देवास्तृप्तिमायान्ति निराशाः पितरस्तथा ॥४२॥ इति।**

---

* अर्द्धं भुक्त्वा तु,—इति मु०।

† हूपं,—इति मु०।

‡ चोपपातयेत्,—इति मु०।

अस्नातभोजनादिकं निषेधति,—

**अस्नात्वा नैव भुञ्जीत अजप्त्वाऽऽज्यमहुत्य च ।**
**पर्णपृष्ठे न भुञ्जीत रात्रौ दीपं विना तथा ॥४३॥ इति ।**

यद्यपि स्नानजपहोमानां भोजनकालात् प्राचीनकाले विहितत्वादस्नातभोजनादिकं न प्रसक्तं*, तथापि कदाचित् केनचिन्निमित्तेन स्वस्वकालेष्वननुष्ठितेषु यदि भोजनकालः प्राप्तः स्यात्; तदा स्नानादिकमकृत्वा भोजनं न कुर्व्वीत। तथा, पत्रावल्यां भुञ्जानः पत्राणामन्तर्भागे भुञ्जीत, न तु पृष्ठभागे। तथा, रात्रावन्धकारे न भुञ्जीत।

अथापहारादिना† धनार्जनं प्रतिषेधति,—

**गृहस्थस्तु दयायुक्तो धर्ममेवानुचिन्तयेत् ।**
**पोष्यवर्गार्थसिद्ध्यर्थं(१) न्यायवर्त्ती तु बुद्धिमान् ॥४४॥**
**न्यायोपार्जितवित्तेन कर्त्तव्यं ह्यात्मरक्षणम् ।**
**अन्यायेन तु यो जीवेत् सर्व्वकर्मबहिष्कृतः ॥४५॥ इति ।**

गृहस्थः पुत्रमित्रकलत्रादयः सर्व्वथा रक्षणीया इत्यनया दयया युक्तोऽपि पोष्यवर्गपोषणरूपस्यार्थस्य सिद्धये धर्ममेव शास्त्रीयमेव याजनादिरूपं द्रव्यार्जनोपायं चिन्तयेत्। एवञ्च सति न्यायवर्त्ती

* दयालुत्वादि यदुक्तं तन्न प्रशस्तं,—इति मु० ।
† अथान्यायादिना,—इति मु० ।

(१) पोष्यवर्गश्च, "पिता माता गुरुर्भ्राता प्रजादीनाः समाश्रिताः ।
अभ्यागतोऽतिथिश्चैव पोष्यवर्ग उदाहृतः"—इत्युक्तलक्षणः ।

सन् परलोकविषयप्रधानत्वेन बुद्धिमान् भवति। तस्मात् न्यायोपार्ज्जितेनैव याजनादिसाध्येन वित्तेनात्मरक्षणं कर्त्तव्यम्। यस्त्वन्यायेन चौर्य्यापलापादिना लब्धेन वित्तेन जीवेत्, स दैवे पित्र्ये च कर्मण्यनर्हो भवति। यत्तु मनुवचनम्,—

"वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः।
अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्"—इति॥

तदापद्विषयम्।

अथ पुण्यवस्तुदर्शनं विधत्ते,—

**अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः।**
**दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः॥४६॥ इति।**

इष्टकाचयनसंस्कृतेनाग्निना युक्तोऽग्निचित्। कपिला कपिलवर्णा धेनुः। सत्री द्वादशाहमारभ्य सहस्रसम्वत्सरपर्य्यन्तेषु सत्रेषु यस्य कस्यचित् सत्रस्यानुष्ठाता। शास्त्रीयेन मार्गेण प्रजानां पालको राजा। चतुर्थाश्रमस्य यथावत् पालको भिक्षुः। महोदधिर्लवणसमुद्रादिः। एते दृष्टाः सन्तो द्रष्टारं पुनन्ति। कुशहिरण्यादयो-द्रव्यविशेषाः पुनन्तोऽपि धारणादिकमपेक्षन्ते, न तु दर्शनमात्रेण पुनन्ति। अतस्तद्वैलक्षण्याय, दृष्टमात्राः,—इत्युक्तम्।

रक्षणमात्रेण शुद्धिप्रदान् पदार्थानाह,—

**अरणिं कृष्णमार्जारं चन्दनं सुमणिं घृतम्।**
**तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत्॥ ४७॥**
**इति।**

यो ऽश्वत्थः शमीगर्भः,–इत्यादिभिर्मन्त्रैः संस्कृतो वह्निमथनोपयुक्तः काष्ठविशेषोऽरणिः । सुमणिः पद्मरागादिः ।

अथ गोचर्मदानं विधातुं गोचर्मनिरूपणमाह,—

**गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम् ।**
**तत् क्षेत्रं दशगुणितं गोचर्म परिकीर्त्तितम् ॥४८॥ इति ।**

एकेन वृषेण सहितं गोशतं सैकवृषम् । तच्च गोशतं नियन्त्रणरहितं विश्रामाय यावन्तं भूप्रदेशमाक्रम्यावतिष्ठते, तावान् भूप्रदेशोदशगुणितः सन् गोचर्मशब्देनाभिधीयते । मनुस्तु प्रकारान्तरमाह,—

"तिर्य्यग्यवोदराण्यष्टावूर्द्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥
वितस्तिद्वितयं हस्त इति स्वायम्भुवोऽब्रवीत् ।
दशहस्तेन दण्डेन त्रिंशतन्तु समन्ततः ।
पञ्च चाभ्यधिकं हत्वा एतद्गोचर्म कीर्त्तितम्"—इति ॥

वृद्धमनुः,—

"सप्तहस्तेन दण्डेन त्रिंशद्दण्डं निवर्त्तनम् ।
तान्येव दश गोचर्म दत्वा पापैः प्रमुच्यते"—इति ।

पापक्षयकामिनां गोचर्मदानं विधत्ते,—

**ब्रह्महत्यादिभिर्मर्त्त्यो मनोवाक्कायकर्मजैः ।**
**एतद्गोचर्मदानेन मुच्यते सर्व्वकिल्बिषैः ॥४९॥ इति ।**

मनोवाक्कायानां कर्माणि व्यापाराः, तेभ्योजातानि मनोवाक्-कायकर्मजानि। न चैतेषां त्रयाणामन्याधिकभावेन व्यवस्थितानां साधारणोनिवृत्तिहेतुरयुक्त इति वाच्यम्। अत्यन्तावृत्तानां मानसानामीषदावृत्तानां वाचिकानां सकृत्कृतानां कायिकानां च समत्वसम्भवात्।

दानस्य फलातिशयहेतुं पात्रविशेषमाह,—

**कुटुम्बिने दरिद्राय श्रोत्रियाय विशेषतः।**
**यद्दानं दीयते तस्मै तद्दानं शुभकारकम् ॥५०॥ इति।**

विशेषतइति पदं कुटुम्बित्वादिभिस्त्रिभिर्विशेषणैः प्रत्येकं सम्बध्यते। तथाच सति यस्य महत् कुटुम्बं, दारिद्र्यञ्चाधिकं, बहु-वेदपाठेन श्रोत्रियत्वमतिशयितं, तादृशाय दीयमानं शुभस्य फलातिशयस्य कारकं भवति।

परकीयभूम्यपहरणे प्रत्यवायाधिक्यमाह,—

**वापीकूपतटाकाद्यैर्वाजपेयशतैरपि।**
**गवां कोटिप्रदानेन भूमिहर्त्ता न शुध्यति॥५१॥ इति।**

वाप्यादीनामेकैकस्य शुद्धिहेतुत्वं शास्त्रान्तरेषु प्रसिद्धम्। तादृशैर्बहुभिरपि न शुद्ध्यतीत्युक्तः प्रत्यवायाधिक्यं प्रतीयते। न च सर्वात्मना शुद्धिर्नास्तीत्येवंपरमिदं वचनं, तथा सति सुवर्णस्तेयधर्मेषु श्रावितशुद्धिषु मध्ये तत्पाठानुपपत्तेः।

अथ रजस्वलाविषये कञ्चिद्विशेषमाह,—

**अष्टादशदिनादर्वाक् स्नानमेव रजस्वला ।**
**अतऊर्द्ध्वं त्रिरात्रं स्यादुशना मुनिरब्रवीत् ॥५२॥ इति ।**

रजोदर्शनमारभ्य चतुर्थे दिवसे स्नाता स्त्री पुनस्तत आरभ्याष्टादशदिनादर्वाग्रजस्वला भवति, तदा स्नानमेवाचरेत् । न तु त्रिरात्राशौचं कुर्य्यात् । अष्टादशदिनादूर्द्ध्वं रजोदर्शने त्रिरात्राशौचं कर्त्तव्यम् ।

रजस्वलाप्रसङ्गेन शुद्धिस्थानां चण्डालादीनां व्यवधाने देशपरिमाणमाह,—

**युगं युगद्वयं चैव त्रियुगञ्च चतुर्युगम् ।**
**चण्डालसूतिकोदक्यापतितानामधः क्रमात् ॥५३॥ इति ।**

अधः क्रमात्, विपरीतक्रमादित्यर्थः । ततश्चैवं योजनीयम् । पतितस्य व्यवधानमेकेन युगेन, उदक्याया युगद्वयेन, सूतिकायायुगत्रयेण, चण्डालस्य युगचतुष्टयेनेति । युगपरिमाणं लोकव्यवहारादवगन्तव्यम्(१) ।

उक्तव्यवधानाभावे शुद्धिमाह,—

**ततः सन्निधिमात्रेण सचेलं स्नानमाचरेत् ।**
**स्नात्वाऽवलोकयेत् सूर्यमज्ञानात् स्पृशते* यदि॥५४॥इति**

मात्रशब्देन स्पर्शोव्यावर्त्त्यते । स्पर्शाभावे स्नानमेव । स्पर्शेऽप्यका-

* स्पृश्यते,—इति मु० ।

(१) युगोरथहलाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च,—इति मेदिनिः ।

मकृते स्नानं सूर्यावलोकनं च। कामकृते द्वैगुण्यं, मुहूर्त्तान्तरं वा द्रष्टव्यम्। सङ्कटादिषु सत्यपि सन्निधौ स्पर्शाभावे स्नानाभावः, यथासम्भवव्यवधानस्य सम्बर्त्तेनाभ्युपगतत्वात्।

"सङ्कटे विषमे चैव दुर्गे चैव विशेषतः।
हट्टपट्टनमार्गे च सम्भवन्तु यथा भवेत्"॥

अथ तटाकादौ पशुवत् मुखेन जलपानं निषेधति,—

**विद्यमानेषु पात्रेषु* ब्राह्मणो ज्ञानदुर्बलः।**
**तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम्॥५५॥इति।**

"स्नानानि पञ्च पुण्यानि"—इत्यारभ्य, "श्वयोनौ जायते ध्रुवम्"—इत्येतदन्तेन ग्रन्थसन्दर्भेण योऽयमाचारशेषः† प्रतिपादितः, सर्वस्य तस्य प्रपञ्चः पूर्वकाण्डे प्रायेण कृत इति नात्र पुनः प्रपञ्चितः‡। न चैवं सति पुनरुक्तिः शङ्कनीया, मूलवचनेषु तत्र तत्र सङ्गृहीतार्थस्यात्र विवृतत्वात्।

अथ प्रायश्चित्तकाण्डशेषः। तत्र केनचिन्निमित्तेन शपथमुल्लङ्घितवतः प्रायश्चित्तमाह,—

**यस्तु क्रुद्धः पुमान् ब्रूयाद्भार्य्यायाः मातृगम्यताम्।**
**पुनरिच्छति चेदेनां विप्रमध्ये तु श्रावयेत्॥५६॥**
**श्रान्तः क्रुद्धस्तमोऽन्धोवा क्षुत्पिपासाभयार्दितः।**
**दानं पुण्यमकृत्वा तु प्रायश्चित्तं दिनत्रम्॥५७॥**

---

* हस्तेषु,—इति मु०।

† विशेषः,—इति मु०।

‡ प्रपञ्च्यते,—इति मु०।

**उपस्पृशेत् त्रिषवणं महानद्योस्तु सङ्गमे ।**
**चीर्णान्ते चैव गां दद्यात् ब्राह्मणान् भोजयेद्दश॥५८॥ इति।**

यः केनचिन्निमित्तेन क्रुद्धः सन् स्वभार्याया अगम्यतां प्रतिजानीयात्; अतः परं त्वां न गमिष्यामि त्वं मम माता भगिनीति, पुनरपि कालान्तरे क्रोधोपशमे सति एनां गन्तुं यदि इच्छति, तदा परिषदग्रे स्वकीयं पापं विनिवेदयेत्। अहं शपथप्रतिज्ञावेलायां ग्रामान्तरगमनेन वा गृहव्यापारेण वा श्रान्त आसम्। मदीयवचस्युल्लङ्घिते सति क्रुद्धोऽभूवम्। तथा अपराधाभावेऽपि तमसा भ्रान्त्या अन्धः परामर्शरहितोऽभूवम्। क्षुधा पिपासया राजादिभयेन वा पीडित आसम्। अतः श्रमादिदोषप्रयुक्तमिदमगम्यत्वं प्रतिज्ञातं, न तु विवेकपूर्वम्। तस्मादस्य पापस्य प्रायश्चित्तमनुशासन्तु भवन्तः,—इति। यस्तु दानं करिष्यामीति शपथपूर्वं प्रतिज्ञाय तथैवाशया समागताय ब्राह्मणाय किमपि न प्रयच्छति। तथा, काशीयात्रादिकं सङ्कल्प्य यथा कथञ्चित्* किञ्चिद्दूरं गत्वा पश्चादश्रद्धां प्राप्तस्तत् पुण्यं न करोति। तेषु त्रिषु† निमित्तेषु विप्रैर्निर्दिष्टमिदं प्रायश्चित्तमाचरितव्यम्। द्वयोर्महानद्योः सङ्गमे गत्वा त्रिषवणस्नानपूर्वकं त्रिरात्रोपवासं कुर्य्यात्, चतुर्थदिने गां दद्यात्, दश ब्राह्मणांश्च भोजयेत्। एतेष्वाद्यनिमित्ते वर्णभेदेन प्रायश्चित्तमाह यमः,—

---

* यथाविधि,—इति मु० ।

† तेष्वतीतेषु,—इति शा० स० ।

"स्वभार्य्यान्तु यदा क्रोधादगम्येति नरो वदेत्।
प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान्नव॥
षड्रात्रन्तु चरेद्वैश्यस्त्रिरात्रं शूद्रश्चाचरेत्*"—इति।

'एतस्य कार्य्यस्याकरणे चतुर्षु वर्णेष्वन्यतमं हतवानस्मि'—इति शपथं कृत्वा यः तत्कार्य्यं न करोति, तस्य प्रायश्चित्तं यमएवाह,—

"विप्रस्य वधसंयुक्तं कृत्वा तु शपथं मृषा।
ब्रह्महा यावकान्नेन व्रतं चान्द्रायणं चरेत्॥
क्षत्रियस्य पराकन्तु प्राजापत्यं तथा विशः।
वृषलस्य त्रिरात्रन्तु व्रतं शूद्रहणश्चरेत्॥
केचिदाङ्करपापन्तु वृषलस्य वधं मृषा।
नैतन्मम मतं यस्मात् कृतस्तेन† भवत्यसौ"—इति॥

मनुरप्यनृतप्रायश्चित्तमाह,—

"वाग्देवतैस्तु चरुभिर्यजेरंस्ते सरस्वतीम्।
अनृतस्यैनसस्तत्र कुर्वाणा निष्कृतिं पराम्॥
कुष्माण्डैर्वाऽपि जुहुयाद्घृतमग्नौ यथाविधि।
उदित्यृचा च वारुण्या तृचेनाब्दैवतेन च"—इति॥

प्रजापतिः,—

"अनृती सोमपः कुर्य्यात् त्रिरात्रं परमं तपः।
पूर्णाहुतीर्वा जुहुयात् सप्तवत्या घृतेन तु‡"—इति॥

---

* वैश्यस्त्रिरात्रोपवासं षड्रात्रं शूद्रश्चाचरेत्,—इति शा०।

† अतस्तेन,—इति मु०।

‡ पूर्णाहुतिश्च जुहुयात् सप्त तेन घृतेन हि,—इति शा०।

प्रतिश्रुत्यानृतोक्तौ हारीतआह,—

"प्रतिश्रुत्यानृतं ब्रूयात् मिथ्या सत्यमथापिवा ।

स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतम्"—इति ॥

ब्रह्मचारिविषये गर्ग आह,—

"त्रिरात्रमेकरात्रं वा अनृतोक्तौ व्रतं चरेत् ।

मांसं भुक्त्वा ब्रह्मचारी पुनः संस्कारमाचरेत् ॥

अभ्यासे चैन्दवं चैव नैष्ठिको द्विगुणं चरेत् ।

वनस्थस्त्रिगुणं कुर्य्यात् यतिः कुर्य्यात् चतुर्गुणम् ॥

मांसाशनेऽनृतोक्तौ च शवनिर्हरणे तथा"—इति ।

क्वचित्तु निमित्तविशेषेणानृतमपि बुद्धिपूर्वकं वक्तव्यम् । तदाह याज्ञवल्क्यः,—

"वर्णिनान्तु बधो यत्र तत्र साक्ष्यनृतं वदेत् ।

तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः"—इति ॥

सत्याभिभाषणे गुरुतरपापस्य वर्णिबधस्य निमित्तता प्रसज्येत । तत्पापं मा भूदिति स्वल्पपापमनृतं वक्तव्यम् । तस्य शुद्धये सारस्वतचरुर्निर्वाप्यः । वर्णिबधवदात्मबधप्राप्तावप्यनृतं वदेत् । तदाह ब्राह्मः,—

"यत्रोक्तावात्मनः पीडा नितान्तं भवतीति चेत् ।

तत्र वक्तव्यमनृतं व्याघ्रस्य वचनं यथा"—इति ॥

दुर्ब्राह्मणगृहभोजने प्रायश्चित्तमाह,—

**दुराचारस्य विप्रस्य निषिद्धाचरणस्य च ।**

**अन्नं भुक्त्वा द्विजः कुर्य्यात् दिनमेकमभोजनम् ॥५९॥** इति ।

दुराचारत्वं विहिताननुष्ठानम्। यो विप्रो विहितं नानुतिष्ठति निषिद्धं चाचरति, तस्य गृहे भुक्त्वा दिनमेकमुपवसेत्।

तदशक्तौ प्रायश्चित्तान्तरमाह,—

**सदाचारस्य विप्रस्य तथा वेदान्तवेदिनः।**
**भुक्त्वाऽन्नं मुच्यते पापादहोरात्रान्तरान्नरः॥६०॥ इति।**

एकस्मिन् दिने सकृदसकृद्वा दुर्ब्राह्मणगृहे भोजनेन कृतं यत्पापं, तस्य सदाचारविप्रगृहे वेदान्तिगृहे वा भोजनेन शुद्धिः। यद्वा, एकस्मिन् दिने सम्प्राप्तं यत् पिपीलिकावधादिक्षुद्रपापजातं, तत् सर्वं शिष्टान्नभोजनेन शुद्ध्यति। पवित्रगृहान्नभोजनेन पापविशुद्धिं बोधायनोऽप्याह,—

"भैक्षाहारोऽग्निहोत्रिभ्यो मासेनैकेन शुद्ध्यति।
यायावरवनस्थेभ्यो दशभिः पञ्चभिर्दिनैः॥
एकाहं धनिनोऽन्नेन दिनेनैकेन शुद्ध्यति।
कपोतव्रतनिष्ठस्य पीत्वाऽपः शुद्ध्यति द्विजः"—इति॥

मरणकालोपहतेः* प्रायश्चित्तमाह,—

**ऊर्द्धोच्छिष्टमधोच्छिष्टमन्तरिक्षमृतौ तथा।**
**कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणे तथा॥६१॥ इति।**

मरणकाले वान्त्यादिकमूर्द्धोच्छिष्टं, मूत्रादिकमधोच्छिष्टम्। तयोरन्यतरत् यदा सम्पद्यते, तदा संस्कर्त्ता पुत्रादिर्धनादिना

* कालोपहते,—इति मु०।

प्रत्याम्नायेन प्राजापत्यत्रयं* कुर्य्यात् । मज्ज्यादौ मरणमन्तरिचमृतिः । रजस्वलासूतिकामरणमाशौचमरणम् । तस्मिन् द्विविधे मरणे कृच्छ्रत्रयं कुर्य्यात् ।

प्राजापत्यकृच्छ्रस्य चतुरः प्रत्याम्नायानाह,—

**कृच्छ्रं देव्ययुतं चैव प्राणायामशतद्वयम् ।**
**पुण्यतीर्थेऽनार्द्रशिरःस्नानं द्वादशसंख्यया ॥६२॥**
**द्वियोजने तीर्थयात्रा कृच्छ्रमेकं प्रकल्पितम् । इति ।**

देवी गायत्री, तस्या अयुतसंख्याकोजपो देव्ययुतम् । स एकः प्रत्याम्नायः । प्रणायामानां शतद्वयं द्वितीयः प्रत्याम्नायः । अनार्द्रं शिरोयस्यासावनार्द्रशिराः, तस्य स्नानमनार्द्रशिरःस्नानम् । सकृत्स्नात्वा तदङ्गानुष्ठानञ्च विधाय केशान् शोषयित्वा ततो द्वितीयं स्नानमाचरेत् । एवंविधं स्नानद्वादशकं पुण्यतीर्थे कृतं तृतीयः प्रत्याम्नायः । पुण्यतीर्थमुद्दिश्य योजनद्वयगमनं चतुर्थः । तथोदकवासादयोऽपि प्रत्याम्नाया अवगन्तव्याः । तदुक्तं चतुर्विंशतिमते,—

"कृच्छ्रोऽयुतं च गायत्र्या उदवासस्तथैवच ।
धेनुप्रदानं विप्राय सममेतच्चतुष्टयम् ॥
तिलहोमसहस्रन्तु वेदाध्ययनमेवच† ।
विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैवच ॥

---

* प्राजापत्यद्वयं,—इति मु० ।

† वेदस्याध्यायमेवच,—इति श्रा० ।

अन्यानि वा पवित्राणि सामान्याकर्मनीषिणः"—इति ।

अथ रेतःस्खलने प्रायश्चित्तमाह,—

**गृहस्थः कमतः कुर्य्याद्रेतसः स्खलनं भुवि ॥६३॥**
**सहस्रन्तु जपेद्देव्याः प्राणायामैः त्रिभिः सह । इति ।**

अकामकृते याज्ञवल्क्य आह,—

"यन्मेऽद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत् ।
स्तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत्"—इति ॥

यन्मेऽद्य रेत इत्येकस्या ऋचः प्रतीकमिदम् । पुनर्मामैत्विन्द्रियमित्युपरितनो मन्त्रः । तेनाभ्यां मन्त्राभ्यामनामिकया रेत आदाय स्तनयोः भ्रुवोर्मध्यमुपस्पृशेत् । यतीनां वनवासिनां च प्रयत्नोत्सर्गे कण्वोक्तं द्रष्टव्यम्,—

"यत्नोत्सर्गं गृही कृत्वा वारुणीभिरुपस्पृशेत् ।
वानप्रस्थो यतिश्चैव चरेच्चान्द्रायणत्रयम् *"—इति ॥

स्वप्ने तु काश्यप आह,—

"सूर्य्यस्य त्रिर्नमस्कारं स्वप्ने सिक्त्वा गृही चरेत् ।
वानप्रस्थो यतिश्चैव त्रिः कुर्य्यादघमर्षणम्"—इति ॥

ब्रह्मचारिणं प्रति मनुराह,—

"स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।
स्नात्वाऽर्कमर्चयित्वा तु पुनर्मामित्यृचं जपेत्"—इति ॥

भयादौ प्रजापतिराह,—

---

* चरेच्चान्द्रायणव्रतम्,—इति मु० ।

"भये रोगे तथा स्वप्ने सिक्ता शुक्रमकामतः ।
आदित्यमर्च्चयित्वा तु पुनर्मामैत्यृचं जपेत्"—इति ॥

नैष्ठिकस्य हारीत आह,—

"उपकुर्वाणस्तु* यः कुर्य्यात् कामतोऽकामतोऽपिवा ।
तदेव द्विगुणं कुर्य्यात् ब्रह्मचारी च नैष्ठिकः"—इति ॥

अथ ब्रह्मवधस्य महापातकस्य प्रायश्चित्तमाह,—

**चतुर्विद्योपपन्ने तु विधिवद् ब्रह्मघातके ॥ ६४ ॥**
**समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् । इति ।**

ऋगादयस्तत्त्वो विद्याश्चतुर्विद्याः, ताभिरुपपन्नस्तदध्ययनानुष्ठानवान् । एतेन "चतुर्विद्योपपन्नेन द्वाभ्यां च"—इत्यादिरङ्गिरसा प्रोक्ता सर्वा परिषदुपलक्ष्यते । समुद्रे दाशरथिना बद्धः सेतुः समुद्रसेतुः, तद्यात्रां ब्राह्मणघातके पुरुषे यथाविध्यनुष्ठेयत्वेन निर्दिशेत् ।

विधिवदित्युक्तं, कोऽसौ विधिरित्याकाङ्क्षायां तदितिकर्त्तव्यतामाह,—

**सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत्† ॥ ६५ ॥**
**वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः । इति ।**

चतुर्णां वर्णानां यानि कर्माणि शास्त्रविहितानि, तेभ्यो विरु-

---

* उपकुर्व्वंस्तु,—इति मु० ।
† समाचरन्,—इति मु० ।

ष्ठानि विकर्म्माणि। तेषु तात्पर्य्येण तिष्ठन्तीति विकर्मस्थाः। तान् वर्जयित्वा यथाशास्त्रं वर्त्तमानाच्चातुर्वर्ण्यात् सेतुबन्धमार्गे भिक्षां चरेत्। छत्रोपानद्विवर्जित इति न केवलं भिक्षावेलायां, किन्तु गमनेऽपि द्रष्टव्यम्।

भिक्षमाणेन वक्तव्य*मुक्तिप्रकारमाह,—

**अहं दुष्कृतकर्मा वै महापातककारकः ॥६६॥**
**गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः। इति।**

पापप्रख्यापनस्य प्रायश्चित्ताङ्गत्वात् प्रतिभिक्षागृहमहं दुष्कृतकर्मेत्यादि वाक्येन स्वपापं प्रख्यापयेत्। अप्रख्यापने बाधमाहाङ्गिराः,—

"कृत्वा पापं न गूहेत गूह्यमानं विवर्द्धते"—इति।

दुष्कृतकर्मा महापातककारको ब्रह्मघातक इति पदत्रयस्य महासामान्यावान्तरसामान्यतद्विशेषवाचित्वादपुनरुक्तिः[१]।

अध्वश्रान्तस्यावस्थातुं देशविशेषमाह,—

---

* कर्त्तव्य,—इति मु०।

---

(१) दुष्कृतकर्म्मा,—इति पापत्वमहासामान्यवाचि पदम्। महापातककारक इति महापापत्वरूपावान्तरसामान्यवाचि पदम्। ब्रह्मघातक इति ब्रह्मवधपापत्वरूपावान्तरसामान्यविशेषवाचि पदम्। सामान्यप्राप्तेस्तु विशेषकथनमपुनरुक्तमेव। "आचार्य्याणामियं शैली यत् सामान्येनाभिधाय तदेव विशेषेण विवृणोति"—इत्युक्तेरिति भावः।

**गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च ॥६७॥**
**तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च । इति ।**

बहूनां गवां ग्रामे स्थापयितुमशक्यत्वेनारण्ये स्थापनाय कल्पितो व्रजप्रदेशो गोकुलम् । यत्र व्याघ्रादिभयात् ग्रामाद्बहिर्निवासोऽशक्यः, तत्र ग्रामे नगरे वा प्रविश्य गोशालादेवताऽऽयतनादौ पुण्यप्रदेशे निवसेत् । असति व्याघ्रादिभ्यो भये तपोवनादिषु निवसेत् । नदीप्रस्रवणेभ्योऽन्यानि तीर्थानि पम्पासरोवरादीनि ।

न केवलं भिक्षाटनेष्वेव पापप्रख्यापनं, किन्तु निवासस्थानेष्वपीत्याह,—

**एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम् ॥६८॥**
**दशयोजनविस्तीर्णं शतयोजनमायतम् ॥**
**रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम् ॥६९॥**
**सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति । इति ।**

यथोक्तप्रकारेण पापप्रख्यापनपुरःसरं यात्रां कृत्वा सेतौ दृष्टे सति तत्पापक्षयः ।

सेतुदर्शनानन्तरं कर्त्तव्यमाह,—

**सेतुं दृष्ट्वा विशुद्धात्मा त्ववगाहेत सागरम् ॥७०॥ इति ।**

स्पष्टोऽर्थः ।

सेतुं द्रष्टुमशक्नुवतो भूपतेः पक्षान्तरमाह,—

**यजेत वाऽश्वमेधेन राजा तु पृथिवीपतिः ॥ इति ।**

अश्वमेधेऽप्यशक्तस्य तदुपासनं वेदितव्यम्। तथा च तैत्तिरीयब्राह्मणे श्रूयते। "सर्व्वं वा एतेन पाप्मानं देवा अतरन्नपिवा एतेन ब्रह्महत्यामतरन्, सर्वं पाप्मानन्तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते यउ चैनमेवं वेद"—इति। तदुपासनं च, "उषा वा अश्वस्य"—इत्यादौ वाजसनेयिब्राह्मणे तैत्तिरीयब्राह्मणे च प्रपञ्चितम्।

सेतुयात्रां समाप्य पुनः प्रत्यागतस्य कर्त्तव्यमाह,—

पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति ॥ ७१ ॥
सह पुत्रकलत्रैश्च* कुर्य्याद् ब्राह्मणभोजनम् ॥
गाश्चैवैकशतं दद्यात् चातुर्वैद्येषु† दक्षिणाम् ॥ ७२ ॥
ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते। इति ॥

ब्राह्मणानां प्रसादोनाम, विपापः शुद्धस्त्वमसीत्येवमाद्युक्तिः। इदञ्च व्रतं गुणहीनस्य ब्राह्मणस्य वधे द्रष्टव्यम्। अस्मिन्नेव विषये व्रतान्तरमाह याज्ञवल्क्यः,—

"पात्रे धनं वा पर्य्याप्तं दत्वा शुद्धिमवाप्नुयात्"—इति।

विद्यातपोयुक्ते पात्रे गोभूहिरण्यादिकं जीवनोपायपर्य्याप्तं दद्यात्। वाशब्देन सर्वस्वं सपरिच्छदं गृहं वा दद्यात्। तदाह मनुः,—

---

* सपुत्रः सह भृत्यैश्च,—इति मु०।

† चातुर्वैद्ये तु,—इति मु०।

"सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम्"—इति ॥

अपुत्रस्य सर्वस्वदानं, सपुत्रस्य सपरिच्छदगृहदानमिति व्यवस्था। अथान्यमुनिप्रणीतानां व्रतविशेषाणां व्यवस्थां वर्णयामः। तत्र याज्ञवल्क्यः,—

"शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्"—इति ॥

स्वव्यापादितब्राह्मणशिरःकपालध्वजवान् । "कृत्वा शवशिरोध्वजम्"—इति मनुस्मरणात् । "ब्राह्मणो ब्राह्मणं घातयित्वा तस्यैव शिरःकपालमादाय तीर्थान्यनुसञ्चरेत्"—इति शातातपस्मरणाच्च । एतदुभयं पाणिनैव ग्राह्यम्, । "खट्वाङ्गपाणि"—इति गौतमस्मरणात् । खट्वाङ्गशब्देन दण्डारोपितशिरःकपालात्मको ध्वजो गृह्यते । भिक्षार्थं त्वन्यदेव मृत्कपालं ग्राह्यम् । "मृण्मयकपालपाणिः भिक्षायै ग्रामं प्रविशेत्"—इति गौतमस्मरणात्। तथा शङ्खोऽपि। "ब्रह्महा परिषदाऽनुमतः खट्वाङ्गी गर्दभाजिनी मृण्मयपात्रपतितभिक्षान्नभोजी स्वकर्मविख्यापनेन* चरेद्भैक्षमेककालाहारः शून्यागारनदीपर्वतवृक्षमूलगुहानिकेतनः, सएवं द्वादशवर्षे शुद्धिमाप्नोति" —इति । वनादिवासिना तेन भवितव्यम्। यथाऽऽह मनुः,—

"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ।
कृतवापनो वा निवसेद् ग्रामान्ते गोव्रजेऽपिवा ॥

---

* स्वकर्म्म विख्यापयन्,—इति मु० ।

आश्रमे वृक्षमूले वा सर्व्वभूतहिते रतः"—इति ।

कृतवापनो वेति वाशब्देन जटाधारणेन सह विकल्पोऽवगम्यते । अतएव सम्वर्त्तः,—

"ब्रह्महा द्वादशाब्दानि वालवासा* जटी ध्वजी"—इति ।

लोहितमृण्मयखण्डशरावेण भिक्षा ग्राह्या । तथा चापस्तम्बः । "लोहितकेन मृण्मयखण्डशरावेण भिक्षार्थे ग्रामं प्रविशेत्"—इति । अत्र भक्ष्यं लभ्यते इति सङ्कल्पमकृत्वा भैक्षमाचरेत् । तदाह वशिष्ठः । "सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षमेककालाहारः"—इति । इदञ्च भैक्षमशक्तविषयम् । तथा च सम्वर्त्तः,—

"ब्रह्मघ्नस्तु वनं गच्छेद्वनवासी जटी ध्वजी ।
वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः ॥
भिक्षार्थी विचरेद्ग्रामं वन्यैर्यदि न जीवति ।
चातुर्वर्ण्यं चरेद्भैक्षं खट्वाङ्गी संयतः पुनः ॥
भैक्षं चैव समादाय वनं गच्छेत्ततः पुनः ।
वनवासी क्षपः स्पृश्येत् सदाकालमतन्द्रितः ॥
ख्यापयन्नात्मनः पापं ब्रह्मघ्नः पापकृत्तमः ।
अनेन तु विधानेन द्वादशाब्दं व्रतं चरेत्"—इति ॥

नियमान्तराण्याह यमः,—

"अथ वै ब्रह्महत्यायां खट्वाङ्गी मितभोजनः ।
मण्मयेन कपालेन स्वकर्म ख्यापयंस्तथा† ॥

* वल्कवासा,—इति मु० ।

† श्रावयंस्तथा,—इति शा० ।

ब्राह्मणावसथान् सर्वान् देवागाराणि वर्जयेत् ।
शोचन् विनिन्दन्नात्मानं संस्मरन् ब्राह्मणञ्च तम् ॥
चरेद् व्रतं यथोद्दिष्टं देवब्राह्मणपूजकः ।
एवं दृढ़व्रतोनित्यं सत्यवादी जितेन्द्रियः ॥
सप्तागाराण्यपूर्वाणि यान्यसङ्कल्पितानि च ।
सञ्चरेत्तानि शनकैर्विधूमे भुक्तवर्जिते* ॥
ब्रह्मघ्नो देहि मे भिक्षामेनोऽभिख्याप्य सञ्चरेत् ।
एककालं चरेद्भैक्षमलब्धोपवसेद्दिनम् ॥
एवं सञ्चरमाणस्तु ब्रह्महत्यां नुदन् सदा ।
पूर्णे तु द्वादशे वर्षे ब्रह्महत्यां व्यपोहति"—इति ॥

ब्रह्मचर्य्यादिनियममाह गौतमः । "खट्वाङ्गी कपालपाणिर्द्वादश संवत्सरान् ब्रह्मचारी भिक्षायै ग्रामं प्रविशेत् कर्माचक्षाणः यथोपक्रामेत्† सन्दर्शनादार्यस्य स्थानासनाभ्यां विहरन् सवनेषूदकस्पर्शी शुद्ध्येत्"—इति । काश्यपोऽपि‡,—

"पवित्रपाणिर्दण्डी च पक्षदन्तोरजस्वलः ।
तीर्थवासी कुशाच्छादी जटिलो ब्रह्महा भवेत्"—इति ॥

इयं विशुद्धिरकामकृतब्राह्मणवधविषया । तथा च मनुरेतद्द्वादशवार्षिकमुपक्रम्य बहूनि व्रतान्यभिधायान्ते निगमयति,—

---

* भुक्तिवर्जितः,—इति शा० स० ।

† बधोपक्रमेत्,—इति मु० ।

‡ कण्वोऽपि,—इति मु० ।

"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते"—इति॥

आवृत्तब्रह्मवधे चतुर्थात् प्रागव्रतमप्यावर्त्तनीयम्। तदाहतुर्मनु-देवलौ,—

"विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं चरेत्।
तृतीये त्रिगुणं चैव चतुर्थे नास्ति निष्कृतिः॥
यस्मादनभिसन्धाय पापं कर्म सकृत् कृतम्।
तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिः"—इति।

तदेतद् देवलेन सकृदनुष्ठानस्य सकृत्कृतपापविषयत्वाभिधानात्, प्रतिनिमित्तं नैमित्तिकमावर्त्तनीयमिति न्यायोच्चावृत्तौ द्वैगुणादि-सिद्धिः। यस्तु न साचाद् ब्राह्मणं हन्ति; किन्तु तिरस्कारादिद्वारा तन्निमित्ततामापद्यते, तं प्रति सुमन्तुराह,—

"तिरस्कृतो यदा विप्रो हत्वाऽऽत्मानं मृतो यदि।
निर्गुणः सहसा क्रोधाद् गृहचेत्रादिकारणात्॥
त्रैवार्षिकं व्रतं कुर्य्यात् प्रतिलोमां सरस्वतीम्।
गच्छेद्वाऽपि विशुद्ध्यर्थं तस्य पापस्येति निश्चितम्"—इति॥

निर्निमित्तं भर्त्सने मनुवाह,—

"अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं निर्गुणोपरि।
क्रोधाद्वै म्रियते यस्तु निर्निमित्तन्तु भर्त्सितः॥
वत्सरत्रितयं कुर्य्यान्नरः कृच्छ्रं विशुद्धये"—इति।

यदा पुनर्निमित्ती अत्यन्तगुणवानात्मघाती चात्यन्तनिर्गुणः, तदैकवर्षमेव ब्रह्महत्याव्रतं कुर्य्यात्।

"केशश्मश्रुनखादीनां कृत्वा तु वपनं वने ।
ब्रह्मचर्य्यं चरन् विप्रो वर्षेणैकेन शुद्ध्यति"—इति

तेनैवाभिधानात् । यथा हन्ता प्रायश्चित्ती, यथा वा निमित्ती, तथैवानुमन्त्रादयोऽपि प्रायश्चित्तभाजः । तथाच पैठीनसिः,—

"हन्ता मन्त्रोपदेष्टा च तथा सम्प्रतिपादकः ।
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥
आश्रयः शस्त्रदाता च भक्तदाता विकर्म्मिणाम् ।
उपेक्षकः शक्तिमांश्चेद् दोषवक्ताऽनुमोदकः ॥
अकार्य्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेत् ।
यथाशक्त्यनुरूपञ्च दण्डन्तेषां प्रकल्पयेत्"—इति ॥

एतेषां मध्ये यो यो वधस्य प्रत्यासन्नस्तस्य तस्याधिकं प्रायश्चित्तं, विप्रकृष्टस्य तदपेक्षया न्यूनं प्रायश्चित्तं कल्पनीयम् । साक्षात्कर्त्तुरपि वयोविशेषे प्रायश्चित्तस्य ह्रासो भवति । तदाह यमः*,—

"अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति व्याधितश्च तथा स्त्रियः†"—इति ॥

क्वचित्कर्त्तुः प्रतिनिधिमाह सएव,—

"अपूर्णैकादशाब्दस्य चतुर्व्वर्षाधिकस्य च ।
प्रायश्चित्तं चरेद् भ्राता पिताऽन्योवाऽथ बान्धवः"—इति ।

यत्तु तेनैवोक्तम्,—

---

* मनुः,—इति मु० ।

† स्त्रियोरोगिणएव च,—इति मु० ।

"अतो बालतरस्यास्य नापराधो न पातकम्।

राजदण्डो न तस्यास्ति प्रायश्चित्तञ्च नेष्यते"—इति॥

तत् प्रायश्चित्ताल्पत्वाभिप्रायेण, न पुनः सर्वात्मना तदभावप्रतिपादनपरम्।

"पादो बालेषु दातव्यः सर्ववर्णेष्वयं विधिः"—इति

विष्णुना बालस्य पादाभिधानेन बालतरस्य ततोऽप्यल्पत्वावगमात्। यद्वा, माभूद्बालतरस्य पापं, वचनेन साक्षान्निवारणात्। न ह्यस्ति वचनस्यातिभारः। यत्पुनर्मध्यमाङ्गिरोवचनम्,—

"गवां सहस्रं विधिवत् पात्रेभ्यः प्रतिपादयेत्।

ब्रह्महाऽपि प्रमुच्येत सर्वपापेभ्यएव च"—इति॥

तच्च,

"द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्"—

इत्येतद्वाक्यविहितद्विगुणव्रताचरणाशक्तस्य वेदितव्यम्। प्रायश्चित्तस्यातिगुरुत्वात्। यदपि शङ्खवचनम्। "प्रमाप्य द्वादशसंवत्सरान् षट्त्रिंशार्द्धसंवत्सरं च व्रतान्यादिशेत्। तेषामन्ते गोसहस्रं तस्यार्द्धमर्द्धं च दद्यात्, सर्व्वेषां वर्णानामानुपूर्व्येण"—इति। तदाचार्य्यादिहननविषयम्।

तथा च दक्षः,—

"समब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।

आचार्य्ये शतसाहस्रं सोदर्य्ये दत्तमक्षयम्॥

समद्विगुणसाहस्रमानन्त्यञ्च यथा क्रमात्।

दाने फलविशेषः स्यात् हिंसायां तदेव हि"—इति॥

नन्वेवं वचनान्तरं साक्षिलेनोदाहृत्य यच विशेषव्यवस्थोच्यते,

तत्र स्याऽस्तु ; यत्र त्वन्तरेणैव वचनान्तरं व्यवस्थोच्यते, तत्र स्व-कपोलकल्पिता कथं श्रद्धेयेति चेत् । मैवम् । स्मृतिकारैः कल्पनीयत्वाभिधानात् । तथा च देवलः,—

"जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा ।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्"—इति ॥

यदिदं, द्वादशवार्षिकं ब्रह्महत्याव्रतं, तद्द्वादशवर्षं सम्पूर्णं वा समापनीयम्, अर्व्वाग्वा ब्राह्मणत्राणादिनिमित्तलाभे। तथा च शङ्खः। "द्वादशे वर्षे शुद्धिमाप्नोति, अन्तरा वा ब्राह्मणं मोचयित्वा, गवां द्वादशानां परित्राणात् सद्योवा अश्वमेधावभृथस्नानाद्वा पूतो भवति"—इति । एवं च सति यद् याज्ञवल्क्येनोक्तम्,—

"ब्राह्मणस्य परित्राणात् गवां द्वादशकस्य वा ।
तथाऽश्वमेधावभृथस्नानात् शुद्धिमवाप्नुयात् ।
दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापिवा ॥
दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महा शुचिः ।
आनीय विप्रसर्वस्वं हृतं घातितएववा ॥
तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि न दुष्यति"—इति ।

न तद्व्रतान्तराभिप्रायं, किन्तु समाप्तिकथनाभिप्रायम्। व्रतान्तराणि मनुराह,—

"लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयाऽऽत्मनः ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥
यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन वा ।
अभिजिद्विश्वजिद्भ्यां वा त्रिवृताऽग्निष्टुताऽपिवा ॥

जपन् वाऽन्यतमं वेदं योजनानां शतं व्रजेत्।
ब्रह्महत्याऽपनोदाय मितभुङ्नियतेन्द्रियः।
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत्॥
धनं वा जीवनायालं गृहं वा सपरिच्छदम्।
हविष्यभुग्वाऽनुचरेत् प्रतिश्रोतः सरस्वतीम्॥
जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम्"—इति।

एते सर्वे पक्षाः कामकाराकामकारविद्वदविद्वद्विषयत्वेन व्यवस्थापनीयाः। कामकृतात्यन्ताभ्यासे तु याज्ञवल्क्य आह,—

"लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै तनुम्।
मज्जान्तं जुहुयाद्वाऽपि मन्त्रैरेभिर्यथाक्रमम्"—इति॥

तत्राष्टौ मन्त्रानाह वसिष्ठः। "लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं नाशय* इति प्रथमम्। त्वचं मृत्योर्जुहोमि त्वचा मृत्युं नाशय इति द्वितीयम्। लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं नाशय इति तृतीयम्। मांसं मृत्योर्जुहोमि मांसेन मृत्युं नाशय इति चतुर्थम्। मेदोमृत्योर्जुहोमि मेदसा मृत्युं नाशय इति पञ्चमम्। स्नायुं मृत्योर्जुहोमि स्नाय्वा मृत्युं नाशय इति षष्ठम्। अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युं नाशय इति सप्तमम्। मज्जां मृत्योर्जुहोमि मज्जया मृत्युं नाशय इत्यष्टमम्"—इति। मरणान्तिकस्य सर्वस्य† व्रतस्य कामकारविषयत्वं मध्यमाङ्गिरा आह,—

---

* वाशय,—इति शा०। एवं परत्र।

† मरणान्तिकस्येदृशस्य,—इति मु०।

"प्राणान्तिकं च यत्प्रोक्तं प्रायश्चित्तं मनीषिभिः ।
तत्कामकारविषयं विज्ञेयं नात्र संशयः ॥
यः कामतो महापापं नरः कुर्य्यात्* कथञ्चन ।
न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपतनादृते"—इति ॥

यत्तु सुमन्तुनोक्तम् । "ब्रह्महा संवत्सरं कृच्छ्रं चरेत् । अधःशायी त्रिषवणस्नायी कर्मवेदकोभैक्षाहारो दीव्यनदीपुलिनसङ्गमाश्रमगोष्ठ-पर्वतप्रस्रवणतपोवनविहारी स्यात् स्थानवीरासनी । संवत्सरे पूर्णे हिरण्यमणिगोधान्यतिलभूमिसर्पींषि ब्राह्मणेभ्यो दद्यात्, पूतो भवति" —इति । तदपहन्तुर्मूर्खस्य धनवतोजातिमात्रव्यापादने द्रष्टव्यम् । यत्पुनर्वसिष्ठवचनम् । "द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत्"—इति । तन्मनोऽवसितब्रह्महत्यस्य तदैवोपरतजिघांसस्य वेदितव्यम् । यत्पुनः षट्त्रिंशन्मतवचनम्,—

"षण्डन्तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ।
चान्द्रायणं प्रकुर्वीत पराकद्वयमेवच"—इति ।

तदप्रत्यानेयपुंस्त्वस्य प्रत्ययवधे द्रष्टव्यम् । अप्रत्ययवधे तु बृहस्पतिराह,—

"अरुणायाः सरस्वत्याः सङ्गमे लोकविश्रुते ।
शुद्ध्येत् त्रिषवणस्नायी त्रिरात्रोपोषितोद्विजः"—इति ॥

एतानि द्वादशवार्षिकादिधनदानपर्य्यन्तानि ब्राह्मणस्यैव । क्षत्रियादेस्तु द्विगुणादिकम् । यदाहाङ्गिराः,—

"पर्षद् या ब्राह्मणानान्तु सा राज्ञां द्विगुणा मता ।

---

* कुर्य्याद्विप्रः,—इति मु० ।

वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वत् व्रतं स्मृतम्*"—इति॥

प्रजापतिरपि,—

"द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि च।

चत्रविट्शूद्रजातीनां ब्राह्मणस्य वधे व्रतम्"—इति॥

यत्तु चतुर्विंशतिमतवचनम्,—

"प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः।

पादोनं क्षत्रियः कुर्य्यादर्धं वैश्यः समाचरेत्॥

शूद्रः समाचरेत्पादमशेषेष्वपि पाप्मसु"—इति।

तत्प्रातिलोम्यानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम्। मूर्द्धावसिक्तादीनामपि दण्डवत्प्रायश्चित्तं समूहनीयम्। दण्डतारतम्यमाह याज्ञवल्क्यः,—

"दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः"—इति।

एवं च सति मूर्द्धावसिक्तस्य ब्राह्मणवधे क्षत्रियादूनमप्यर्द्धंदादशवार्षिकं भवति†। अनयैव दृशा प्रतिलोम्योत्पन्नानामपि प्रायश्चित्तमूहनीयम्। तथोक्ताश्रमिणामपि प्रायश्चित्ततारतम्यमङ्गिरसा दर्शितम्,—

"उद्दिष्टोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि।

शौचवत् शोधनं कुर्युरर्वाक् ब्रह्मनिदर्शनात्"—इति॥

प्रक्रान्तस्य प्रायश्चित्तस्य मध्ये विपत्तावपि पापक्षयो भवति। तथा च हारीतः,—

* शूद्रायान्तु चतुर्गुणा,—इति मु०।

† क्षत्रियादूनमध्यवर्षं दशवार्षिकं भवति,—इति शा०।

"प्रायश्चित्ते व्यवसिते कर्त्ता यदि विपद्यते ।
पूतस्तदहरेव स्यादिह लोकपरत्र च"—इति ॥

व्यासोऽपि,—

"धर्मार्थं यतमानस्तु मृतश्चेत् कोऽपि मानवः ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः"—इति ॥

बधोद्यमेऽपि बधप्रायश्चित्तं कर्त्तव्यम् । तदाह याज्ञवल्क्यः,—

"चरेत् व्रतमहत्वाऽपि घातार्थं चेत् समागतः"—इति ।

यथावर्णमित्यनुवर्त्तते । अतएव स्मृत्यन्तरम्,—

"अहत्वाऽपि यथावर्णं ब्रह्महत्याव्रतं चरेत्"—इति ।

सवनस्थस्त्रीवधस्य महापातकत्वमभिप्रेत्य प्रायश्चित्तमाह,—

**सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत् ॥७३॥ इति॥**

आहिताग्नेर्जाया पतिव्रता सवनस्था । अतएवाङ्गिराः,—

"आहिताग्नेर्द्विजातस्य हत्वा पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्य्यादात्रेयीघ्नस्तथैवच"—इति ॥

ब्रह्महत्यायाः प्रायश्चित्तमभिधाय मद्यपानस्य प्रायश्चित्तमाह,—

**मद्यपश्च द्विजः कुर्य्यान्नदीं गत्वा समुद्रगाम् ।
चान्द्रायणे ततश्चीर्णे कुर्य्यात् ब्राह्मणभोजनम् ॥ ७४ ॥
अनडुत्सहिताङ्गां च दद्यात् विप्रेषु दक्षिणाम् । इति ।**

पनसादिजन्यं मदकारणं द्रवद्रव्यं मद्यम् । तदाह पुलस्त्यः,—

"पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् ।
मधूत्थं सैरमारिष्टमैरेयं नारिकेलजम् ॥

समानानि विजानीयान्मद्यान्येकादशैव तु”—इति।

एकादशानामन्यतमस्य मद्यस्य पाने महानदीतीरे चान्द्रायणञ्च-रित्वा ब्राह्मणभोजनं कृत्वा दक्षिणां दद्यात्। तदेतत्कामकार-विषयम्। अकामकारे तु बृहस्पतिराह,—

“पीत्वा प्रमादतो मद्यमतिकृच्छ्रञ्चरेत् द्विजः।
कारयेत्तस्य संस्कारं शक्त्या विप्रांस्तु भोजयेत्”—इति॥

तदेतन्मद्यपानप्रायश्चित्तं ब्राह्मणस्यैव, न क्षत्रियवैश्ययोः। मद्य-पानस्य ब्राह्मणं प्रत्येव निषेधात्।

“यक्षरक्षःपिशाचान्नं मद्यमांससुराऽऽसवम्।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः”—इति स्मरणात्॥

बृहद्विष्णुरपि,—

“माधूकमैक्षवं सैरं तालखार्जूरपानसम्।
धूस्तुरञ्चैव माध्वीकं मैरेयं नारिकेलजम्॥
अमेध्यानि दशैतानि निन्द्यानि ब्राह्मणस्य तु”—इति।

राजन्यवैश्ययोस्तु मद्यपानमनुजानाति बृहद्याज्ञवल्क्यः,—

“कामादपि च राजन्यो वैश्यो वाऽपि कथञ्चन।
मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते”—इति॥

व्यासोऽपि,—

“उभौ मध्वासवं पीत्वा उभौ चन्दनचर्च्चितौ।
एकपर्य्यङ्कशयितौ दृष्टौ मे केशवार्जुनौ”—इति॥

उपनयनात् पूर्व्वं मद्यपाने प्रायश्चित्तं पित्रादिभिः कर्त्तव्यम्। तदाह आत्रेयः,—

"अनुपेतस्तु यो बालो मद्यं मोहात् पिबेत् यदि ।
तस्य कृच्छ्रत्रयं कुर्य्यात् माता भ्राता तथा पिता"—इति ॥

मद्यपानस्य प्रायश्चित्तमुक्त्वा सुरापानस्य प्रायश्चित्तमाह,—

**सुरापानं सकृत्कृत्वा अग्निवर्णां सुरां पिबेत् ॥ ७५ ॥**
**स पातयेदथात्मानमिह लोके परत्र च । इति ।**

पिष्टादिजन्यो द्रवद्रव्यविशेषः सुरा । तथा च मनुः,—

"गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका न पातव्या तथा सर्व्वा द्विजोत्तमैः"—इति ।

तत्र पैष्ट्यां सुराशब्दो मुख्यः । गौडीमाध्व्योर्गौणः । पुलस्त्येनैकादशममद्येषु गौडीमाध्व्यावनुक्रम्य सुरायाः सकृत्पाने गौडीमाध्व्योरमुख्ययोरसकृत्पाने चाग्निसमानवर्णोत्पत्तिपर्य्यन्तमन्तप्तामत्युष्णां सुरां पीत्वा ब्राह्मणो म्रियेतेत्यभिधानात् । तथाच बृहस्पतिः,—

"सुरापाने कामकृते ज्वलन्तीं चैव तां मुखे ।
क्षिपेत् तया विनिर्द्दग्धो मृतः शुद्धिमवाप्नुयात्"—इति ॥

गौडीमाध्व्योरभ्यासे तप्तया मरणं व्याघ्र आह,—

"मत्या मद्यममत्या वा पुनः पीत्वा द्विजोत्तमः ।
ततोऽग्निवर्णां तां पीत्वा मृतः शुद्ध्येत् स किल्विषात्"—इति॥

कामकृते सकृत् पैष्टीपाने मूलवचनोक्तं मरणं द्रष्टव्यम् । अकामकृते तु याज्ञवल्क्य आह,—

"बालवासा जटी वाऽपि ब्रह्महत्याव्रतं चरेत् ।
पिण्याकं वा कणान् वाऽपि भक्षयेत् त्रिसमा निशि"—इति ॥

एतच्च वर्षत्रयपिण्याकादिभक्षणं कर्दनविषयम्। तथाच वर्षत्रय-व्रतं प्रकृत्य व्यास आह,—

"एतदेव व्रतं कुर्य्यात् मद्यपश्च्छर्द्दने कृते।
पञ्चगव्यञ्च तस्योक्तं प्रत्यहं कायशोधनम्"—इति॥

यत्तु मनुनोक्तम्,—

"कणान् वा भक्षयेदब्दं पिण्याकं वा सकृत् निशि।
सुरापानापनुत्यर्थं बालवासा जटी ध्वजी"—इति॥

तत्तालुमात्रसंयोगे द्रष्टव्यम्। यदपि देवलेनोक्तम्। "सुरापाने ब्राह्मणो रूप्यताम्रसीसानामन्यतममग्निकल्पं पीत्वा शरीरपरित्यागात् पूतोभवति"—इति। यदपि मनुनोक्तम्,—

"गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा।
पयोघृतं वाऽऽमरणात् गोशकृद्रसमेवच"—इति॥

तदुभयं मूलवचनेन समानविषयम्। वेदविदं प्रत्यङ्गिरा-आह,—

"बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः।
समत्वं ब्राह्मणैर्गच्छेदित्येषा वैदिकी स्मृतिः"—इति॥

सकृद्गौणसुरापाने अङ्गिरा आह,—

"भूमिप्रदानं वा कुर्य्यात् सुरां पीत्वा द्विजोत्तमः।
पुनर्न च पिबेत् जातु संस्कृतः स विशुद्ध्यति"—इति॥

यत्तु सुमन्तुनोक्तम्। "ब्राह्मणस्य सुरापस्य षण्मासानुद्धृतसमुद्रोदकस्नानं सावित्र्यष्टसहस्रं जुहुयात् प्रत्यहं त्रिरात्रमुपवासः। तप्तकृच्छ्रेण पूतो भवति अश्वमेधावभृथस्नानेन च"—इति। तत्पूर्व्वोक्त-

बृहस्पतिसवविषयएव द्रष्टव्यम् । सम्पत्त्यभावे वा द्रष्टव्यम् । यत् पुनः बृहस्पतिनोक्तम्,--

"गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत् ।
तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमात्"—इति ॥

तदनन्यौषधसाध्यव्याध्युपशमार्थपाने वेदितव्यम् । प्रायश्चित्तस्याल्पत्वात् । अतएव हेतोः सङ्कल्पमात्रविषयत्वेन वा योजनीयम् । अथ सुवर्णस्तेयप्रायश्चित्तमाह,—

**अपहृत्य सुवर्णन्तु ब्राह्मणस्य ततः स्वयम् ॥ ७६ ॥**
**गच्छेन्मुषलमादाय राजानं स बधाय तु ।**
**ततः शुद्धिमवाप्नोति राज्ञाऽसौ मुक्तएवच ॥ ७७ ॥**
**कामतस्तु कृतं यत्स्यान्नान्यथा बधमर्हति । इति ।**

अत्र सुवर्णशब्दः परिमाणविशेषोपेतहेमवचनः । स च परिमाणविशेषो याज्ञवल्क्येन दर्शितः,—

"जालसूर्य्यमरीचिस्थं त्रसरेणूरजः स्मृतम् ।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोड़श"—इति ।

उक्तपरिमाणविशिष्टं ब्राह्मणसुवर्णं योऽपहरति, स स्वयमेव राजकर्त्तृकं मरणं सम्पादयितुं प्रहारसाधनं मुषलमादाय राजसमीपं गच्छेत् । गत्वा चेदृशं मां प्रहरेति निवेदयेत् । ततो राजकर्त्तृकात् मुषलसाधनाद्बधादयं विशुद्ध्यतीति । अथ मुषल-

प्रहारेण न मृतः, तदा राज्ञा मुक्तः शुद्धिं प्राप्नोत्येव। तथाच सम्वर्त्तः,—

"ततो मुषलमादाय सकृद्धन्यात्तु तं स्वयम्।
यदि जीवति स स्तेनस्ततः स्तेयाद्विमुच्यते"—इति॥

अथवा, मुक्तएवचेति पक्षान्तरमेवं व्याख्येयम्। यत्र स्तेनेन ये पोष्यास्तदीयपुत्रमित्रकलत्रादयो बहवः सन्ति, तत्र स्तेने मृते बहवो-विनश्यन्तीति मत्वा कृपालुना राज्ञा धनदण्डादिपुरःसरं स्तेनो-ऽप्रहतो मुच्येत, तदाऽपि विशुद्ध्यत्येवेति। नन्वेवं सति, "अघ्नन्नेनस्वी राजा"—इति गौतमवचनात् राजा प्रत्यवायी स्यात्। न। तस्य पोष्यवर्गादिकृपानिमित्तस्तेनव्यतिरिक्तविषयत्वेऽप्युपपत्तेः। ननु ब्रा-ह्मणवधस्यातिगर्हितत्वात् मुक्तएवेत्ययं पक्षस्तद्विषयत्वेन कुतो न व्याख्यायते। मनुवचनविरोधादिति ब्रूमः। तथाच मनुः,—

'सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु।
स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति॥
गृहीत्वा मुषलं राजा सकृत् कुर्य्यात् हतं स्वयम्।
बधेन शुद्ध्यति स्तेनो ब्राह्मणस्तपसैवच"—इति॥

अत्र बधपक्षोनामधारकमात्रविप्रविषयः। तपःपक्षस्तु सवनस्थत्वा-दिगुणोपेतब्राह्मणविषयः। न च तादृशस्य स्तेयमसम्भावितमिति शङ्कनीयम्। कदाचित् कचिच्चित्तगततामसवृत्त्या लोभातिशयोदये सति तत्सम्भवात्। एवञ्च सति मुक्तएवेति पक्ष एतद्विषयत्वेनापि योजयितुं शक्यते। यच्चौर्य्यं कामकृतं स्यात्, तत्रायमुक्तोबधो द्रष्टव्यः। अन्यथा प्रामादिकचौर्य्ये बधं नार्हति। न च लोभैकमूलस्य चौर्य्यस्य

प्रमादिकलमसम्भावितमिति शङ्कनीयम्। यदा वस्त्रप्रान्तग्रथितं सुवर्णं सुवर्णत्वेनाज्ञात्वाऽपहरति, अपहृत्य वान्यस्मै ददाति नाशयति वा ; न पुनः स्वामिने प्रत्यर्पयति, तदा सम्भवत्येवाकामतोऽप्यपहारः। तादृशेऽपहारे सवनस्थब्राह्मणवत्तपसा शुद्धिर्द्रष्टव्या। तपसोविशेषस्तु मनुना दर्शितः,—

"तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम्।
चीरवासा द्विजोऽरण्ये चरेद्ब्रह्मवधव्रतम्"—इति॥

सुवर्णात् न्यूनपरिमाणेषु हेमसु व्रतभेदाः षट्त्रिंशन्मते दर्शिताः,—

"वालाग्रमात्रेऽपहृते प्राणायामं समाचरेत्।
लिक्षमात्रेऽपिच तथा प्राणायामत्रयं बुधः॥
राजसर्षपमात्रे च प्राणायामचतुष्टयम्।
गायत्र्यष्टसहस्रञ्च जपेत् पापविशुद्धये॥
गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत्।
यवमात्रसुवर्णस्य प्रायश्चित्तं दिनद्वयम्॥
सुवर्णकृष्णलं ह्येकमपहृत्य द्विजोत्तमः।
कुर्य्यात् सान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये॥
अपहृत्य सुवर्णस्य माषमात्रं द्विजोत्तमः।
गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुद्ध्यति॥
सुवर्णस्यापि हरणे वत्सरं यावको भवेत्।
ऊर्द्धं प्राणान्तिकं ज्ञेयमथवा ब्रह्महव्रतम्"—इति॥

वत्सरयावकाशनं किञ्चिन्न्यूनसुवर्णापहारविषयम्। सुवर्णापहारे द्वादशवार्षिकविधानात्। यत्तु चतुर्व्विंशतिमतेऽभिहितम्,—

"आत्मतुल्यं सुवर्णं वा दद्याद्दिष्टाऽथवा क्रतुम्।
षडब्दं वा चरेत् कृच्छ्रं जपयज्ञपरायणः।
तीर्थाभिगमने विद्वान् तस्मात् स्तेयात् प्रमुच्यते"—इति॥

तत्रात्मतुल्यसुवर्णदानमत्यन्तधनिकविषयम्। क्रतुर्धनिकश्रोत्रियविषयः। षड्वार्षिकन्तु तीर्थयात्रासहितं निर्द्धनश्रोत्रियविषयम्। स्तेयप्रायश्चित्तं सर्व्वत्रापहृतं धनं स्वामिने दत्त्वैव कार्य्यम्।

"स्तेये ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः।
स्वामिनेऽपहृतं देयं हर्त्रा लेकादशाधिकम्"—इति

स्मरणात्। यदा लशक्त्या राजा हन्तुमप्रवृत्तः, तदा वसिष्ठोक्तं द्रष्टव्यम्। "स्तेनः प्रकीर्णकेशो राजानमभियाचेत, ततस्तस्मै राजा उडुम्बरं शस्त्रं दद्यात्, तेनात्मानं प्रमापयेत्, मरणात् पूतो भवति"—इति। उडुम्बरं ताम्रमयम्। यदा सुवर्णमपहृत्य तदभुक्त्वा तदानीमेवानुतापेन प्रत्यर्पयेत्, तदाऽऽपस्तम्बोक्तं द्रष्टव्यम्। "चतुर्थकालमिताशनेन त्रिवर्षमतस्थानम्"—इति। मानसापहारे तु सुमन्तुराह। "सुवर्णस्तेयी द्वादशरात्रं वायुभक्षः पूतो भवति"—इति। गुरुश्रोत्रिययागस्थलादिबहुगुणोपेतब्राह्मणद्रव्यस्य भूयशोऽसकृदपहारे वसिष्ठोक्तं द्रष्टव्यम्। "निष्कालकोघृताभ्यक्तो गोमयाग्निना पादप्रभृति आत्मानं प्रमापयेत् पूतो भवतीति विज्ञायते"—इति।

इत्थं सुवर्णस्तेयप्रायश्चित्तमभिहितम्। गुरुतल्पगप्रायश्चित्तं दशमाध्याये मातरं भगिनीमित्यत्र प्रपञ्चितम्। यस्तु पतितब्रह्महादिभिः सह संवत्सरं संसर्गं कृत्वा स्वयमपि पतितस्तस्य प्रायश्चित्तं मनुराह,—

"योयेन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्य्यात् संसर्गस्य विशुद्धये"—इति ॥

आचार्य्यस्तु, कलियुगे संसर्गदोषाभावमभिप्रेत्य संसर्गप्रायश्चित्तं नाभ्यधात् । अतएव स्मृत्यर्थसारे कलौ वर्ज्यानामनुक्रमणे संसर्गदोषः पापेष्वित्युक्तम् ।

संसर्गदोषस्य पातित्यापादकत्वाभावेऽपि पापमात्रापादकत्वमस्तीत्याह,—

**आसनात् शयनाद्यानात्सम्भाषात् सह भोजनात्॥७८॥**
**संक्रामन्ति हि पापानि तैलविन्दुरिवाम्भसि ॥ इति ॥**

यथा तैलविन्दुरम्भसि प्रक्षिप्तः सर्व्वत्र व्याप्नोति, तथा पतितसंसर्गकृतं पापं संसर्गिणं पुरुषं व्याप्नोति ।

संसर्गदोषव्याजेन पूर्व्वमनुक्तप्रायश्चित्तानां सर्व्वेषां साधारणानि प्रायश्चित्तान्याह,—

**चान्द्रायणं यावकञ्च तुलापुरुष एवच ॥७९॥**
**गवाञ्चैवानुगमनं सर्व्वपापप्रणाशनम् । इति ॥**

तुलापुरुषः कृच्छ्रविशेषः । तत्स्वरूपमुपरिष्टाद्वक्ष्यामः । यत्र यत्र प्रतिपदोक्तं प्रायश्चित्तन्नोपलभ्यते, तत्र सर्व्वत्र पापगौरवलाघवानुसारेण चान्द्रायणादीन्यावृत्तानि* चानुष्ठेयानि । ततः सर्व्वाणि पापानि नश्यन्तीति सिद्धम् ।

* चान्द्रायणादीनि व्रतानि,—इति मु० ।

इत्थं प्रायश्चित्तकाण्डे नवभिरध्यायैः प्रकीर्णकादीनां महापातकान्तानां पापानां यानि प्रायश्चित्तान्याचार्य्येणाभिहितानि, तानि व्याचचाणैरस्माभिस्तत्प्रसङ्गात् पठितानि स्मृत्यन्तराण्युदाहृत्य व्यवस्थापितानि। अथ यानि पूर्व्वमनुदाहृतानि, तान्युदाहृत्य व्यवस्थापयामः।

तत्र विष्णुप्रोक्तां पापानुक्रमणिकामाश्रित्य तदानुपूर्व्यात्प्रायश्चित्तवचनान्युदाह्रियन्ते। तत्र विष्णुरादावतिपातकमनुक्रम्य तत्स्वरूपमेवं विनिर्दिदेश। "मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि"—इति। तेषां त्रयाणां दशमाध्याये, मातरं यदि गच्छेदित्यस्मिन् प्रकरणे प्रायश्चित्तानि निर्णीतानि।

अतिपातकानन्तरं महापातकमनुक्रम्य तत्स्वरूपनिर्देशः एवङ्कृतः। "ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनमिति महापातकानि तत्संयोगश्च"—इति। तत्र गुरुदारगमनव्यतिरिक्तानां चतुर्णां द्वादशाध्याये चतुर्विंद्येत्यादिना सर्व्वपापप्रणाशनमित्यन्तेन ग्रन्थेन प्रायश्चित्तान्युक्तानि। गुरुदारगमनस्य तु दशमाध्याये पितृदारान् समारुह्येत्यत्र प्रायश्चित्तमभिहितम्।

महापातकानन्तरमनुपातकमनुक्रम्य तत्स्वरूपमेवं निर्दिष्टम्। "यागस्थस्य चत्रियस्य बधः वैश्यस्य रजस्वलायाश्चान्तर्व्वत्न्याश्चात्रियगोत्रया अविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानीति। कूटसाच्यं सुहृद्वध इत्येतौ सुरापानसमौ। ब्राह्मणभूम्यपहरणं सुवर्णस्तेयसमम्। पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदाराभिगमनसदृशम्। पितृमातृस्वसृगमनं श्रोत्रिय-

र्लिंगुपाध्यायमित्रपत्न्यभिगमनञ्च । स्वसुः सख्याः सगोत्राया उत्तम-वर्णायाः कुमार्य्या रजस्वलायाः शरणागतायाः प्रव्रजिताया निचि-प्तायाश्च"—इति । तत्र प्रायश्चित्तं विष्णुरेवाह,—

"अनुपातकिनस्त्वेते महापातकिनो यथा ।
अश्वमेधेन शुद्ध्यन्ति तीर्थानुसरणेन वा"—इति ॥

तत्राश्वमेधः सार्व्वभौमराजविषयः । "राजा सार्व्वभौमोऽश्वमेधेन यजेत"—इति श्रुतेः । तीर्थस्नानमितरविषयम् । तच्च साधारणं प्रायश्चित्तम् । यत्र प्रतिपदोक्तं प्रायश्चित्तं नास्ति नोपलभ्यते वा, तत्रेदं साधारणं द्रष्टव्यम् । यागस्थक्षत्त्रबधस्य तादृशवैश्यबधस्य च षष्ठाध्याये वैश्यं वा क्षत्त्रियं वाऽपीत्येतस्य व्याख्यानप्रसङ्गे प्रायश्चित्तं दर्शितम् । तथा चान्तर्वत्न्या अत्त्रिगोत्रायाश्च बधे तत्रैव प्रायश्चित्त-मभिहितम् । अविज्ञातगर्भबधे प्रायश्चित्तं चतुर्थाध्याये गर्भपातञ्च या कुर्य्यादित्यस्मिन् प्रसङ्गे वर्णितम् । शरणागतबधः परिशिष्यते । मनुस्त्वन्यान्यपि ब्रह्महत्यासमान्याह,—

"अनृतञ्च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्ब्बन्धः समानि ब्रह्महत्यया"—इति ॥

याज्ञवल्क्यश्चापराण्याह,—

"गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्बधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम्"—इति ॥

अत्र शरणागतबधादिषु पादन्यूनं ब्रह्महत्याव्रतमवगन्तव्यम् । समशब्दस्य राजसमो मन्त्रीत्यादावीषन्न्यूने प्रयोगदर्शनात् । मनुस्त्व-धीतत्यागादीनां सुरापानसमत्वमाह,—

"ब्रह्मोज्झं वेदनिन्दा च कूटसाक्ष्यं सुहृद्वधः।
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्"—इति॥

तत्र ब्रह्मोज्झस्य प्रायश्चित्तं वसिष्ठ आह। "ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्य्यात्"—इति। इदञ्च प्रायश्चित्तं प्रमादव्याध्यादिविषयम्। नास्तिकतया तत्त्यागे पादन्यूनसुरापानव्रतमिति मनोर्मतम्। यदपि वसिष्ठेनोक्तम्। "गुरोरलीकनिर्बन्धे कृच्छ्रं द्वादशरात्रं चरित्वा सचेलं स्नात्वा* गुरुप्रसादात् पूतो भवति"—इति। तदेतदमतिपूर्व्वे सकृदनुष्ठाने वेदितव्यम्। विष्णुनाऽनुक्रान्तस्य कौटसाक्ष्यस्य द्वादशवार्षिकं प्रायश्चित्तम्। तथाच तद्व्रतानुवृत्तौ शङ्खआह,—

"कौटसाक्ष्यं तथा कृत्वा निक्षेपमपहृत्य च।
एतदेव व्रतं कुर्य्यात् तथाच शरणागतम्"—इति॥

यत्र साक्ष्यनृतवदनेन† वर्णिनो वधप्राप्तिः, तद्विषयमिदम्। अपरमपि ब्रह्महत्यासमं विष्णुर्दर्शयति,—

"आक्रुष्टस्ताडितो वाऽपि धनैर्व्वा विप्रयोजितः।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"—इति॥

आक्रोशनादिनिमित्ताभावे मृतस्यैव हत्यादोषः, न तूद्देश्यस्य। तथाच स्मृत्यन्तरम्,—

"अकारणन्तु यः कश्चित् द्विजः प्राणान् परित्यजेत्।
तस्यैव तत्र दोषः स्यान्न तु यं परिकीर्त्तयेत्"—इति॥

---

* सचेलस्नानतः,—इति मु०।

† कौटसाक्ष्यकृतवचनेन,—इति मु०।

याज्ञवल्क्योऽपि सुरापानसमान्युदाजहार,—

"निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु"—इति ॥

एवमादिषु सर्व्वत्र येन साम्यं उच्यते, तदीयं प्रायश्चित्तं किञ्चिन्न्यूनमनुष्ठेयम् । सा च न्यूनता निमित्तगौरवानुसारिणी कल्पनीया । सुवर्णस्तेयसमे तु ब्राह्मणभूम्यहरणे मरणान्तिकप्रायश्चित्तेषु न्यूनत्वकल्पनाऽसम्भवाद्द्वादशवार्षिकादिव्रतानि यथायोगं कल्पनीयानि । याज्ञवल्क्योऽन्यानि सुवर्णस्तेयसमान्याह,—

"अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ।
निक्षेपस्य च सर्व्वं हि सुवर्णस्तेयसम्मितम्"—इति ॥

मनुरपि,—

"निक्षेपस्यापहरणं नराश्वरजतस्य च ।
भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतम्"—इति ॥

पितृव्यपत्न्यादिगमनानां गुरुतल्पसमानानां दशमाध्याये मातृस्वसृगमे चैवमित्यस्मिन् प्रकरणे प्रपञ्चितम् ।

अनुपातकानन्तरं विष्णुरुपपातकं अनुक्रम्य तत्स्वरूपमेवं निर्द्दिदेश । "अनृतवचनमुत्कर्षे राजगामि पैशुन्यं गुरोश्चालीकनिर्ब्बन्धो वेदनिन्दाऽधीतस्य च त्यागोऽग्निमातृपितृसुतदाराणाञ्चाभोज्यान्नभक्षणं परस्वहरणं गुरुदाराभिगमनं अयाज्ययाजनं विकर्मणा जीवनमसत्प्रतिग्रहः क्षत्रियविट्शूद्रगोवधोऽविक्रेयविक्रयः परिवित्तिताऽनुजेन ज्येष्ठस्य परिवेदनञ्च व्रात्यता भृतकाध्यापनं भृताद्ध्ययनादानं सर्व्वाकरेष्वधिकारो महायन्त्रप्रवर्त्तनं द्रुमगुल्मलतौषधीनां हिंसा स्त्रिया

जीवनं अभिचारमूलकर्मसु च प्रवृत्तिः आत्मार्थं च क्रियारम्भोऽनाहिताग्निना स्तेयो देवर्षिपितृणामृणस्यानपाक्रिया असच्छास्त्राधिगमनं नास्तिकता कुशीलता मद्यपस्त्रीनिषेवणमुपपातकानि"—इति। याज्ञवल्क्यस्तु विष्णुनाऽनुक्तान्यपि कानिचिदुपपातकानि ऋणानपक्रियादीन्युदाजहार,—

"गोवधोव्रात्यता स्तैन्यमृणानां चानपक्रिया।
अनाहिताग्निताऽपण्यविक्रयः परिवेदनम्॥
भृताद्ध्ययनादानं* भृतकाध्यापनं तथा।
पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया॥
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्।
नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः॥
धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम्।
पितृमातृसुतत्यागस्तटाकारामविक्रयः† ॥
कन्यासु दूषणञ्चैव परिवेदकयाजनम्।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्॥
आत्मनोऽर्थे क्रियारम्भोमद्यपस्त्रीनिषेवणम्।
स्वाध्यायाग्निसुतत्यागो बान्धवत्यागएवच॥
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम्।
हिंस्रयंत्रविधानञ्च व्यसनान्यात्मविक्रयः॥
शूद्राप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्।

---

* भृतकाध्ययनं चैव,—इति शा० सो०।

† नास्त्ययं श्लोकः शा० पुस्तके।

तथैवान्याश्रमे* वासः परान्नपरिपुष्टता ॥
असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्य्याया विक्रयश्चैषामेकैकमुपपातकम्”—इति ॥

यद्यप्यनृतवचनमुत्कर्ष इत्येतन्मनुना ब्रह्महत्यासमेषु पठितं, याज्ञवल्क्येन सुरापानसमेषु, विष्णुना उपपातकेषु ; तथापि विषयभेदेन त्रैविध्यं वक्तुं शक्यत्वात् न किञ्चिदसाङ्कर्य्यम् । विषयभेदस्तूच्यते । द्वेष्यं पुरुषं राजभृत्यादिभिर्मारयितुं तस्मिन्नविद्यमानमपि महान्तमपराधमारोप्यानृतं चेद् ब्रूयात्, तद्ब्रह्महत्यासमम् । वधपर्य्यवसायित्वात् । यस्तु लाभपूजाख्यातिकामो राजसभादौ स्वस्मिन् अविद्यमानमपि चतुर्व्वेदाभिज्ञत्वं प्रकटयितुमनृतं ब्रूते, तत्सुरापानसमम् । अतिगर्हितत्वात् । यस्तु मुख्यगोष्ठ्यादौ परोपकारमन्तरेण वृथाऽनृतं ब्रूते, तस्यैतदुपपातकम् । तत्राद्ययोः प्रायश्चित्तं पूर्व्वमेवोक्तम् । तृतीये तु कामकृते याज्ञवल्क्य आह,—

“अर्पां तेज इति छायां स्वां दृष्ट्वाऽम्बुगतां जपेत् ।
सावित्रीमशुचौ दृष्टे चापल्ये चानृतेऽपिच”—इति ॥

अकामकृते तु मनुनोक्तं द्रष्टव्यम्,—

“सुप्त्वा चुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतानि च ।
पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्”—इति ॥

राजाग्रे साक्षात्परम्परया वा परदोषकथनं राजगामि पैशुन्यम् । गुरोवलीकनिर्ब्बन्धो द्विविधः । तत्र राजगृहादौ स्वयं समर्थः सन्

* तथैवानाश्रमे,—इति मु० ।
† ॰थ्य,—इति मु० ।

असमर्थस्य गुरोर्द्रव्यलाभाद्युपरोधकारणं निर्बन्धं करोति चेत्, सोऽयमलीकनिर्बन्धोब्रह्महत्यासमत्वेन मनुनोक्तः। यत्र वाक्पारुष्यादिमात्रेण गुरोरप्रियमुपजायते, सोऽयमलीकनिर्बन्ध उपपातकम्। वेदनिन्दा त्रिविधा; बुद्धार्हतादिशास्त्राण्यभ्यस्य वेदानामप्रामाण्यप्रतिपादने निर्बन्धएका निन्दा। सेयं याज्ञवल्क्येन ब्रह्महत्यासमेषूपवर्णिता। सत्यामपि वेदप्रमाण्यबुद्धौ जल्पवितण्डादिहेतुशास्त्रव्यसनितया श्रुतिस्मृत्युक्तस्यानुष्ठानस्यावज्ञा द्वितीया निन्दा। एतदेवाभिप्रेत्य मनुराह,—

"योऽवमन्येत ते तूभे* हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्बहिस्कार्य्यो नास्तिको वेदनिन्दकः"—इति।

सेयं निन्दा सुरापानसमेषु मनुनोदाहृता।

यस्तु वैदिकर्मानुतिष्ठन्नपि नात्यन्तं तत्त्वतः श्रद्धत्ते, किमनेन भविष्यति जनापवादभयादेव केवलमनुतिष्ठामीत्येवं निन्दति, सेयं निन्दोपपातकेषु पठ्यते।

एवमध्ययनत्यागादेरेकैकस्य बहुविधस्यानुक्रान्तस्य गौरवलाघवे पर्य्यालोच्यावान्तरभेदः कल्पनीयः। अग्निमातृसुतदाराणामित्यत्रापि त्याग इति पदमन्वेति। अनुक्रान्तानामुपपातकानां प्रोक्तेभ्योऽतिपातकमहापातकानुपातकेभ्योऽल्पत्वादुपपातकत्वम्। तदुक्तं स्मृत्यन्तरे,—

"महापातकतुल्यानि पापान्युक्तानि यानि तु।
तानि पातकसंज्ञानि तन्न्यूनमुपपातकम्"—इति॥

तस्य चोपपातकजातस्य साधारणं प्रायश्चित्तं विष्णुराह,—

---

* मूले,—इति मु०।

"उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः ।
पराकमथवा कुर्य्युर्यजेयुर्गोसवेन च"—इति ॥

तत्रैतेषामावृत्तानां सङ्घाते गोसवो द्रष्टव्यः । एकैकस्याभ्यासं प्रति पराकः, अभ्यासं प्रति चान्द्रायणम् । याज्ञवल्क्योऽपि साधारणं प्रायश्चित्तमाह,—

"उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वाऽपि मासेन पराकेणाथवा पुनः"—इति ॥

एवमित्यनेन पदेन प्रकृतं गोवधव्रतमतिदिश्यते । अतिदेशस्योपदेशान्न्यूनविषयत्वाद् गोव्रताङ्गानि गोचर्म्मादीनि कानिचिद्विषयान्तरेषु निवर्त्तन्ते । एतच्च व्रतचतुष्टयमकामकारे शक्त्यपेक्षया विकल्पितं द्रष्टव्यम् । कामकारे तु,—

"एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः ।
अवकीर्णी तु शुद्ध्यर्थं चरेच्चान्द्रायणं व्रतम्"—इति

मनुनोक्तं त्रैमासिकं द्रष्टव्यम् । एतच्च साधारणप्रायश्चित्तं प्रतिपदोक्तप्रायश्चित्ताभावे तदनुपलम्भे वा द्रष्टव्यम् ।

प्रतिपदोक्तानि प्रायश्चित्तानि यथासम्भवमुदाहरामः । तत्र गुरोरलीकनिर्बन्धस्योपपातकस्य प्रायश्चित्तं विष्णुराह । "समुत्कर्षेऽनृते गुरोरलीकनिर्बन्धे तदाक्षारणे च मासं पयसा वर्त्तेत"—इति । अग्नित्यागे सएवाह । "वेदाग्न्युत्सादितस्त्रिषवणस्नाय्यधःशायी संवत्सरं सकृद्भैक्षेण वर्त्तेत"—इति । वसिष्ठोऽपि । "योऽग्नीनपविध्येत्, स कृच्छ्रं द्वादशरात्रञ्चरित्वा पुनराधेयं कारयेत्"—इति । मनुरपि,—

"अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः ।

चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् ॥
अग्निहोत्र्यपविध्याग्नीन्मासादूर्द्धन्तु कामतः।
कृच्छ्रं चान्द्रायणञ्चैव कुर्य्यादेवाविचारयन्”—इति ॥

हारीतः। “संवत्सरोत्सन्नाग्निहोत्री चान्द्रायणं कृत्वा पुनराद-ध्यात्। द्विवर्षोत्सन्ने सान्तपनं चान्द्रायणञ्च कुर्य्यात्। त्रिवर्षोत्सन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यात्”—इति। शङ्खोऽपि। “अग्न्युत्सादी संवत्सरं प्राजापत्यं चरेत् गाञ्च दद्यात्”—इति। भरद्वाजः। “द्वादशाहातिक्रमे त्र्यहमुपवासः। मासातिक्रमे द्वादशाहमुपवासः। संवत्सरातिक्रमे मासोपवासः पयोभक्षणं च”—इति। एतत्सर्व्वमालस्याग्नित्यागवि-षयतया* यथायोगमूहनीयम्। यत्तु भरद्वाजगृह्येऽभिहितम्। “प्राणायामशतमादशरात्रं कुर्य्यात्। उपवासमाविंशतिरात्रं कुर्य्यात्। अतऊर्द्धमाषष्टिरात्रं तिस्रोरात्रीः उपवसेत्। अत ऊर्द्धमासंवत्सरात् प्राजापत्यं व्रतं चरेत्। अत ऊर्द्धं कालबहुले दोषबहुलम्”—इति। तत्प्रमादादग्नित्यागविषयम्। नास्तिक्यात् त्यागे तु व्याघ्र आह,—

“योऽग्निं त्यजति नास्तिक्यात् प्राजापत्यं चरेद्द्विजः।
अन्यच्च पुनराधानं दानमेव तथैवच”—इति ॥

प्राजापत्यस्योपलक्षणत्वात् त्यागकालस्य गौरवलाघवानुसारेण व्रतान्तराण्यूहणीयानि। व्रतानन्तरकर्त्तव्यमाह जातूकर्ण्यः,—

“अतीतकालं जुहुयादग्नौ विप्रोयथान्वयम्।
नष्टेऽग्नौ विधिवद्दद्यात् कृत्वाऽऽधानं पुनर्द्विजः†”—इति।

* आलस्यादित्यागविषयतया,—इति मु०।
† कृत्वाधायँ पुनर्द्विजे,—इति मु०।

एतच्चौपासनाग्निविषयम् ।

दारत्यागे शातातप आह । "कौमारदारत्यागी मासं पयोभक्षः शुद्ध्यति"—इति ।

अभोज्याभक्ष्यभक्षणप्रायश्चित्तं लेकादशाध्याये प्रपञ्चितम् ।

परस्वहरणे मनुराह,—

"धान्यान्नधनचौर्य्याणि कृत्वा कामाद् द्विजोत्तमः ।
सजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति ॥
मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्य च ।
कूपवापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम् ॥
द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः ।
चरेत् सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥
भक्ष्यभोज्यापहरणे यानशय्याऽऽसनस्य च ।
पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥
तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुड़स्य च ।
चेलचर्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ।
मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ॥
अयःकांस्योपलानाञ्च द्वादशाहं कणान्नता ।
कार्पासकीटजोर्णानां द्विशफैकशफस्य च ॥
पक्षिगन्धौषधीनाञ्च रज्वाश्चैव त्र्यहं पयः"—इति ।

एतेषां विषयाणां मध्ये धान्यस्य परिमाणविशेषेण व्रतविशेषः स्मृत्यन्तरेऽभिहितः,—

"धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं बधः"—इति ।

यत्तु जावालिनोक्तम्,—

"तिलधान्याव्रवस्त्राणां शय्यानामामिषस्य च।

संवत्सरार्द्धं कुर्व्वीत व्रतमेतत्समाहितः"—इति ॥

तदेतदकामकृतविषयम्। अल्पत्वात्। भक्ष्य तु सकृद्भोजनपर्य्याप्तिकस्यापहारे पैठीनसिराह। "भक्ष्यभोज्यान्नस्योदरपूरणमात्रहरणे त्रिरात्रं पञ्चगव्याहारः"—इति। यानि तु मनूक्तेषु विषयेषु व्रतान्तराण्यन्यैर्मुनिभिर्दर्शितानि, तेषु व्रतेषु यानि समानि, न तत्र विवादः। न्यूनानामकामकारविषयत्वं, अधिकानान्तु कामकृताभ्यासविषयत्वमिति विवेकः। तत्र वचनानि। "द्रव्याणामल्पसाराणां सान्तपनम्। भक्ष्यभोज्ययानशय्याऽऽसनमूलपुष्पफलानां हरणे पञ्चगव्यपानम्। तृणकाष्ठद्रुमशुष्कान्नगुड़वस्त्रचर्मामिषाणां त्रिरात्रमुपवसेत्। मणिमुक्ताप्रवालानां ताम्ररजतायःकांस्यानां द्वादशाहं कणान्नश्नीयात्। कार्पासकीटजोर्णाद्यपहरणे त्रिरात्रं पयसा वर्त्तेत। द्विशफैकशफहरणे त्रिरात्रमुपवसेत्। पक्षिगन्धौषधिरज्जुवैदलानामपहरणे दिनमुपवसेत्"।

"दत्वैवापहृतं द्रव्यं धनिकस्याभ्युपायतः।

प्रायश्चित्तं ततः कुर्य्यात् कल्मषस्यापनुत्तये"—इति।

जावालिः,—

"अश्वगोभूमिकन्यासु हृत्वा चान्द्रायणं चरेत्।

अपहृत्य पशून् क्षुद्रान् प्रजापत्यं समाचरेत् ॥

गुड़कार्पासधान्यानि सर्पिर्लवणमेवच।

पक्वान्नमौषधं तैलं शय्यां वास उपानहौ ॥

कांस्यायस्सीसमीषं वा कृच्छ्रं कृच्छ्रार्द्धमेव च ।
उदके फलमूलेषु पुष्पवर्णसुगन्धिषु ॥
मृद्भाण्डमधुमांसेषु कृच्छ्रपादो विधीयते ।
व्यापादनापहारेषु सन्तोष्य स्वामिनं ततः ॥
पापं निवेद्य विप्रेभ्यः प्रायश्चित्तेन युज्यते ।
अपहृत्य तु वर्णानां धनं विप्रः प्रमादतः ॥
प्रायश्चित्तञ्च यत् प्रोक्तं ब्राह्मणानुमते चरेत् ।
राजस्वस्यापहरणे रमणीनां जनस्य* च ॥
धनापहरणे चैव कुर्य्यात् संवत्सरव्रतम्"—इति ।

परदारगमनस्य तु प्रायश्चित्तं दशमाध्यायेऽभिहितम् । अयाज्य-याजने मनुराह,—

"व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति"—इति ॥

यत्तु प्रचेतसा शूद्रयाजकादीननुक्रम्योक्तम् । "एते पञ्चतपोभूमौ जलशयनाद्यनुष्ठेयम्† । क्रमेण ग्रीष्मवर्षाहेमन्तेषु मासं गोमूत्रयावकमश्नीयुः"—इति । तत्कामकृताभ्यासविषयम् । यत्तु यमेनोक्तम्,—

"पुरोधाः शूद्रवर्णस्य ब्राह्मणोयः प्रवर्त्तते ।
वेदादर्थप्रसङ्गाद्वा तस्य कृच्छ्रं विशोधनम्"—इति ॥

तदशक्तविषयम् । यत्तु गौतमेनोक्तम् । "निषिद्धमन्त्रप्रयोगे सति

---

* मणीनां च जनस्य,—इति मु० ।

† इत्थमेव पाठः सर्व्वत्र । मम तु, जलशयनाद्यनुष्ठाय,—इति पाठः प्रतिभाति ।

सहस्रानुवाकं* जपेत्”—इति। तत्कामतोऽभ्यासविषयम्। यत्तु पैठिनसिनोक्तम्। “शूद्रयाजकः सर्व्वद्रव्यपरित्यागात् पूतो भवति। प्राणायामसहस्रेषु दशकृत्वोऽभ्यस्तेषु”—इति। तदकामतोऽभ्यासविषयम्।

असत्प्रतिग्रहे याज्ञवल्क्य आह,—

“गोष्ठे वसेद् ब्रह्मचारी मासमेकं पयोव्रतम्।
गायत्रीजप्यनिरतः शुध्यतेऽसत्प्रतिग्रहात्”—इति।

अत्र जपसंख्या मनुना दर्शिता,—

“जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्”—इति।

एतच्च दातृद्रव्ययोरुभयोरसत्त्वे वेदितव्यम्। अन्यतरस्यासत्त्वे तु षट्त्रिंशन्मते दर्शितम्,—

“पवित्रेष्टा विशुध्यन्ति सर्व्वे घोराः प्रतिग्रहाः।
विन्दवेन मृगारेष्टा कयाचिन्मित्रविन्दया॥
देव्यालक्षजपेनैव शुध्यतेऽसत्प्रतिग्रहात्”—इति।

यत्तु वृद्धहारीतवचनम्,—

“राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत्।
षष्ठे काले पयोभक्षः पूर्णे मासे प्रमुच्यते॥
तर्पयित्वा द्विजान् कामैः सततं नियतव्रतः”—इति।

तदापदि कुरुक्षेत्रोपरागादौ कृष्णाजिनादिप्रतिग्रहविषयम्। अल्पद्रव्यपरिग्रहे हारीतः। “मणिवासोगवादीनां प्रतिग्रहे सावि-

---

* सहस्रानुवाकं,—इति मु०।

अष्टसहस्रं जपेत्”—इति । षट्त्रिंशन्मतेऽपि,—

“भिक्षामात्रे गृहीते तु पुण्यं मन्त्रमुदीरयेत्”—इति ।

चतुर्व्विंशतिमतेऽपि,—

“प्रतिषिद्धेषु सर्व्वेषु षष्ठांशं परिकल्पयेत्”—इति ।

दानार्थमिति शेषः ।

विकर्मणा जीवने तु चान्द्रायणम् । तथाच नटादीन् विकर्मणा जीवितानानुक्रम्य यम आह,—

“एतेषामेव सर्व्वेषां प्रत्यापत्तिन्तु शृण्यताम् ।

भैक्षान्नमुपभुञ्जानो द्विजश्चान्द्रायणं चरेत्”—इति ।

नारदोऽपि,—

“कर्मणा गर्हितेनैव यद्वित्तं समुपार्जितम् ।

तस्य त्यागेन शु न्ति धर्मस्यान्वेषणेन वा ॥

अप्सु प्रास्येत तद्द्रव्यं गयेन यदागतम् ।

उपयुक्तानुशिष्टञ्च देयं ब्रह्मवादिने”—इति ।

क्षत्रियावधस्य प्रायश्चित्तं षष्ठाध्याये वर्णितम् । गोवधस्य त्वष्टम-नवमाध्याययोस्तत् प्रपञ्चितम् ।

अविक्रेयविक्रयस्य चतुर्विंशतिमते दर्शितम्,—

“सुराया विक्रयं कृत्वा चरेत् सौम्यचतुष्टयम् ।

लाक्षालवणमांसानां चरेच्चान्द्रायणत्रयम् ॥

मध्वाज्यतैलसोमानां चरेच्चान्द्रायणद्वयम् ।

पयःपायसापूपानां चरेच्चान्द्रायणत्रतम् ॥

दध्याज्येक्षुरसानाञ्च गुड़खण्डादिविक्रये ।

सर्व्वेषां स्नेहपक्कानां पराकं तु समाचरेत् ॥
सिद्धान्नविक्रये विप्रः प्राजापत्यं समाचरेत् ।
उपवासन्तु तक्रस्य नक्तं काञ्जिकविक्रये ॥
पूगीफलानि मञ्जिष्ठा द्राक्षा खर्जूरमेवच ।
एतेषां विक्रये कृच्छ्रं पनसस्य दिनत्रयम् ॥
कदली नारिकेलं च नागरं बीजपूरकम् ।
एतेषां पादकृच्छ्रः स्यात् जम्बीरादेस्तथैवच ॥
कस्तूरिकादिगन्धानां विक्रये कृच्छ्रमाचरेत् ।
कर्पूरादेस्तदर्द्धं स्याद्दिनं हिङ्ग्वादिविक्रये ।
तिलानां विक्रयं कृत्वा प्राजापत्यं समाचरेत् ।
यज्ञार्थं कृषिजातांश्च दानलब्धांश्च विक्रये ॥
रक्तपीतानि वस्त्राणि कृष्णाजिनमथापि वा ।
एतेषां विक्रये कृच्छ्रं गर्गस्य वचनं यथा ॥
गोविक्रयं द्विजः कुर्य्यात् लाभार्थं धनमोहितः ।
प्राजापत्यं प्रकुर्वीत गजानामैन्दवं स्मृतम् ॥
खराश्वाजाविकानां च शरभाणाञ्च विक्रये ।
पराकं तत्र कुर्व्वीत नृणां द्विगुणमाचरेत् ॥
नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणं व्रतम् ।
द्विगुणं पुरुषाणाञ्च व्रतमाहुर्मनीषिणः ॥
चान्द्रायणं प्रकुर्व्वीत एकाहं वेदविक्रये ।
अङ्गानान्तु पराकं स्यात् स्मृतीनां कृच्छ्रमाचरेत् ॥
इतिहासपुराणानां चरेत् सान्तपनं द्विजः ।

रहस्यपञ्चरात्राणां कृच्छ्रं तत्र समाचरेत् ।
गाथानां नीतिशास्त्राणां प्राकृतानां तथैवच ॥
सर्व्वासामेव विद्यानां पादकृच्छ्रं समाचरेत् ।

हारीतोऽपि। "गुड़तिलपुष्पमूलफलपक्वान्नविक्रये सौम्यायनम् । लाक्षालवणमधुमांसतैलदधितक्रघृतगन्धचर्मवाससामन्यतमविक्रये चान्द्रायणम् । तयोर्णकेशरिभूधेनुवेश्मशस्त्रविक्रये च । मत्स्यमांसस्वाप्यस्थिशृङ्गनखशुक्तिविक्रये तप्तकृच्छ्रम् । हिङ्गुगुग्गुलुहरितालमनःशिलाऽञ्जनगैरिकक्षारलवणमणिमुक्ताप्रवालवैणवम्रण्मयेषु च। आरामतटाकोदपानपुष्करिणीसुकृतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारो दशसहस्रं जपेद्गायत्रीं संवत्सरेण पूतो भवति। हीनमानोन्मानसङ्कीर्णविक्रये च"—इति । ईदृशेष्वेकविषयवक्ष्प्रतेषु असकृत्पूर्व्वमुक्तानि यानि, तेषु यथा योगं व्यवस्था कल्पनीया ।

परिवित्त्यादीनां चतुर्णां प्रायश्चित्तं चतुर्थाध्याये वर्णितम् ।

व्रात्योनाम सावित्री पतितः । तस्य प्रायश्चित्तं मनुराह,—

"येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्"—इति ।

वसिष्ठोऽपि। "पतितसावित्रीक उद्दालकव्रतं चरेत्। द्वौ मासौ यावकेन वर्त्तयेत् मासं पयसाऽर्द्धमासमामिक्षया अष्टरात्रं घृतेन षड्रात्रमयाचितं हविष्यं भुञ्जीत त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेत् । अश्वमेधावभृथं वा गच्छेत् । व्रात्यस्तोमेन वा यजेत"—इति। तत्र मानवमापद्विषयं, उद्दालकव्रतं त्वनापद्विषयम् । यत्तु यमेनोक्तम्,—

"सावित्री पतिता यस्य दशवर्षाणि पञ्च च ।

सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः ॥
एकविंशतिरात्रञ्च पिबेत् प्रसृतियावकम्।
हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च च ॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्"—इति।

तत् मनुस्मानविषयम्। यस्य पित्रादयोऽप्यनुपनीताः, तस्याप-स्तम्बोक्तं द्रष्टव्यम्। "यस्य पिता पितामह इत्यनुपनीतौ स्यातां ते ब्रह्मसंस्तुताः। तेषामभ्यागमनं भोजनं विवाहमिति वर्ज्जयेत्। तेषामिच्छतां प्रायश्चित्तं, यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सरः। अथोपनयनम्। ततः संवत्सरमुदकोपस्पर्शनं प्रतिपुरुषं संख्याय संवत्स-रान् यावन्तोऽनुपेताः स्युः। सप्तभिः पावमानीभिः यदन्ति यच्च दूरक इत्येताभिर्यजुःपवित्रेण सामपवित्रेणाङ्गिरसेनेति। अथवा व्याहृ-तिभिरेव। अथाध्याप्यः। यस्य प्रपितामहादेर्नानुस्मर्यते उपनयनं, ते श्मशानसंस्तुताः। तेषामभ्यागमनं भोजनं विवाहमिति वर्ज्जयेत्। तेषामिच्छतां प्रायश्चित्तम्। द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्य्यं चरे-दथोपनयनं तत उदकोपस्पर्शनम्"—इति।

भृतकाध्ययनाध्यापनयोर्हारीत आह,—

"भृतकाध्यापनं कृत्वा भृतकाध्यापितस्त्र यः।
अनुयोगप्रदानेन त्रीन् पक्षांस्तु पयः पिबेत्"—इति।

द्रुमादिहिंसायां मनुराह,—

"फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम्।
गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम्।
कृष्टजानामौषधीनां जातानां च स्वयं वने ॥

वृथाऽऽलम्भेऽनुगच्छेद् गान्दिनमेकं पयोव्रतम्"—इति ।

एतच्च यज्ञार्थवृक्षच्छेदनादिव्यतिरिक्तविषयम् । अतएव याज्ञवल्क्योऽपि वृथेति विशिनष्टि,—

"वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ।

स्यादोषधिवृथाच्छेदी क्षीराशी गोऽनुगो दिनम्"—इति ।

यत्तु हारीतेनोक्तम् । "स्थावरसरीसृपादीनां वधे थस्येदं प्राणमित्येतयाऽऽज्यं कृत्वा तिलपात्रं ब्राह्मणाय दद्यात्"—इति । तदश्वत्थादिपुण्यस्थावरविषयम् । महाफलप्रदस्य पनसनारिकेलादिवृक्षजातस्य च्छेदनाद्वत्तौ शङ्ख आह,—

"संवत्सरव्रतं कुर्य्याच्छित्वा वृक्षं फलप्रदम्"—इति ।

दृष्टार्थत्वेऽपि कर्षणाङ्गभूतहलाद्यर्थत्वे न दोषः । "फलपुष्पोपगान् पादपान्न हिंस्यात् कर्षणकार्य्यार्थमुपहन्यात्"—इति स्मरणात् ।

नास्तिक्यन्तु वाचनिकं चेत्तदुपपातकम् । यथाऽऽहुः पौराणिकाः,—

"नास्तिकास्त्रिविधाः प्रोक्ता धर्म्मज्ञैस्तत्त्वदर्शिभिः ।

क्रियादुष्टो मनोदुष्टो वाग्दुष्टश्च तथैवच ॥

उपपातकी तु वाग्दुष्टो मनोदुष्टोऽनुपातकी ।

अभ्यासात्तु* क्रियादुष्टो महापातक उच्यते"—इति ॥

तत्रोपपातकनास्तिक्ये वशिष्ठ आह । "नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेन्नास्तिक्यात्"—इति । यत्तु शङ्खेनोक्तम् । "नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याऽभिशंसीत्येते पञ्च संवत्सरं ब्राह्मणगृहे भैक्षं चरेयुः"—इति । तदेतत् महापातकनास्तिक्यविषयम् ।

* अभ्यासेन,—इति मु० ।

व्रतलोपिनोऽवकीर्णिव्रतं याज्ञवल्क्य आह,—

"अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम्।
गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति"—इति॥

मनुरपि,—

"अवकीर्णी तु काणेन गर्द्दभेन चतुष्पथे।
स्थालीपाकविधानेन* यजेत निर्ऋतिं निशि॥
हुत्वाऽग्नौ विधिवद्धोममन्ततश्च समित्यृचा†।
वातेन्द्रगुरुवह्नीनां जुहुयात् सर्पिषाऽऽहुतीः॥
एतस्मिन्नेनसि प्राप्ते वसित्वा गर्द्दभाजिनम्।
सप्तागारान् चरेद् भैक्षं स्वकर्म परिकीर्त्तयन्॥
तेभ्यो लब्धेन भैक्षेण वर्त्तयन्नेककालिकम्।
उपस्पृशंस्त्रिषवणमब्देन स विशुद्ध्यति"—इति।

वसिष्ठोऽपि। "ब्रह्मचारी चेत् स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेत। नैर्ऋतं वा चरुं निर्वपेत्। तस्य जुहुयात् कामाय स्वाहा कामकामाय स्वाहा रक्षोदेवताभ्यः स्वाहा"—इति। तत्र श्रोत्रियस्य पशुरश्रोत्रियस्य चरुरिति द्रष्टव्यम्। शङ्खस्तु वर्णभेदेन व्रतविशेषमाह। "गुप्तायां वैश्यायामवकीर्णी संवत्सरं त्रिषवणमनुतिष्ठेत् क्षत्रियायां द्वे वर्षे ब्राह्मण्यां त्रीणि वर्षाणि"—इति। यदप्यङ्गिरसोक्तम्,—

"अवकीर्णिनिमित्तन्तु ब्रह्महत्याव्रतं चरेत्।

---

* पाकयज्ञविधानेन,—इति मु०।
† शमित्यृचा,—इति मु०।

चीरवासास्तु षण्मासान् तथा मुच्येत किल्विषात्”—इति ।

तदीषद्व्यभिचारिणीविषयम् । अत्यन्तव्यभिचारिणीषु पुनः शङ्ख-आह । “स्वैरिण्यां ब्राह्मण्यामवकीर्णः षड्रात्रमुपोषितो गां दद्यात् । क्षत्रियायामुपोषितस्त्रिरात्रं घृतपात्रं दद्यात् । वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयित्वा यवसभारं च गोभ्यो दद्यात् । वृषल्यामवकीर्णः सचेलस्नात उदकुम्भं ब्राह्मणाय दद्यात् । गोष्ववकीर्णः प्राजापत्यं चरेत् । रण्डायामवकीर्णः पलालभारं सीसमाषं च दद्यात्”—इति । अत्र च, ब्राह्मणस्यार्द्धं क्षत्रियस्य,—इत्यादिन्यायो-नास्ति, किन्तु समानमेव त्रयाणां वर्णानाम् । तदाह शाण्डिल्यः,—

“अवकीर्णी द्विजोराजा वैश्यश्चापि खरेण तु ।
इष्ट्वा भैक्षाग्निनोनित्यं शुद्ध्यन्त्यब्दात् समाहिताः”—इति ॥

अभ्यासे कण्व आह,—

“प्रथमे दिवसे रात्राववकीर्णी गर्दभेन यजेत ।
यो यथा कुरुतेऽभ्यासमब्देनैकेन शुद्ध्यति”—इति ॥

तत्र विशेषमाह गौतमः । “तस्याजिनमूर्द्धवालं परिधाय लोहितपात्रं सप्त गृहान् भैक्षं चरेत् कर्माचक्षाणः”—इति । अव-कीर्णिलक्षणमाह जातुकर्ण्यः—

“खण्डितव्रतिना येन रेतः स्याद्ब्रह्मचारिणा* ।
कामतोऽकामतः प्राज्ञैरवकीर्णीति तं बुधाः”—इति ।

यतिवनस्थयोस्त्वधिकं व्रतमाह शाण्डिल्यः—

“वानप्रस्थोयतिश्चैव खण्डने सति कामतः ।

* इत्थमेव पाठः सर्व्वत्र । मम तु, रेतःसिग्ब्रह्मचारिणा,—इति पाठः प्रतिभाति ।

पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत्”—इति।

यतेः पुनर्गार्हस्थ्यस्वीकारे संवर्त्त आह,—

“संन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि।

स कुर्य्यात् कृच्छ्रमश्रान्तः षण्मासान् प्रत्यहं प्रतम्”—इति।

वृद्धपराशरोऽपि—

“यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः।

अनाशकनिवृत्तश्च गार्हस्थ्यं च चिकीर्षति॥

चरेत् षाण्मासिकं कृच्छ्रं नियतात्मा समाहितः।

चरेत् त्रीणि च कृच्छ्राणि त्रीणि चान्द्रायणानि च।

जातकर्मादिभिः सर्व्वैः संस्कृतः शुद्धिमाप्नुयात्”—इति।

तत्र ब्राह्मणस्य षाण्मासिककृच्छ्रः, क्षत्रियस्य चान्द्रायणत्रयं, वैश्यस्य कृच्छ्रत्रयमिति व्यवस्था। अत्र षाण्मासिकादिव्रतत्रयं ब्राह्मणस्यैव सकृदभ्यासाद्यपेक्षया व्यवस्थापनीयमित्यन्ये। व्रतान्तरलोपेऽप्यवकीर्णिव्रतमतिदिशति मनुः,—

“अकृत्वा भैक्षचरणमसमिध्य च पावकम्।

अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्”—इति।

यत्तु याज्ञवल्क्य आह,—

“भैक्षाग्निकार्य्ये त्यक्त्वा तु सप्तरात्रमनातुरः।

कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम्।

उपस्थानं ततः कुर्य्यात् समासिंचत्वनेन तु”—इति।

होममन्त्रौ तु, कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा, कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहेति। एतच्च

गुरुशुश्रूषादिकार्य्यव्यग्रतया करणे द्रष्टव्यम् ।

सुतादिविक्रये उपपातकसाधारणोक्तं प्रायश्चित्तं योज्यम् । यत्तु शङ्खेनोक्तम् । "देवगृहप्रतिश्रयोद्यानारामसभाप्रपातटाकपुष्यसेतुसुतविक्रयं कृत्वा तप्तकृच्छ्रं चरेत्"—इति । यच्च वृद्धपराशरेणोक्तम्—

"विक्रीय कन्यकां गाञ्च कृच्छ्रं सान्तपनं चरेत्"—इति ।

तदापद्यकामतो द्रष्टव्यम् । यत्तु चतुर्विंशतिमतेऽभिहितम्,—

"नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतम् ।

द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः"—इति ।

तत्तथैव कामतो द्रष्टव्यम् । यत्तु पैठीनसिराह । "आरामतटाकोदपानपुष्करिणीसुकृतसुतविक्रये त्रिषवणस्नाय्यधः शायी ब्रह्मचारी चतुर्थकालाहारः संवत्सरेण पूतो भवति"—इति । तदभ्यासविषयम् ।

कन्यादूषणे उपपातकसाधारणप्रायश्चित्तं विज्ञेयम् । यत्तु शङ्ख आह । "कन्यादूषी सोमविक्रयी च कृच्छ्राब्दं चरेयाताम्"—इति । यच्च हारीतः । "कन्यादूषी सोमविक्रयी वृषलीपतिः कौमारदारत्यागी सुरामद्यपः शूद्रयाजको गुरोः प्रतिहन्ता नास्तिकोनास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्रह्मघ्नः मित्रघ्नोमिथ्याऽभिशंसी पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिरूपकवृत्तिरित्येते पञ्चतपोभूजलशनाद्यनुतिष्ठेयुः, ग्रीष्मवर्षाहेमन्तेषु, मासं गोमूत्रयावकमश्नीयुः"—इति । तत् प्रातिलोम्येन कन्यादूषणे द्रष्टव्यम् ।

द्यूतादिव्यसनेष्वप्युपपातकसाधारणोक्तं प्रायश्चित्तं योज्यम् । यत्तु बौधायनः संवत्सरव्रतमाह । "अथाशुचिकराणि द्यूतमभिचारोऽनाहिताग्नेरुञ्छवृत्तिः समावृत्तस्य भैक्षचर्य्या आनाशं च गुरुकुले वास-

ऊर्द्धञ्चतुर्भ्यो मासेभ्यो यश्चिरमध्यापनं नक्षत्रनिर्द्देशनं चेति। द्वादश-मासान् द्वादशार्द्धमासान् द्वादश द्वादशाहान् द्वादश षड़हान् द्वादश त्र्यहान् त्र्यहमेकाहमिति अशुचिकरनिर्द्देशः”—इति। तदभ्यासविषयम्। यदप्याह प्रचेताः। “अनृतवाक् तस्करोराजभृत्यो वृक्षारोपकवृत्तिर्गरदोऽग्निदश्च रथगजारोहणवृत्तिः रङ्गोपजीवी श्वगणिकः शूद्रोपाध्यायो वृषलीपतिर्भाण्डिको नक्षत्रोपजीवी श्ववृत्तिर्ब्रह्मजीवी चिकित्सको देवलकः पुरोहितः कितवोमद्यपः कूटकारकोऽपत्यविक्रयी मनुष्यपशुविक्रेता चेति। तानुद्धरेत्समेत्य न्यायतो ब्राह्मणोव्यवस्थया सर्व्वद्रव्यत्यागे चतुर्थकालाहाराः संवत्सरं त्रिषवणमुपस्पृशेयुः। तस्यान्ते देवपितृतर्पणं गवाह्निकं चेत्येवं व्यवहार्य्याः”—इति। तदभ्यासविषयम्।

अनाश्रमवासे हारीतेन प्रायश्चित्तमुक्तम्। “अनाश्रमी संवत्सरं प्राजापत्यं कृच्छ्रं चरित्वाऽऽश्रममुपेयात्, द्वितीयेऽतिकृच्छ्रं, तृतीये कृच्छ्रातिकृच्छ्रमत ऊर्द्धं चान्द्रायणम्”—इति।

शूद्रसेवायां बौधायन आह। “समुद्रयाने ब्राह्मणन्यासापहरणे सर्व्वापण्यैर्व्यवहरणे भूम्यनृते शूद्रसेवायाञ्च शूद्रायामभिजायते तदपत्यञ्च भवति। तेषाञ्च निर्द्देशश्चतुर्थकालं मितभोजनाः स्युः अपोऽभ्युपेयुः सवनानुकल्पस्थानासनाभ्यां विहरन्त एते त्रिभिर्व्वर्षैस्तदपहन्ति पापम्”—इति। तद्बहुकालाभ्यासविषयम्।

उपपातकानन्तरं जातिभ्रंशकराणि विष्णुनाऽनुक्रान्तानि। “ब्राह्मणस्य रुजः करणं अघ्रेयमद्ययोर्घ्रातिः जैह्म्यं पशुषु मैथुनाचरणं चेति जातिभ्रंशकराणि”। तेषु साधारणं प्रायश्चित्तं मनुविष्णू आहतुः,—

"जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया ।
चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया"—इति ।

अत्र, ब्राह्मणस्य रुजः करणे प्रायश्चित्तमेकादशाध्यायेऽभिहितम् । पशुमैथुने दशमाध्यायेऽभिहितम् ।

जातिभ्रंशकरानन्तरं सङ्करीकरणान्यनुक्रान्तवान् विष्णुः । "ग्राम्यारण्यानां पशूनां हिंसा सङ्करीकरणम्"—इति । तत्र साधारणं प्रायश्चित्तं स एवाह,—

"सङ्करीकरणं कृत्वा मासमश्नीत यावकम् ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तन्तु कारयेत्"—इति ।

प्रतिपदन्तु षष्ठाध्यायेऽभिहितम् ।

सङ्करीकरणानन्तरमपात्रीकरणमनुक्रान्तवान् विष्णुः । "निन्दितेभ्यो धनादानं वाणिज्यं कृषिजीवनमसत्यभाषणं शूद्रसेवनमित्यपात्रीकरणम्"—इति । तस्य च साधारणं प्रायश्चित्तं मनुराह,—

"अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति ।
शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन वा"—इति ।

अपात्रीकरणानन्तरं मलिनीकरणमनुक्रान्तवान् विष्णुः । "कृमिकीटघातनं मद्यानुगतभोजनमिति मलावहानि"—इति । तत्र साधारणं प्रायश्चित्तं स एवाह,—

"मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम् ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं विशोधनम्"—इति ।

अथ प्रकीर्णकप्रायश्चित्तविशेषोऽभिधीयते ।

शरणागतत्यागे मनुराह,—

"शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः ।
संवत्सरं यवाहारस्तत्पापमपसेधति*"—इति ॥

पतितादिसन्निधावध्ययने वसिष्ठ आह । "पतितचण्डालादिश्रवणे त्रिरात्रं वाग्यतोऽनश्नन्नासीनः सहस्रपरमां वाचमभ्यस्य ततः पूतो भवतीति विज्ञायते"—इति । एतद्बुद्धिपूर्वकविषयम् । अबुद्धिपूर्वके षट्‌त्रिंशन्मतेऽभिहितम् । "चण्डालश्रोत्रावकाशे हते श्रुतिस्मृतिपाठे एकरात्रमभोजनम्"—इति ।

सर्पाद्यन्तरागमने तु यमः आह,—

"सर्पस्य नकुलस्याथ अजमार्जारयोस्तथा ।
मूषिकस्य तथोष्ट्रस्य मण्डूकस्य च योषितः ॥
पुरुषस्यैडकस्यापि शुनोऽश्वस्य खरस्य च ।
अन्तरा गमने सद्यः प्रायश्चित्तमिदं शृणु ॥
त्रिरात्रमुपवासश्च त्रिरह्नस्त्वाभिषेचनम् ।
ग्रामान्तरं वा गन्तव्यं जानुभ्यां नात्र संशयः"—इति ॥

खरोष्ट्रयानारोहणादौ प्रायश्चित्तमाह याज्ञवल्क्यः,—

"प्राणायामं जले स्नात्वा खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम्"—इति ॥

इदं चाकामकारविषयम् । कामकारे तु मनुराह,—

"उष्ट्रयानं समारुह्य खरयानं च कामतः ।
सवासाजलमाप्लुत्य प्राणायामेन शुद्ध्यति"—इति ।

अप्सु मूत्रपुरीषादिकरणे मनुराह,—

---

* पापमुपसीदति,—इति मु० ।

"विनाऽद्भिरप्सु वाऽप्यार्त्तः शारीरं सन्निवेश्य तु ।
सचेलोवक्रधाऽऽप्लुत्य गामालभ्य विशुध्यति—इति ॥

इदमकामकारविषयम् । कामकारे तु यमः आह,—

"आपद्गतो विना तोयं शारीरं यो निषेवते ।
एकाहं क्षपणं कृत्वा सचेलं स्नानमाचरेत्"—इति ॥

यच्चाह सुमन्तुः । "अप्स्वग्नौ वा मेहतस्तप्तकृच्छ्रं कायविशोधनम्"—इति । तदनार्त्तपरतया योज्यम् ।

श्रौतस्मार्त्तकर्मादिलोपे मनुराह,—

"वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्"—इति ॥

अत्रोपवासस्य प्रतिपदोक्तैर्व्यादिना समुच्चयः ।

पञ्चमहायज्ञाद्यकरणे बृहस्पतिराह,—

"अनिर्वर्त्य महायज्ञान् योभुङ्क्ते प्रत्यहं गृही ।
अनातुरः सति धने कृच्छ्रार्द्धेन विशुद्ध्यति ॥
आहिताग्निरुपस्थानं न कुर्याद्यस्तु पर्वणि ।
ऋतौ न गच्छेद्भार्य्यां वा सोऽपि कृच्छ्रार्द्धमाचरेत्"—इति ।

एकपङ्क्त्युपविष्टानां वैषम्येन दानादौ यमः,—

"न पङ्क्त्यां विषमं दद्यात् न याचेत् न च दापयेत् ।
प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्ततः"—इति ॥

पतितादिसम्भाषणे तु गौतमः । "न म्लेच्छाशुच्यधार्मिकैः सह सम्भाषेत । सम्भाष्य पुण्यकृतो मनसा ध्यायेत् । ब्राह्मणेन वा सम्भाषेत"—इति ।

अशुचिभोजने शातातप आह,—

"मूत्रोच्चारं द्विजः कृत्वा अकृत्वा शौचमात्मनः ।

मोहाद्भुक्त्वा* त्रिरात्रं स्याद्बुद्ध्वा सान्तपनं चरेत्"—इति ।

वृद्धशातातपोऽपि,—

"मूत्रयित्वा व्रजन्मार्गे स्मृतिभ्रंशाज्जलं पिबेत्।

अहोरात्रोषितः स्नात्वा जुहुयात् सर्पिषाऽऽहुतीः"—इति ॥

व्याघ्रोऽपि,—

"अस्पृश्यस्पर्शनं कृत्वा यदा भुङ्क्ते गृहाश्रमी ।

अकामतस्त्रिरात्रं स्यात् षड्रात्रं कामतश्चरेत्† ॥

यतिश्चैव वनस्थश्च कुर्य्यातां तौ तदेव तु"—इति ।

उशनाऽपि,—

"चण्डालश्वपचैः स्पृष्टो विण्मूत्रोच्छिष्टएवच ।

त्रिरात्रेण विशुद्धिः स्याद्भुक्तोच्छिष्टः षडाचरेत्‡"—इति ॥

बृहस्पतिरपि§,—

"अस्नात्वा तु यदा भुङ्क्ते पिण्डं दत्त्वाऽपि तद्व्रती ।

स्पृष्ट्वा शवमुदक्यां वा चण्डालं सूतिकां तथा ॥

अकामतस्त्रिरात्रं स्याद्बुद्ध्वा सान्तपनं चरेत्"—इति ।

---

* मोहादश्नुते,—इति मु० ।

† अहोरात्रन्तु कामतः,—इति मु० ।

‡ कदाचन,—इति मु० ।

§ प्रजापतिः,—इति मु० ।

ब्रह्मसूत्रं विना मूत्रपुरीषादिकरणे स्मृत्यन्तरे प्रायश्चित्तमुक्तम्,—

"विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद्द्विजः ।
प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं जपेत्"—इति ।

इदं कामकारविषयम् । अकामतस्तु,—

"पिबतोमेहतश्चैव भुञ्जतोऽनुपवीतिनः ।
प्राणायामत्रयं षट्कं नक्तं च त्रितयं क्रमात्"—इति ।

भोजनानन्तरमाचमनमकृत्वैवासनादुत्थाने प्रायश्चित्तमाश्वमेधिकेऽभिहितम्,—

"यद्युत्तिष्ठत्यनाचान्तो भुक्तवानसनात्ततः* ।
सद्यः स्नानं प्रकुर्व्वीत सोऽन्यथाऽप्रयतो भवेत्†"—इति ।

अपाङ्क्तेयपङ्क्तौ भोजने मार्कण्डेय आह,—

"अपाङ्क्तेयस्य‡ यः कश्चित् पङ्क्तौ भुङ्क्ते द्विजोत्तमः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति"—इति ॥

नीलीरक्तवस्त्रधारणे त्वापस्तम्ब आह,—

"नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥
रोमकूपैर्यदाऽऽगच्छेद्रसोनील्यास्तु कस्यचित् ।
त्रिवर्णेषु च सामान्यं तप्तकृच्छ्रं विशोधनम् ॥

* भुक्त्वा चैवासनात्ततः,—इति मु० ।

† नान्यथा प्रयतोभवेत्,—इति मु० ।

‡ अपाङ्क्तेयस्तु,—इति मु० ।

पालनं विक्रयश्चैव तद्वृत्त्या ह्युपजीवनम्।
पातकन्तु भवेद्विप्रे त्रिभिः कृच्छ्रैर्व्यपोहति॥
स्नानं दानं जपोहोमः स्वाध्यायः पितृतर्पणम्।
वृथा तस्य महायज्ञो नीलीसूत्रस्य धारणात्।
नीलीमध्ये तु गच्छेद्वा प्रमादाद् ब्राह्मणः क्वचित्॥
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुद्ध्यति।
नीलीदारुपदा भिन्नाद्* ब्राह्मणस्य शरीरतः॥
शोणितं दृश्यते यत्र द्विजश्चान्द्रायणं चरेत्।
स्त्रीणां क्रीड़ार्थसंभोगे शयनीये न दुष्यति॥
नीलीरक्तेन वस्त्रेण यदन्नमुपनीयते।
दातारं नोपतिष्ठेत भोक्ता भुञ्जीत किल्बिषम्"—इति।

भृगुरपि,—

"स्त्रीधृता शयने नीली ब्राह्मणस्य न दुष्यति।
नृपस्य शूद्रवैश्यस्य स्पर्शो वर्ज्यन्तु धारणम्॥
कम्बले पट्टसूत्रे च नीलीरागो न दुष्यति"—इति।

ब्रह्मतरुनिर्मितखट्वाद्यारोहणे शङ्खः,—

"अध्यास्य शयनं यानमासनं पादुके तथा।
द्विजः पलाशवृक्षस्य त्रिरात्रन्तु व्रती भवेत्॥
क्षत्रियस्तु रणे पृष्ठं दत्त्वा प्राणपरायणः।
संवत्सरं व्रतं कुर्य्याच्छित्त्वा वृक्षं फलप्रम्॥
द्वौ विप्रौ ब्राह्मणाग्नी वा दम्पती गोद्विजात्तमौ।

* नीलीदारु यदा विद्याद,—इति मु०।

अन्तरेण यदा गच्छेत् कृच्छ्रं सान्तपनं चरेत् ॥

होमकाले तथा दोहे स्वाध्याये दारसंग्रहे ।

अन्तरेण यदा गच्छेत् द्विजाश्चन्द्रायणं चरेत्"—इति ।

दुःस्वप्नारिष्टदर्शनादौ स एवाह । "दुःस्वप्नारिष्टदर्शनादौ घृतं हिरण्यं च दद्यात्"—इति ।

तीर्थयात्रामन्तरेण देशान्तरगमने देवलः प्रायश्चित्तमाह,—

"सिन्धुसौराष्ट्रसौवीरान् तथा प्रत्यन्तवासिनः ।

अङ्गवङ्गकलिङ्गाद्यान् गत्वा संस्कारमर्हति"—इति ।

सूर्य्योदयादिकालशयने प्रायश्चित्तमाह यमः,—

"सूर्य्योदये तु यः शेते सूर्य्याभ्युदित उच्यते ।

अस्तं गते तु यः शेते सूर्य्यनिर्मुक्त उच्यते ॥

ब्रह्मस्तेनावुभौ सम्यगहोरात्रोषितः शुचिः ।

गायत्र्याः दशसाहस्रं कुर्य्यादैकाह्निके बुधः*"—इति ।

मनुरपि,—

"तञ्चेदभ्युदियात् सूर्य्यः शयानं कामकारतः ।

निम्लोचेद्वाऽप्यविज्ञानात् जपन्नुपवसेद्दिनम्"—इति ।

गौतमस्तु ब्रह्मचारिणोविशेषमाह । "सूर्य्याभ्युदितो ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽस्तमितश्च रात्रिं जपेत् सावित्रीम्"—इति ।

यतिवनस्थयोर्विशेषमाह वसिष्ठः,—

"वनस्थश्च यतिश्चैव सूर्य्येणाभ्युदितो यदि ।

---

* पृथक्,—इति पा० स० ।

ब्रह्मकूर्व्वाग्निनौ भूत्वा जपेतां प्रणवं त्वहः*"—इति।

दण्डकमण्डल्वादिनाशे प्रायश्चित्तमाह पैठीनसिः। "नष्टे दण्ड-काष्ठे भैक्षं गत्वा तद्दत्वा ब्राह्मणाय तदहरुपवसेत्। अन्यं प्रयच्छेद्गुरुः। कमण्डलावप्येवमेव। नष्टायां मेखलायां चिह्नतमाचरेत्"—इति।

सन्ध्याग्निकार्य्यलोपे संवर्त्तः,—

"सन्ध्यामापदि नोपास्ते अग्निकार्य्यं यथाविधि।
सावित्र्यष्टसहस्रन्तु जपेत् स्नात्वा समाहितः"—इति।

स्वप्रकाशिनिरीक्षणे प्रायश्चित्तमाह यमः,—

"प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्।
दृष्ट्वा सूर्य्यं निरीक्षेत गामग्निं ब्राह्मणं तथा"—इति।

भोजनकाले अशुचित्वे वृद्धशातातपः,—

"यदा भोजनकाले तु अशुचिर्भवति द्विजः।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुद्ध्यति॥
भक्षयित्वा तु तं ग्रासमहोरात्रेण शुद्ध्यति॥
अशित्वा सर्व्वमेवान्नं त्रिरात्रेण विशुद्ध्यति"—इति।

श्राद्धे निमन्त्रितस्य कालातिक्रमे यम आह,—

"केतनं कारयित्वा तु योऽतिपातयते द्विजः।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ प्रजायते॥
एतस्मिन्नेनसि प्राप्ते ब्राह्मणोनियतव्रतः।

---

* त्र्यहम्,—इति मु०।

यतिचान्द्रायणं चीर्त्वा* ततश्चान्द्रायणं चरेत्"—इति।

क्षत्त्रियाद्युपसंग्रहणे हारीत आह। "क्षत्त्रियाभिवादने ऽहोरात्र-मुपवासः स्यात्। वैश्यस्यापि। शूद्रस्याभिवादने त्रिरात्रमुपवासः। तथा, शय्याऽऽरूढपादुकोपानदारोपितपादोच्छिष्टान्धकारस्थश्राद्ध-कृज्जपदेवतापूजाऽभिरताभिवादने त्रिरात्रमुपवासः स्यात्। अन्यत्र निमन्त्रितेनान्यत्रभोजनेऽपि त्रिरात्रमुपवासः†"—इति।

मिथ्याऽभिशंसने प्रायश्चित्तमाह याज्ञवल्क्यः,—

"महापापोपपापाभ्यां योऽभिशंसेन्मृषा नरम्।
अब्भक्षो मासमासीत स जापी नियतेन्द्रियः"—इति।

जपश्च शुद्धवतीनां‡ कार्य्यः। तथाच वशिष्ठः। "ब्राह्मणमनृते-नाभिशस्य पतनीयेनोपपतनीयेन वा मासमब्भक्षः शुद्धवतीरावर्त्त-येत्§। अश्वमेधावभृथं वा गच्छेत्"—इति। हारीतोऽपि,—

"अनृताभिशंसनाक्रोशे गुरूणां पैशुन्ये च।
एकविंशतिरात्रन्तु पिवेद्ब्राह्मीं सुवर्चलाम्"—इति।

शङ्खलिखितौ। "नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मण-वृत्तिघ्नोमिथ्याऽभिशंसन इत्येते पञ्चसंवत्सरान् ब्राह्मणगृहे भैक्षं चरेयुः। संवत्सरं धौतं भैक्षमश्नीयुः। षण्मासान् गा अनुगच्छेयुः"—इति। एतेषां वचनानां यथायोगं व्यवस्था द्रष्टव्या।

---

* तीर्त्वा,—इति मु०।

† भोजनेऽहोरात्रमुपवासः,—इति मु०।

‡ शुद्धमतिना,—इति मु०।

§ शुद्धमतिरावर्त्तयेत्,—इति मु०।

अभिशस्तप्रायश्चित्तमाह याज्ञवल्क्यः,—

"अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा।

निर्व्वपेत्तु पुरोडाशं वायव्यं चरुमेव वा"—इति॥

यत्तु वसिष्ठवचनम्। "एतेनैवाभिशस्तो व्याख्यातः"—इति। तत्तद्दैवाकृतप्रायश्चित्तस्य द्रष्टव्यम्। यत्तु पैठीनसिनोक्तम्। "अनृतेनाभिशस्तः कृच्छ्रं चरेन्मासं पातकेषु महापातकेषु द्विमासम्"—इति। तदपि वसिष्ठेन समानविषयम्।

तदेवं विष्णुनाऽनुक्रान्तानामतिपातकादीनां प्रकीर्णकान्तानां दशविधानां पापानां सामान्यतो विशेषतश्च प्रायश्चित्तानि प्रतिपादितानि।

---

## अथ रहस्यप्रायश्चित्तान्यभिधीयन्ते।

यत्पापं कर्त्रव्यतिरिक्तेनान्येन केनचिदपि न ज्ञातं, तद्रहस्यम्। तस्य प्रायश्चित्तमपि रहस्येव कर्त्तव्यम्। तथाच हारीतः। "अथ ब्राह्मणस्य श्रुतधर्मशास्त्रस्य रहस्यमनुक्रमिष्यामः। रहस्यकृते रहस्यमेव कर्त्तव्यं, प्रकाशकृते प्रकाशमेव कर्त्तव्यम्"—इति। रहस्यत्वादेव नास्ति परिषदनुमत्यपेक्षा। तदाहतुर्हरस्पतियाज्ञवल्क्यौ,—

"विख्यातदोषः कुर्व्वीत पर्षदाऽनुमतं व्रतम्।

अनभिख्यातदोषस्तु रहस्यव्रतमाचरेत्"—इति॥

न च विना परिषदं व्रतज्ञानाभाव इति शङ्कनीयम्। शास्त्रज्ञस्य तद्विज्ञानसम्भवात्। इतरेणापि वुद्धिमता विद्वद्गोष्ठ्यां केनचि-

ज्ञाजेनावगन्तुं शक्यत्वात् । यदि तदभिज्ञानाय परिषदोऽग्रे पापं प्रकटीकुर्य्यात्, तदा प्रायश्चित्तं बहुलं भवति । द्विविधा ह्यशुद्धिः पापेन जन्यते, ऐहिक्यामुष्मिकी च । तयोरैहिकी शिष्टैः सह व्यवहारं वारयति । आमुष्मिकी तु नरकं प्रापयति । तत्र प्रकटपापेषु द्विविधाशुद्धिसद्भावात्तन्निवृत्तये प्रायश्चित्तबाहुल्यमपेक्षितम् । रहस्ये* त्वैहिकाशुद्ध्यभावादामुष्मिकमात्राशुद्धिः स्वल्पेनापि जपहोमादिना निवर्त्तते । अतएव मनुः प्राजापत्यादिव्रतानां जपादीनां च व्यवस्थामाह,—

"एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।
अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्" इति ।

तत्र रहस्यानां साधारणं प्रायश्चित्तं मण्वाह,—

"वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा ।
नाशयन्त्याशु पापानि महापातकजान्यपि ॥
यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात् ।
तथा ज्ञानकृतं पापं कृत्स्नं दहति वेदवित् ॥
सव्याहृतिप्रणवकाः प्राणायामास्तु षोड़श ।
अपि भ्रूणहणं मासात् पुनन्त्यहरहः कृताः"—इति ।

वसिष्ठः,—

"यद्यकार्य्यशतं साग्रं कृतं वेदश्च धार्य्यते ।
सर्व्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम्"—इति ।

---

* रहस्येषु पापेषु,—इति मु० ।

† प्राप्तं,—इति मु० ।

चतुर्विंशतिमते,—

"कृतेश्च क्रियमाणेश्च करिष्यद्भिर्न संशयः।
ब्रह्म प्रतिष्ठेत्येतावत् पावनाय जपेद्द्विजः"—इति।

यमः,—

"सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीं स जपेन्नित्यं महापातकनाशिनीम्॥
विराजं द्विगुणं जप्त्वा तदह्नैव विशुद्ध्यति।
वामदेव्यं त्रिरावर्त्त्य तदह्नैव विशुध्यति॥
पौरुषं सूक्तमावर्त्त्य मुच्यते सर्व्वकिल्बिषात्।
वृषभं शतधा जप्त्वा तदह्नैव विशुद्ध्यति॥
रुद्रैकादशकं जप्त्वा तदह्नैव विशुद्ध्यति"—इति।

विष्णुः। "अथातः सर्व्ववेदपवित्राणि भवन्ति। येषां जपैश्च होमैश्च द्विजातयः पापेभ्यः पूयन्ते। अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समन्दी धावति कुश्माण्ड्यः पावमान्यो दुर्गासावित्री अभीषङ्गाः पदस्तोभाः सामानि व्याहृतयो भारुण्डानि चन्द्रसाम पुरुषव्रते सामनी अलिङ्गं वार्हस्पत्यं गोसूक्तमाश्वसूक्तं सामनी चन्द्रसूक्ते च शतरुद्रियमथर्व्वशिरस्त्रिसुपर्णं महाव्रतं नारायणीयं पुरुषसूक्तञ्च,—

त्रीण्याज्यादोहानि रथन्तरञ्च
अग्नेर्व्रतं वामदेव्यं वृहच्च।
एतानि गीतानि पुनन्ति जन्तून्
जातिस्मरत्वं लभते यदीच्छेत्"—इति।

चतुर्विंशतिमते,—

"पावमानीस्तथा कौत्सं पौरुषं सूक्तमेवच ।
जप्त्वा पापैः प्रमुच्येत सपुत्रं मधुच्छन्दसम् ॥
मण्डलब्राह्मणं रुद्रं शुक्रियो मोचकस्तथा ।
वामदेव्यं वृहत्साम जप्त्वा पापैः प्रमुच्यते ॥
यज्ञायज्ञीयमादित्यं ज्येष्ठसाम च राजनम् ।
पारुच्छेपञ्च सामानि जप्त्वा मुच्येत किल्बिषात् ॥
आथर्व्वशिरसं चैव पुरुषसूक्तं तथैवच ।
नीलरुद्रं तथैवैन्द्रं जप्त्वा पापैः प्रमुच्यते ॥
आथर्व्वणाश्च ये केचित् मन्त्राः कामविवर्जिताः ।
ते सर्व्वे पापहन्तारो याज्ञवल्क्यवचो यथा ॥
संहोमे मन्युरित्येतदनुवाकं जपेद्‌द्विजः ।
जप्त्वा पापैः प्रमुच्येत बौधायनवचो यथा ॥
ऋग्वेदमभ्यसेद्यस्तु यजुःशाखामथापिवा ।
सामानि सरहस्यानि अथर्व्वाङ्गिरसस्तथा ॥
ब्राह्मणानि च कल्पांश्च षड़ङ्गानि तथैवच ।
आख्यानानि तथाऽन्यानि जप्त्वा पापैः प्रमुच्यते ॥
इतिहासपुराणानि देवतास्तवनानि च ।
जप्त्वा पापैः प्रमुच्येत धर्मस्थानैस्तथा परैः"—इति ॥

बौधायनः,—

"विधिना शास्त्रदृष्टेन प्राणायामान् षड़ाचरेत्* ।

* समाचरेत्,—इति शा० स० ।

यदुपस्थकृतं पापं पद्भ्यां वा यत्कृतं भवेत् ॥
बाहुभ्यां मनसा वाचा श्रोत्रत्वक्घ्राणचक्षुषा"—इति ।

मनुः,—

"महापातकिनश्चैव शेषाश्चाकार्य्यकारिणः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥
यत्किञ्चिदेनः कुर्व्वन्ति मनोवाक्कर्मभिर्जनाः ।
तत् सर्व्वं निर्दहन्त्याशु तपसैव तपोधनाः"—इति ।

पैठीनसिः,—

"सर्व्वपापप्रसक्तोऽपि ध्यायन् निमिषमच्युतम् ।
पुनस्तपस्वी भवति पङ्क्तिपावनपावनः"—इति ॥

कूर्मपुराणे,—

"जपस्तपस्तीर्थसेवा देवब्राह्मणपूजनम् ।
ग्रहणादिषु कालेषु महापातकशोधनम् ॥
पुण्यक्षेत्राभिगमनं सर्व्वपापप्रणाशनम् ।
देवताऽभ्यर्च्चनं नृणामशेषाघविनाशनम् ॥
अमावास्यां तिथिं प्राप्य यः समाराधयेद्भवम् ।
ब्राह्मणान् भोजयित्वा तु सर्व्वपापैः प्रमुच्यते ॥
कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्द्दशीम् ।
सम्पूज्य ब्राह्मणमुखे सर्व्वपापैः प्रमुच्यते ॥
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् ।
दृष्ट्वेशं प्रथमे यामे मुच्यते सर्व्वपातकैः ।
एकादश्यां निराहारः समभ्यर्च्च्य जनार्द्दनम् ॥

द्वादश्यां शुक्लपक्षस्य सर्व्वपापैः प्रमुच्यते ।
उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औडुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय ते नमः ॥
प्रत्येकं तिलसंयुक्तान् दद्यात् सप्तोदकाञ्जलीन् ।
स्नात्वा नद्यां तु पूर्व्वाह्णे मुच्यते सर्व्वपातकैः"—इति ॥

चतुर्व्विंशतिमते,—

"मृगारेष्टिः पवित्रेष्टिस्त्रिहविः पावमान्यपि ।
इष्टयः पापनाशिन्यो वैश्वानर्य्या समन्विताः"—इति ॥

कूर्मपुराणे,—

"अस्मिन् कलियुगे घोरे लोकाः पापानुवर्त्तिनः ।
भविष्यन्ति महावाहो, वर्णाश्रमविवर्जिताः ॥
नान्यत्पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् ।
सर्व्वपापप्रशमनं प्रायश्चित्तं कलौ युगे"—इति ॥

इति साधारणप्रायश्चित्तानि ।

---

## अथ प्रतिपदोक्तानि प्रायश्चित्तानि ।

तत्र याज्ञवल्क्यः,—

"त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।
अन्तर्जले विशुद्ध्येत गां दत्त्वा च पयस्विनीम्"—इति ॥

शङ्खलिखितावपि। "ब्रह्महा त्रिरात्रोपषितोऽन्तर्ज्जलेऽघमर्षणं त्रिरावर्त्तयेत्"—इति। एतच्च कामकारविषयम्। अकामकारविषये यमः। "एवं ब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पेषु प्राणायामैः श्रान्तोऽघमर्षणं जपेत्"—इति। बौधायनः। "ग्रामात् प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य स्नातः शुचिरुदकान्ते स्थण्डिलमुपलिप्य सकृत् क्लिन्नवासाः सकृत् पूतेन पाणिनाऽऽदित्याभिमुखोऽघमर्षणस्वाध्यायमधीयीत प्रातः शतं मध्याह्ने शतं सायाह्ने शतं परिमितं चोदितेषु नक्षत्रेषु प्रसृतियावकमश्नीयात्। ज्ञानकृतेभ्य उपपातकेभ्यश्च सप्तरात्रात् प्रमुच्यते। द्वादशरात्रान्महापातकेभ्यः। एवं ब्रह्महत्यां सुवर्णस्तेयं सुरापानञ्च वर्जयित्वैकविंशतिरात्रेण तान्यभितरति"—इति। मनुरपि,—

"अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम्।
मुच्यते पातकैः सर्व्वैः पराकैः शोधितस्त्रिभिः"—इति।

वृहद्विष्णुरपि। "ब्रह्महत्यां कृत्वा प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेनेन्धनेनाग्निं प्रज्वाल्याघमर्षणेनाष्टसहस्रमाज्याहुतीर्जुहुयात् तदेतस्मात् पूतो भवतति"—इति। एतानि कामाकामकारादिभेदेन* व्यवस्थापनीयानि। सुरापाने यम आह। "सुरापः कण्ठमात्रमुदकमवतीर्य्य सुतसोमात् प्रसृतिमादायोङ्कारेणाभिमन्त्र्य पिवेत्। ततोऽप्सु निमग्नोमानस्तोकीयं जपेत्"—इति।

याज्ञवल्क्यः,—

"त्रिरात्रोपषितोहुत्वा कुष्माण्डीभिर्घृतं शुचिः"—इति।

---

* कामाकामकारभेदेन—इति मु०।

मनुः,—

"कौत्सं जपित्वाऽपैत्येनो वासिष्ठञ्चेत्यृचं प्रति ।
माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुद्ध्यति ।
मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः ॥
सुगुर्व्वप्यपहन्त्येनो जप्त्वा वा नमदित्यृचम्* ।
महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः ।
अभ्यस्याब्दं पावमानीर्भैक्षाहारोविशुद्ध्यति"—इति ॥

वसिष्ठः,—

"सुरां पीत्वाऽप्सु निमज्ज्य त्रिः पठेदघमर्षणम् ।
यथाऽश्वमेधावभृथस्तादृशं मनुरब्रवीत्"—इति ॥

अत्र ज्ञानाज्ञानाभ्यासानभ्यासैर्व्यवस्था द्रष्टव्या ।

सुवर्णस्तेये शातातपः,—

"मद्यं पीत्वा गुरुदारांश्च गत्वा
स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ।
भस्मच्छन्नोभस्मशय्याशयनो-
रुद्राध्यायी मुच्यते सर्व्वपापैः"—इति ।

यमः । "ब्राह्मणः सुवर्णस्तेयं कृत्वा हिरण्यं शालायां प्रक्षिप्याप्सु स्नातो ग्रीवामात्रमुदकं हिरण्यवर्णाभिश्चतसृभिरात्मानमभ्युक्ष्य त्रीन् प्राणायामान् कृत्वा तदेतस्मात्पापात् पूतो भवति"—इति ।

बृहस्पतिः,—

---

* मनइत्यृचम्,—इति मु० ।

"यज्ञस्नापयामीयं शिवसङ्कल्पमेव वा।

अपहृत्य सुवर्णं वा क्षणाद्भवति निर्मलः"—इति।

याज्ञवल्क्यः,—

"ब्राह्मणस्वर्णहारी तु रुद्रजापी जले स्थितः"—इति।

अपश्चैकादशकृत्वः कार्य्यः। तदाह अत्रिः,—

"एकादशगुणान् वाऽपि रुद्रानावर्त्त्य धर्मवित्।

महापापैरपि स्पृष्टो मुच्यते नात्र संशयः"—इति॥

गुरुतल्पे याज्ञवल्क्यः,—

"सहस्रशीर्षजापी तु मुच्यते गुरुतल्पगः।

गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी"—इति॥

यमोऽपि। "अथ गुरुतल्पगमनं कृत्वाऽघमर्षणमन्त्रैर्जले त्रिरावर्त्त्य तदेतस्मात् पापात् पूतो भवति"—इति। मनुरपि,—

"हविष्यन्तीयमभ्यस्य न तमंह इतीति च।

जप्त्वा च पौरुषं सूक्तं मुच्यते गुरुतल्पगः"—इति॥

संसर्गे येन सह संसर्गं करोति, तदीयमेव प्रायश्चित्तं कुर्य्यात्। "स तस्यैव व्रतं कुर्य्यात्"—इति पूर्व्वमेवोक्तत्वात्।

अथोपपातकरहस्यप्रायश्चित्तानि।

अत्र यमः,—

"दशप्रणवसंयुक्तैः प्राणायामैश्चतुःशतैः।

मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैः"—इति।

याज्ञवल्क्योऽपि,—

"प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये।

उपपातकजातानामनादिष्टस्य चैव हि”—इति ॥

मनुरपि,—

“एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम् ।

अवेत्यृचं जपेदब्दं यत्किञ्चेदमितीति च”—इति ॥

अत्र सकृदभ्यासादिभेदेन व्यवस्था द्रष्टव्या ।

इति रहस्यप्रायश्चित्तम् ।

---

## अथ व्रतलक्षणानि ।

सर्व्वव्रतसाधारणाङ्गानि याज्ञवल्क्य आह,—

“ब्रह्मचर्य्यं दया क्षान्तिर्दानं सत्यमकल्कता ।

अहिंसाऽस्तेयमाधुर्य्ये दमश्चेति यमाः स्मृताः ॥

स्नानमौनोपवासेज्या स्वाध्यायोपस्थनिग्रहः ।

नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादिता”—इति ॥

अत्र ब्रह्मचर्य्यं सर्व्वेन्द्रियनिग्रहः । उपस्थनिग्रहो लिङ्गनिरोधः । तयोर्गोबलीबर्द्दन्यायेनापुनरुक्तिः । अकल्कत्वमकुटिलत्वम् । मनुरपि,—

“अहिंसां सत्यमक्रोधमार्जवं च समाचरेत् ।

त्रिरह्नि त्रिर्निशायाञ्च सवासा जलमाविशेत् ॥

स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ।

स्थानासनाभ्यां विहरेदक्रोधोऽधः शयीत वा ॥

ब्रह्मचारी व्रती च स्याद् गुरुदेवद्विजार्चकः ।

सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ॥

सर्व्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृताः”—इति ।

अत्र प्राजापत्यव्रतलक्षणमाह हारीतः,—

"त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम्।
परं त्र्यहं वायुभक्ष एष कृच्छ्रः प्रजापतिः"—इति॥

मनुरपि,—

"त्र्यहं प्रातः त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परन्तु नाश्नीयात् प्राजापत्यं चरन् द्विजः"—इति।

अस्यैवाधिकारिभेदेन प्रयोगान्तरमाह वसिष्ठः,—

"अहः प्रातरहर्नक्तमहरेकमयाचितम्।
अहः पराकं तत्रैकमेवं चतुरहौ परौ॥
अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः।
बालवृद्धातुराणाञ्च शिशुकृच्छ्रमुवाच ह"—इति॥

एतदुभयमपि प्राजापत्यकृच्छ्रं दर्शयति। याज्ञवल्क्यः,—

"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः॥
यथाकथञ्चित् त्रिगुणः प्राजापत्योऽयमुच्यते"—इति।

एकभक्तेन दिवैव सकृद्भोजनेन। नक्तेन रात्रौ सकृद्भोजनेन। अयाचितेन, न विद्यते याचितं यस्मिन् भोजने, तदयाचितम्। तेन। अत्र कालविशेषाप्रतीतेर्दिवा रात्रौ वा सकृद्भोजनेन। उपवासेन चैकेन एकस्मिन् दिनेऽनशनेन च पादकृच्छ्रो भवति। अयमेव पादकृच्छ्रः स्वस्थानविवृद्ध्या वा दण्डकलितवदावृत्त्या वा यथा कथञ्चित् त्रिगुणः त्रिरभ्यस्तः प्राजापत्य इत्युच्यते इत्यर्थः। एकभक्तादिषु ग्राससङ्ख्या आपस्तम्बेन दर्शिता,—

"सायं द्वाविंशतिर्ग्रासाः प्रातः षड्‌विंशतिः स्मृताः ।
चतुर्व्विंशतिरयाच्याः परं निरशनं स्मृतम्"—इति ॥

तत्परिमाणमपि तत्रैवोक्तम्,—

"कुक्कुटाण्डप्रमाणन्तु यथा वाऽऽस्यं विशेत् सुखम्"—इति।

चतुर्विंशतिमते प्रकारान्तरेण सङ्ख्या श्रूयते,—

"प्रातस्तु द्वादश ग्रासाः सायं पञ्चदशैव तु।
अयाचिते च द्वावष्टौ परं* वै मारुताशनः"—इति ॥

अत्र शक्त्यपेक्षया व्यवस्था द्रष्टव्या । आपस्तम्बस्तु चतुरः पाद-कृच्छ्रान् कृत्वा तेषां वर्णभेदेन व्यवस्थामाह,—

"त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् ।
सायं त्र्यहं तथा पादः पादः प्रातस्तथा त्र्यहम् ॥
प्रातःपादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् ।
अयाचितन्तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम्"—इति ।

अर्द्धकृच्छ्रपादोनकृच्छ्रयोरपि स्वरूपं सएवाह,—

"सायं प्रातर्दिनार्द्धं स्यात् पादोनं नक्तवर्जितम्"—इति।

अयमर्थः । अयाचितोपवासयोस्त्र्यहद्वयानुष्ठानेनार्द्धकृच्छ्रो भवति। नक्तत्र्यहव्यतिरिक्तत्र्यहत्रयानुष्ठानेन† पादोनकृच्छ्रो भवति ।

अर्द्धकृच्छ्रप्रकारोऽपि तेनैवोक्तः,—

"सायं प्रातस्तथैवोक्तं दिनद्वयमयाचितम् ।

---

* त्र्यहं,—इति मु० ।

† नक्तव्यतिरिक्तत्र्यहानुष्ठानेन,—इति मु० ।

दिनद्वयन्तु नाश्नीयात् कृच्छ्रार्द्धं तद्विधीयते"—इति।

अत्रापि शक्त्यपेक्षया व्यवस्था द्रष्टव्या। यत्तु जपहोमादिवकङ्ग-सहितं प्राजापत्यकृच्छ्रं गौतमेनाभिहितम्। "हविष्यान् प्रातराशान् भुक्ता तिस्रोरात्रीर्नाश्नीयात्। अथापरं त्र्यहं नक्तं भुञ्जीत। अथापरं त्र्यहं न कञ्चन याचेत। अथापरं त्र्यहमुपवसेत्। तिष्ठेदहनि रात्रावासीत। क्षिप्रकामः। सत्यं वदेत। अनार्य्यैं न सम्भाषेत। रौरवयौधाजये नित्यं प्रयुञ्जीत। अनुसवनमुदकोपस्पर्शनमापो हिष्ठेति तिसृभिः पवित्रवतीभिर्मार्जयित्वा हिरण्यवर्णाः शुचयः पावका-इत्यष्टाभिः। अथोदकतर्पणम्। नमोहमाय संहमाय धुन्वते ताप-साय पुनर्व्वसवे। नमोमौञ्ज्यायोम्याय वसुविन्दाय। नमः पराय महापराय परदाय पारयिष्णवे। नमो रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचरायाधिपतये हरायेश्वरायेशानायोग्राय वज्रिणे घृणिने कपर्दिने। नमः सूर्य्यायादित्याय नमः नीलकण्ठाय शिति-केशाय*। नमः कृष्णाय पिङ्गलाय। नमः ज्येष्ठाय श्रेष्ठाय वृद्धा-येन्द्राय हरिकेशायोर्द्धरतसे। नमः सत्याय पावकाय पावकसर्गाय† कामाय कामरूपाय। नमः दीप्ताय दीप्तरूपिणे। नमः तीक्ष्णाय तीक्ष्णरूपिणे। नमः सौम्याय सुपुरुषाय‡ मध्यमपुरुषाय उत्तम-पुरुषाय ब्रह्मचारिणे। नमः चन्द्रललाटाय कृत्तिवाससे। एतदेवा-

---

* शितिकण्ठाय,—इति मु०।

† पावकवर्णाय,—इति मु०।

‡ सौम्याय सौम्यरूपाय महापुरुषाय,—इति मु०।

दित्योपस्थानम् । एता आज्याहुतयः । द्वादशरात्रस्यान्ते चरुं श्रपयित्वै-ताभ्यो देवताभ्यो जुहुयात् । अग्नये स्वाहा सोमाय स्वाहा अग्नी-षोमाभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतये अग्नये स्विष्ट-कृते इति । अन्ते ब्राह्मणभोजनम्"—इति ।

हविष्यानित्याद्युपवसेदित्यन्तेन प्राजापत्यस्य स्वरूपमुक्तम् । तिष्ठेत्यादिना तस्यैवेतिकर्त्तव्यतोच्यते । अहनि तिष्ठेदित्यनेन भोज-नाद्यविरुद्धकालेषु अहरुत्थितएव स्यात् । रात्रावसीतेत्यनेन निद्राया आवश्यकत्वात् तामासीनएव सेवतेत्युक्तं भवति । चिप्रकामोऽपि भवेत्, शीघ्रं शुद्धः स्यामिति संजातकामोऽपि भवेदित्यर्थः । अथवा, शीघ्रं शुद्धिकामोऽहनि तिष्ठेत् रात्रावासीतेत्यर्थः ।

एवं, सत्यं वदेदित्याद्यङ्गकलापे चिप्रकामः,—इति अधिका-रिविशेषणमनुषञ्जनीयम् । अनेन, यः शनैः शनैः शुद्धोभवामीति मन्यते; तस्य नायं नियम इति अवगम्यते । रौरवयौधाजये सामनी । नमोहमायेत्यादयस्त्रयोदश मन्त्रास्तर्पणसूर्य्योपस्थानाज्यहोमेषु द्रष्ट-व्याः । अथवा, सम्प्रदानविभक्त्यन्ताः षट्पञ्चाशन्मन्त्राः । तर्पणमनु-षवनं कर्त्तव्यम् । स्नानाङ्गत्वात् तर्पणस्य । तथा च भृगुः,—

"नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तर्पणं त्रिविधस्याङ्गमेषएव विधिः सदा"-इति ।

आदित्योपस्थानाज्यहोमौ तु प्रतिदिनं सकृत् सकृत् कर्त्तव्यौ । अथोदकतर्पणमादित्योपस्थानमाज्यहोमश्चेति वक्तव्ये एतदेवादित्यो-पस्थानं, एता आज्याहुतय इति पृथग्योगकरणात् । शिष्टं स्पष्टम् ।

एतद्धारीताद्युक्तजपहोमाद्यङ्गरहितप्राजापत्यद्वयस्थाने वेदित-

व्यम्। बहुप्रयाससाध्यत्वेनातिगुरुत्वात्। अथवा, येषां शूद्रादीनां मन्त्राधिकारोनोस्ति, तेषां जपहोमादिरहितं प्राजापत्यं वेदितव्यम्। अतएवोक्तमङ्गिरसा,—

"तस्माच्छूद्रं समासाद्य सदा धर्म्मपथे स्थितम्।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्"—इति॥

येषां ब्राह्मणादीनां जपहोमादिष्वधिकारः, तेषां गौतमोक्तं वेदितव्यम्।

अथातिकृच्छ्रः।

तस्य लक्षणमुक्तं चतुर्व्विंशतिमते,—

"एकैकं ग्रासमश्नीयात् त्र्यहानि त्रीणि पूर्व्ववत्।
त्र्यहं चोपवसेन्नित्यमतिकृच्छ्रं चरन् द्विजः"—इति॥

एकभक्तनक्तायाचितदिवसेषु नवस्वेकैकं ग्रासमश्नीयात्। त्र्यहञ्चोपवसेत्। एवं चातिकृच्छ्रोभवतीत्यर्थः। यत्तु याज्ञवल्क्येनोक्तम्,—

"अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजने"—इति।

अयमेव प्राजापत्यकृच्छ्र एकभक्तनक्तायाचितदिवसेषु नवसु पाणिपूरान्नभोजनयुक्तोऽतिकृच्छ्रो भवतीत्यर्थः। तदेतदशक्तविषयम्। पाणिपुरान्नस्य ग्रासपरिमितादन्नादधिकपरिमाणत्वात्।

अथ कृच्छ्रातिकृच्छ्रः।

तस्य लक्षणं याज्ञवल्क्येनोक्तम्,—

"कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्"—इति।

विष्णुरपि,—

"कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्"—इति।

क्षपयेदिति शेषः । यत्तु गौतमः । "अब्भक्षस्तृतीयः कृच्छ्रातिकृच्छ्रः"—इति । एकभक्तनक्तायाचितदिवसेषु यो भोजनकालः, तस्मिन्नेव काले केवलमुदकेन वर्त्तनं कृच्छ्रातिकृच्छ्रोभवतीति । तदेतच्छक्तविषयम् । अतिकृच्छ्रकृच्छ्रातिकृच्छ्रयोरपि प्राजापत्यकृच्छ्रोक्तेतिकर्त्तव्यता द्रष्टव्या । "एतेनैव कृच्छ्रातिकृच्छ्रौ व्याख्यातौ"—इति गौतमवचनात् ।

पराकलक्षणमाह यमः,—

"द्वादशाहं निराहारो यतात्मा संशितव्रतः ।
कृच्छ्रः पराकनामैष सर्व्वपापप्रणाशनः"—इति ॥

पर्णकृच्छ्रलक्षणमाह याज्ञवल्क्यः,—

"पर्णोदुम्बरराजीवविल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः"—इति ॥

पलाशोदुम्बरारविन्दविल्वपर्णानामेकैकेन* क्वथितमुदकं प्रत्यहं पिवेत् । पर्णकृच्छ्रस्य लक्षणान्तरमाह यमः,—

"एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः ।
क्वाथयित्वा पिवेदद्भिः पर्णकृच्छ्रोविधीयते†"—इति ॥

यदा पलाशादिपत्राण्येकीकृत्यांभसा क्वाथयित्वा त्रिरात्रोपवासान्ते क्वथितं तत् पिवेत्, तदा पर्णकृच्छ्रो भवतीत्यर्थः ।

---

* इत्थमेव पाठः सर्व्वत्र । विल्वपर्णकुशानामेकैकेन,—इति तु भवितुं युक्तम् ।

† इत्थमेव पाठः सर्व्वत्र । मम तु, पर्णकृच्छ्रोऽभिधीयते,—इति पाठः प्रतिभाति ।

फलकृच्छ्रादीनां स्वरूपमाह मार्कण्डेयः,—

"फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः ।
श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा ॥
मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम् ।
पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते[1] ॥
मूलकृच्छ्रः स्मृतोमूलैस्तोयकृच्छ्रो जलेन तु"—इति ।

यदा विल्वादिफलान्यंभसा क्वाथयित्वा मासमेकं तदम्भः पिबति, तदा फलकृच्छ्रो भवति। यदा विल्वपद्माक्षमूलानामन्यतमस्य क्वाथं मासं पिबेत्, तदा श्रीकृच्छ्रोभवति। यदा त्वेतेषां पत्रपुष्पमूलानां क्वाथं पिबेत्, तदा पत्रपुष्पमूलकृच्छ्राणि भवन्ति।

वारुणश्रीकृच्छ्रयोर्लक्षणमाह यमः,—

"ब्रह्मचारी जितक्रोध आमिश्रोदकसक्तुकान् ।
पिबेच्च नियताहारः कृच्छ्रं वारुणमुच्यते ॥
त्र्यहं पिबेत् तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं वै यावकेनैव श्रीकृच्छ्रं ह्येतदुच्यते"—इति ॥

सौम्यकृच्छ्रस्वरूपमाह याज्ञवल्क्यः,—

"पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते"—इति ॥

आचामश्चोदननिस्रावः। पिण्याकादीनां पञ्चानामेकैकं प्रतिदिनमुपभुज्य षष्ठेऽहन्युपवसेत्। एष सौम्यकृच्छ्रः। यत्तु जावालेन चतुरहव्यापी सौम्यकृच्छ्र इत्युक्तम्,—

---

[1] पुष्पैः पुष्पस्तथोच्यते,—इति मु०।

"पिण्याकं सक्तवस्तक्रं चतुर्थेऽहन्यभोजनम् ।
वासोवै दक्षिणां दद्यात् सौम्योऽयं कृच्छ्र उच्यते"—इति ।

तदेतदशक्तविषयम् ।

अथ तुलापुरुषः । तत्र जावालिः,—

"पिण्याकञ्च तथाऽऽचामं तक्रं चोदकसक्तवः ।
त्रिरात्रमुपवासश्च तुलापुरुषउच्यते"—इति ॥

सोऽयमष्टदिवससाध्यः । याज्ञवल्क्यस्तु पञ्चदशदिवससाध्यमाह,–

"एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुषइत्येवं ज्ञेयः पञ्चदशाहिकः"—इति ॥

एषां प्रकृतानां पिण्याकादीनां पञ्चद्रव्याणाम् । यमस्त्वेकविंशतिदिवससाध्यमाह,—

"आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् ।
त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षस्त्र्यहद्वयम् ।
एकविंशतिरात्रस्तु तुलापुरुषउच्यते"—इति ॥

तदेतत्त्रयं पापतारतम्यविषयतया व्यवस्थापनीयम् । अत्रेतिकर्त्तव्यतामाह हारीतः । "अथातस्त्रिणयनोक्तस्य तुलापुरुषस्य कल्पं व्याख्यास्यामः ।

अयाज्ययाजनं कृत्वा प्राश्य मूत्रपुरीषयोः ।
अप्रतिग्राह्यमादाय याजयित्वा विनिन्दितान् ॥
विनायकोपसृष्टस्य महाव्याधिहतस्य च ।
एतत् कृच्छ्रं तुलापुरुषं महापातकनाशनम् ॥
स्वर्गद्वारमिदं पुण्यं महादेवेन निर्मितम् ।

आचाममथ पिण्याकं तक्रं चोदकसक्तुकान्॥
त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षस्त्र्यहद्वयम्* ।
वाचा कायेन मनसा कृतानि विविधानि च ॥
आचामस्तानि निर्हन्ति नवश्राद्धञ्च सूतकम् ।
भिक्षाञ्च दारुणञ्चैतत्† केशकीटहतञ्च यत् ॥
आखोर्मूत्रपुरीषञ्च ब्रह्महस्पृष्टमेवच ।
पिण्याकस्तानि निर्हन्ति अस्थि शिला तु यत् स्थितम् ॥
आहारेषु च ये दोषाः स्नेहदोषाश्च ये क्वचित् ।
खरोष्ट्रमुखसंस्पृष्टमुग्रसंस्पृष्टमेवच ।
तक्रेण तानि निर्हन्ति यच्चान्यत् श्वावलोकितम् ॥
कनकाश्वतिलागावो भूमिराच्छादनं स्त्रियः ।
सर्व्वं पुनाति धर्मात्मा गूढ़ं चोदकसक्तुभिः ॥

ब्रह्महत्यां भ्रूणहत्यां स्वर्णस्तेयं गुरुदाराभिगमनं कन्यादूषणं क्लीबाभिगमनमुदक्याभिगमनं वायुभक्षः पुनाति।

तच्चन्दनोशीरमयौ पुरुषौ कारयेत् पटे ।
नदीमृत्तिकया वाऽपि पुरुषौ द्वौ च कारयेत् ॥
महापशुर्येन शरेण विद्धो-
यदा शस्त्रमुभयतो यच्च लक्ष्यम्।
तेनायसीं सुकृतां कारयित्वा
प्रादेशमात्रामुभयतोजातशिक्याम् ॥

---

* वायुभक्षः परं त्र्यहम्,—इति शा० ।
† दारुणं किञ्चित्,—इति मु० ।

सौवर्णीं राजतीं वाऽपि तुलां देवीं तु कारयेत् ।
अपि चन्दनवृक्षस्य खदिरस्यापि कारयेत् ॥
तस्यालाभे तुला कार्य्या यथा वाऽप्युपपद्यते ।

पुरुषं पिङ्गलं चक्रहलमुसलशूलवज्रपाणिमावाहयामि। स्वसरेहि मातरेहि सुधाम एहि नाग एहि कृष्णाजिन एहि। स्वागतमनुस्वागतम् । भगवते तुलापुरुषाय महादेवायेदमासनमिदं पाद्यमिदमाचमनीयमिदं गन्धमाल्यधूपदीपनैवेद्यं प्रतिगृहाण प्रसीद देव, तुभ्यं नमः। अक्रुद्धः सुमनाभव। अथ तुलामभिमन्त्रयेत् । ऋषिसत्यं ब्रह्मसत्यं देवसत्यं अन्तःसत्यं, तेन सत्येन सत्यवादिनि,

देशानां सम्पदं ब्रूहि कं देशं* वर्द्धयिष्यसि ।
राज्ञाञ्च सम्पदं ब्रूहि किमस्माकं भविष्यति† ॥
यदात्मानमसत् कर्त्तुं तुलासमधृतं परम् ।
यदा च लघु मन्येत तदा कर्म समारभेत् ॥

अग्नये पृथिव्यधिपतये स्वाहा । वायवेऽन्तरिक्षाधिपतये स्वाहा । सूर्य्याय दिनाधिपतये‡ स्वाहा। सोमाय नक्षत्राधिपतये स्वाहा। वासुकये नागाधिपतये स्वाहा । कुबेराय यक्षाधिपतये स्वाहा। इन्द्राय देवाधिपतये स्वाहा। ब्रह्मणे त्रैलोक्याधिपतये स्वाहा। देव्यै भगाधिपतये स्वाहा । हलकंटकाय स्वाहा। कुष्माण्डराजपुत्राय स्वाहा । विनायकाय स्वाहा। महाविनायकाय स्वाहा।

---

* कोदेशो,—इति मु० ।
† प्रयच्छसि,—इति मु० ।
‡ दिव्याधिपतये,—इति मु० ।

महामहाविनायकाय स्वाहा। वक्रतुण्डाय गणानां पतये स्वाहा। धर्माय स्वाहा। अधर्माय स्वाहा। तुलायै स्वाहा। तुलापुरुषाय स्वाहा। देव्यै पुनरगमनाय स्वाहा। सकृच्चरित्वा शुचिः पूतः कर्मण्यो भवति। द्वितीयं चरित्वा गाणपत्यं प्राप्नोति। तृतीयं चरित्वा महादेवस्यावसथं प्राप्नोति। आषाढ्यां कार्त्तिक्यां फाल्गुन्यां वा पुण्ये नक्षत्रे एष विहितोधर्मः"—इति।

वारुणकृच्छ्रमाह यमः,—

"ब्रह्मचारी जितक्रोधो मासेऽप्युदकसक्तुकान्।
पिबेच्च नियताहारः कृच्छ्रं वारुणमुच्यते"—इति॥

अघमर्षणकृच्छ्रमाह विष्णुः। "अथ कृच्छ्राणि भवन्ति। त्र्यहं नाश्नीयात्। प्रत्यहं च त्रिषवणं स्नानमाचरेत्*। मग्नस्त्रिरघमर्षणं जपेत्। दिवा स्थितस्तिष्ठेद्रात्रावासीत। कर्मणोऽन्ते पयस्विनीं दद्यादित्यघमर्षणम्"—इति। शङ्खस्तु प्रकारान्तरेणाह,—

"त्र्यहं त्रिषवणस्नायी मौनी स्यादघमर्षणम्।
मनसा त्रिः पाठेदप्सु न भुञ्जीत दिनत्रयम्॥
अघमर्षणमित्येतद्व्रतं सर्व्वाघसूदनम्"—इति।

अथ यज्ञकृच्छ्रः। तत्राङ्गिराः,—

"युक्तस्त्रिषवणस्नायी संयतो मौनसंस्थितः†।
प्रातःस्नानसमारम्भं कुर्य्याज्जपञ्च नित्यशः॥
सावित्रीं व्याहृतीश्चैव जपेदष्टसहस्रकम्।

---

* अथ कृच्छ्राणि भवन्ति। त्र्यहं त्रिषवणं स्नानमाचरेत्,—इति मु०।
† मौनमाश्रितः,—इति मु०।

ॐकारमादितः कृत्वा कृपे कृपे तथाऽन्ततः ॥
भूमौ वीरासने युक्तः कुर्य्याज्जप्यं सुसंयतः* ।
आसीनस्य स्थितो वाऽपि पिबेद्गव्यं पयः सकृत् ॥
गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि ।
दध्नोऽभावे भवेत्तक्रं तक्राभावे तु यावकम् ॥
एषामन्यतमं यच्चेदुपपद्येत तत्पिबेत् ।
गोमूत्रेण समायुक्तं यावकं चोपयोजयेत् ॥
एकाहेन तु कृच्छ्रोऽयमुक्तस्त्वङ्गिरसा स्वयम् ।
सर्व्वपापहरो दिव्यो नाम्ना यज्ञ इति स्मृतः ॥
एतत्पातकयुक्तानां तथा चाप्युपपातकैः ।
महद्भिश्चापि युक्तानां प्रायश्चित्तमिदं शुभम्”—इति ॥

देवकृतं कृच्छ्रं दर्शयति यमः,—

“यवागूं यावकं शाकं क्षीरं दधि घृतं तथा ।
त्र्यहं त्र्यहन्तु प्राश्नीयाद्वायुभक्षः परं त्र्यहम् ॥
कृच्छ्रं देवकृतं नाम सर्व्वकल्मषनाशनम् ।
मरुद्भिर्व्वसुभीरुद्रै रादित्यैश्चरितं व्रतम् ।
व्रतस्यास्य प्रभावेन विरजस्का हि तेऽभवन्”—इति ॥

यावककृच्छ्रमाह शङ्खः,—

“गोपुरीषयवाभ्यां च मासमेकं समाहितः ।
व्रतन्तु यावकं कुर्य्यात् सर्व्वपापापनुत्तये”—इति ॥

देवलोऽपि । “यवानामप्सु साधितानां सप्तरात्रं पक्षं मासं वा प्राशनं

* कुर्य्याज्जप्यन्तु नित्यशः,—इति मु० ।

यावकः। एतेन यावकपायसोदकानि व्याख्यातानि। यावकपायसोदकानि प्राजापत्यविधानेन व्याख्यातानि भवन्ति"—इति।

अथ प्रसृतियावकः। तत्र हारीतः। "यश्चात्मकृतैः कर्मभिर्गुरुमात्मानं पश्येत्, आत्मार्थं प्रसृतियावकं श्रपयेत्। ततोऽग्नौ जुहुयात्। *तदेव वलिकर्म*। शृतं चाभिमन्त्रयेत्।

यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः।
निर्णोदः सर्व्वपापानां पवित्र ऋषिभिः† स्मृतः॥
घृतं यवा मधु यवा आपोहिष्ठाऽमृतं यवाः।
सर्व्वं पुनन्तु मे पापं यन्मया दुष्कृतं कृतम्॥
वाचा कृतं कर्मकृतं मनसा दुर्व्विचिन्तितम्।
अलक्ष्मीं कालकर्णीं च सर्व्वं पुनीत मे यवाः॥
मातापित्रोरशुश्रूषां यौवने कारितां‡ तथा।
श्वशूकरावलीढञ्च उच्छिष्टोपहतं च यत्॥
सुवर्णस्तेयं व्रात्यत्वं वालत्वादात्मनस्तथा§।
ब्राह्मणानां परीवादं सर्व्वं पुनीत मे यवाः॥

वक्ष्यमाणां रक्षां कुर्य्यात्। नमोरुद्राय भूताधिपतये द्यौः सावित्री मानस्तोकेति पात्रे त्रिर्निषिच्य ये देवा मनोजातामनोयुजः सुदक्षादक्षपितरस्ते नः पान्तु ते नोऽवन्तु तेभ्योनमस्तेभ्यः स्वाहेत्यात्मनि जुहुयात्। त्रिरात्रमेवार्थार्थी,पापकृत् षड्रात्रं पीत्वा पूतो भवति। सप्त-

* नास्त्ययमंशः मु० पुस्तके।
† पवित्रमृषिभिः,—इति मु०।
‡ वयसा कारितां,—इति मु०।
§ बाधित्वा चात्मनस्तथा,—इति मु०

रात्रं महापातकी। द्वादशरात्रं पीत्वा सर्व्वं पुरुषकृतं पापं निर्हरति। निःसृतानां यवानामेकविंशतिरात्रं पीत्वा गणान् पश्यति। गणाधिपतिं पश्यति। विद्यां पश्यति। विद्याऽधिपतिं पश्यति। योऽश्नीयाद्यावकं पक्वं गोमूत्रेषु सकृद्दधि चीरसर्पिः प्रमुच्यते सोऽंहसः क्षणादित्याह भगवान् मैत्रावरुणिः"—इति।

इत्थं प्रजापत्यादिव्रतानि निरूपितानि। अथ व्रतग्रहणप्रकारः। तत्र विष्णुः,—

"सर्व्वपापेषु सर्व्वेषां व्रतानां विधिपूर्व्वकम्* ।
ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते ॥
दिनान्ते नखरोमादीन् प्रवाप्य स्नानमाचरेत् ।
भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः ॥
मलापकर्षणं कार्य्यं वाह्यशौचोपसिद्धये† ।
दन्तधावनपूर्व्वेण पञ्चगव्येन संयुतम् ॥
व्रतं निशामुखे ग्राह्यं वहिस्तारकदर्शने ।
आचम्यातः परं मौनी ध्यायन् दुष्कृतमात्मनः ॥
मनःसन्तापनं तीव्रमुद्वहेच्छोकमन्ततः"—इति।

वहिः, ग्रामान्निष्क्रम्येत्यर्थः। पूर्व्वेद्युर्निशामुखे व्रतं परिषदुद्दिष्टप्रकारेण संकल्प्य परेद्युस्त्रिषवणस्नानप्रातर्होमाद्यङ्गसहितं व्रतमनुष्ठातुमारभेत। प्रातर्होमाद्यङ्गानि च जावालेन दर्शितानि,—

"आरम्भे सर्व्वकृच्छ्राणां समाप्तौ च विशेषतः ।

---

* विधिरुच्यते,—इति मु० ।

† वाह्यशौचं विशुद्धये,—इति मु० ।

आज्येनैव हि शालाग्नौ जुहुयादाहुतीः पृथक् ॥

श्राद्धं कुर्य्याद्व्रतान्ते च गोहिरण्यादिदक्षिणाम्”—इति ।

यमोऽपि,—

“पश्चात्तापो निवृत्तिश्च स्नानं चाहुतयोदितम् ।

नैमित्तिकानां सर्व्वेषां व्रतानां विधिपूर्व्वकम् ॥

गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलमनुलेपनम् ।

व्रतस्थोवर्जयेत् सर्व्वं यच्चान्यद्बलरागहृत्”—इति ।

गृहीतस्य व्रतस्यासमापने प्रत्यवायमाह छागलेयः,—

“पूर्व्वं व्रतं गृहीत्वा तु नाचरेत् कामतो हि यः ।

जीवन् भवति चण्डालो मृतः श्वा चाभिजायते”—इति ॥

अथ पूर्व्वोक्तानां व्रतानां केनचिन्निमित्तेनानुष्ठानाशक्तौ यथा-योगं प्रत्याम्नाया उच्यन्ते। तत्र प्राजापत्यस्य प्रत्याम्नायाश्चतुर्व्विंशति-मते दर्शिताः,—

“कृच्छ्रोदित्ययुतं चैव प्राणायामशतद्वयम् ।

तिलहोमसहस्रन्तु वेदपारायणं तथा ॥

विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैवच ।

अथवा पावमानेष्टिः समान्याहुर्मनीषिणः”—इति ॥

स्मृत्यन्तरेऽपि,—

“कृच्छ्रोऽयुतन्तु गायत्र्या उदवास* स्तथैवच ।

धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्”—इति ॥

स्मृत्यन्तरेऽपि,—

* उपवास,—इति मु० ।

"प्राजापत्यक्रियाऽशक्तौ धेनुं दद्याद्द्विजोत्तमः ।
धेनोरभावे दातव्यं मूल्यन्तुल्यं न संशयः"—इति ॥

मूल्यञ्च यथाशक्ति देयम् । अतएव ब्रह्मपुराणे,—

"गवामभावे निष्कं स्यात्तदर्द्धं पादमेव वा"—इति ।

यत्र यावत्सङ्ख्यया प्राजापत्यान्यावर्त्तनीयानि भवन्ति, तत्र तावत् सङ्ख्यया गोदानान्यावर्त्तनीयानि । तदपि चतुर्व्विंशतिमते दर्शितम्,—

"जन्मप्रभृति पापानि बहूनि विविधानि च ।
अर्वाक् तु ब्रह्महत्यायाः षड़ब्दं कृच्छ्रमाचरेत् ॥
प्रत्याम्नाये गवां देयं साशीति धनिनां शतम् ।
तथाऽष्टादशलक्षाणि गायत्र्या वा जपेद्बुधः"—इति ।

ननूक्तरीत्या द्वादशवार्षिकस्य* प्रत्याम्नायत्वेन षट्त्रिंशल्लक्षसंख्याको गायत्रीजपः प्राप्नोति । कोटिसंख्याकस्तु चतुर्व्विंशतिमते एव स्मर्य्यते,—

"गायत्र्यास्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति ।
लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥
पुनाति हेमहर्त्तारं गायत्रीलक्षसप्ततिः ।
गायत्र्याः षष्टिभिर्लक्षैर्मुच्यते गुरुतल्पगः"—इति ॥

तथा सति परस्परविरोधः स्यादिति चेत् । एवं तर्ह्यनयैवानुपपत्त्या कोटिजपोन प्रत्याम्नायः, किन्तु द्वादशवार्षिकव्रतसमानविषयतया विकल्प्यते इति कल्पनीयम् । चान्द्रायणादीनां प्रत्याम्नायास्तत्रैव दर्शिताः,—

---

* द्वादशवार्षिकप्राजापत्यस्य,—इति पा० ।

"चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च।
मित्रविन्दापशुश्चैव कृच्छ्रामासत्रयं* तथा॥
तिलहोमायुतश्चैव पराकद्वयमेव च।
गायत्र्या लक्षजप्यश्च समान्याह बृहस्पतिः॥
नित्यनैमित्तिकानाञ्च काम्यानां चैव कर्म्मणाम्।
इष्टीनां पशुबन्धानामभावे चरवः स्मृताः॥
पराकतप्तकृच्छ्राणां स्थाने कृच्छ्रत्रयं† चरेत्।
व्रतहोमादिकं वाऽपि कल्पयेत् पूर्व्वकल्पवत्"—इति॥

यस्तु तपस्यसमर्थः धान्यसमृद्धश्च, स कृच्छ्रादिव्रतानि ब्राह्मणभोजनेन सम्पादयेत्। तदपि तत्रैवोक्तम्,—

"कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये
चत्वारिंशच्च तप्ते त्रिगुणभगुणिताविंशतिः स्यात् पराके।
कृच्छ्रे सन्तापनाख्ये भवति षड़धिका विंशतिः सैव क्षीणा
द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलोभोजयेद्विप्रमुख्यान्"—इति॥

अहरहरिति सर्व्वत्र सम्बध्यते। तृतीयः कृच्छ्रातिकृच्छ्रः। यत्तु प्राजापत्यप्रत्याम्नायत्वेन, "विप्राद्वादश वा भोज्याः"—इति पूर्व्वमुदाहृतम्। तत् निर्धनविषयम्। धनिकस्य प्रतिदिनं पञ्च पञ्चेति द्वादशसु दिवसेषु षष्टिब्राह्मणभोजनविधानात्। अतएव स्मृत्यन्तरे,—

"प्राजापत्यं चरन् विप्रो यदाऽशक्तः कथञ्चन।
अहानि पञ्च विप्राग्र्यान् भोजयेत् सम्यगीप्सितान्"—इति॥

---

* मासकृच्छ्रत्रयं,—इति मु०।

† कृच्छ्रद्वयं,—इति शा०।

सान्तपनादीनां गोदानप्रत्याम्नायस्तत्रैव दर्शितः,—

"प्राजापत्ये तु गामेकां दद्यात् सान्तपने द्वयम् ।
पराकतप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु गास्तथा ॥
अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा ।
यथाविभवसारेण दानं दद्याद्विशुद्धये"—इति ॥

यत्तु स्मृत्यन्तरे चान्द्रायणस्य गोदानत्रयमभिहितम्,—

"प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयं स्मृतम् ।
चान्द्रायणे पराके च तिस्रस्तादक्षिणा तथा*"—इति ।

तत् निर्धनविषयम् । यथोक्तगोदानादाशक्तो गोभ्यस्तृणं दद्यात् । तथाह कण्वः,—

"एकमध्ययनं कुर्य्यात् प्राजापत्यमथापिवा ।
दद्याद्वा दशसाहस्रं गवां मुष्टिं विचक्षणः"—इति ॥

अध्ययनजपादीनां पुरुषविशेषेण व्यवस्था चतुर्व्विंशतिमते दर्शिता,—

"धर्मनिष्ठास्तपोनिष्ठाः कदाचित् पापमागताः ।
जपहोमादिकं तेभ्यो विशेषेण विधीयते ॥
नामधारकविप्रा ये मूर्खाधर्मा विवर्जिताः ।
कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः ॥
धनिना दक्षिणा देया प्रयत्नविहिता तु या ।
एवं नरविशेषेण प्रायश्चित्तानि दापयेत्"—इति ॥

---

* स्मृता,—इति मु० ।

† धन,—इति मु० ।

अनयैव दिशा स्मृत्यन्तरे प्रसिद्धास्तीर्थयात्रादिप्रत्याम्नाया-यथायोगमुन्नेयाः। अतएव देवलः,—

"अभिगम्य च तीर्थानि पुण्यान्यायतनानि च।
नरः पापात् प्रमुच्येत ब्राह्मणानां तपस्विनाम्॥
सर्व्वाः समुद्रगाः पुण्याः सर्व्वे पुण्यानगोत्तमाः।
सर्व्वमायतनं पुण्यं सर्व्वे पुण्यावनाश्रयाः"—इति॥

तीर्थानि, गङ्गा सरस्वती यमुना नर्मदा विपाशा वितस्ता कौशिकी नन्दा विरजा चन्द्रभागा सरयुः उत्पथवर्त्ती* सिन्धुः कृष्णा वेणी† शोणा तापी पारावती पाषाणकी गोमती गण्डकी बाउदा‡ पम्पा देविका कावेरी ताम्रपर्णी चर्मण्वती वेत्रवती गोदावरी तुङ्गभद्रा सुवर्णरेखा चेति महानद्यः पुण्यतमाः। गङ्गाद्वारं कनखलं शक्रावतारं सौकरं प्रयागो गङ्गासागरमिति एतानि गङ्गायास्तीर्थानि। शाखं प्रस्रवणं वृद्धकन्याकं सारस्वतमा-दित्यतीर्थं वदरी पाञ्चालं वैजयन्तं पृथूदकं नैमिषं विनशनं चा-पोद्भेदं प्रभास इति सारस्वततीर्थानि। कावेरीसङ्गमं सरस्वतीसङ्गमं गन्धमादनमिति सामुद्राख्यतीर्थानि पुण्यतमानीति§। पुष्करं मूर्द्धजं गयाशिरः कुरुक्षेत्रमिति पुण्यक्षेत्राणि। वाराणसी महाभैरवं देव-दारुवनं सौरं प्राचीनवाहः केदारं मध्यमं महारुद्रं महाबलं महा-

* उत्पथवर्त्ती,—इति नास्ति शा० पुस्तके।

† कृष्णवेणी,—इति मु०।

‡ बाउदाही,—मु०।

§ पुण्यतमानीति,—इति नास्ति मु० पुस्तके।

लयं कुमारमहालयं रुद्रावतारं वङ्गलं* विष्णुग्रिवं महाकालं पुरुषोत्तमं जम्बूमार्गं चेत्येतान्यायतनानि। हिमवानुदयो महेन्द्रोविदुरः शतशृङ्गः श्रीपर्व्वतो वेदपर्व्वतो† विन्ध्यपर्व्वतः परियात्रश्चेति पर्व्वताः पुण्यतमाः पापं नाशयन्ति। अन्यानि चेत्रायतनपर्व्वताश्चतीर्थानि पुण्यतमानि भवन्ति। विश्वामित्रः,—

"कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणम्।
प्रकाशे च रहस्ये चाप्यनुक्ते संशयेऽस्फुटे॥
प्राजापत्यं सान्तपनं शिशुकृच्छ्रः पराककः।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः॥
महासान्तपनं शोध्येत्तप्तकृच्छ्रस्तु पावनः।
जपोपवासकृच्छ्रस्तु ब्रह्मकूर्चस्तु शोधनः।
एते व्यस्ताः समस्तावा प्रत्येकं द्व्येकतोऽपिवा॥
पातकादिषु सर्व्वेषु उपपातकेषु यत्नतः।
कार्य्याश्चान्द्रायणयुताः केवला वा विशुद्धये॥
उपवासास्त्रिरात्रं वा मासः पक्षस्तदर्द्धकम्।
षड़हो द्वादशाहानि कार्य्या शुद्धिः फलैर्विना॥
उपपातकयुक्तानामनादिष्टेषु चैवहि।
शक्तिजातिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं लघु॥
अनुबन्धादिकं दृष्ट्वा कल्प्यं सर्व्वं यथाऽऽगमम्।

---

* चगलण्डं,—इति मु०।

† श्रीपर्व्वतो देवपर्व्वतोनीलपर्व्वतः,—इति मु०।

प्रकाशउक्तं यत्किञ्चिद्विंशोभागो रहस्यके ॥

त्रिंशद्भागः षष्टिभागः कल्प्यो जात्याद्यपेक्षया" इति।

*जमदग्निः,—

"तीर्थे तु पादकृच्छ्रं स्यान्नद्यामर्द्धफलं लभेत्।

द्विगुणन्तु महानद्यां सङ्गमे त्रिगुणं भवेत्"—इति* ॥

इति कृच्छ्रप्रत्याम्नाया निरूपिताः।

अथ कर्मविपाको निरूप्यते।

यद्यपि लोके धर्मशब्दः सुकृतदुष्कृतयोः साधारणः, तथाप्यत्र प्रायश्चित्तस्य प्रकृतत्वात्तन्निवर्त्त्यतया दुष्कृतस्यैव बुद्धिस्थत्वात्तत्रैव पर्य्यवस्यति। विशेषेण पचनं विपाकः फलदशा। कर्म्मणां विपाकः कर्म्मविपाकः। स च विपाकस्त्रिविधः, जन्म चायुर्भोगश्चेति। एतत् सर्व्वं पतञ्जलिर्योगशास्त्रे सूचयामास। "सति मूले तद्विपाकोजा त्यायुर्भोगाः"—इति। अस्य सूत्रस्यायमर्थः। अविद्याऽस्मितारागद्वेषा-भिनिवेशात्मकाः पञ्च क्लेशाः कर्म्मणां मूलम्। "क्लेशमूलः कर्म्मा-शयः"-इति सूचितत्वात्। सति तस्मिन् पञ्चक्लेशात्मके मूले तानि कर्माणि विपच्यन्ते। दग्धक्लेशबीजस्य तु जीवन्मुक्तस्य न सञ्चितानि कर्माणि फलमारभन्ते। ज्ञानाग्निना भस्मसात् कृतत्वात्। यथा वितु-षोव्रीहिर्न प्ररोहति। तद्वत्। तस्मात् बीजस्थानीयं क्लेशपञ्चकमुप-जीव्यैव कर्माणि जन्मादित्रयरूपेण विपच्यन्ते।

तच्च जन्म क्रिम्यादि।

"पतितं याजयित्वा तु क्रिमियोनौ प्रजायते"—

---

* नास्त्ययमंशः मु॰ पुस्तके।

इत्यादिस्मरणात् । आयुः पञ्चदशवर्षादिकम् ।

"तत्र जीवति वर्षाणि दश पञ्च च वा द्विज,"—

इत्यभिधानात् । भोगोयमयातनादिः ।

"यमलोके तु ते घोरां लभन्ते परियातनाम्"—

इत्यादिस्मरणात् ।

तमेतं जात्यायुर्भोगलक्षणं विपाकं सामान्यविशेषशास्त्रोदाहरणेन बहुधा प्रपञ्चयिष्यामः ।

ननु नायं विपाकोविधातुं प्रतिषेद्धुं वा शक्यते, अननुष्ठेयत्वादवर्जनीयत्वाच्च । अतएव तस्मिन् विधिप्रतिषेधपरेण शास्त्रेण तन्निरूपणमयुक्तम् ।

नायं दोषः । प्रायश्चित्तार्थवादत्वेन तदुपयोगात् । अर्थवादस्तु विहिते प्रवर्त्तकत्वेन प्रतिषिद्धान्निवर्त्तकत्वेन च विधिप्रतिषेधैक्यतां भजते इति न्यायविदां मर्य्यादा ।

अत्र च प्राजापत्याद्यनुष्ठानरूपस्य प्रायश्चित्तस्य क्लेशात्मकत्वाद्रागतः प्रवृत्तिर्न सम्भवतीति तत्र प्रवृत्तिसिद्धये प्ररोचना कर्त्तव्या ।

ननु विहितेष्वग्निष्टोमादिषु स्वर्गादिविपाकोपवर्णनेन प्ररोचयितुं शक्यते । स्वर्गादीनामनुकूलफलत्वात् । क्षयरोगादीनां तु प्रतिकूलफलत्वेन तदुपवर्णनं न प्ररोचनायोपयुक्तम् ।

विषम उपन्यासः । तत्र हि स्वर्गादिसाधने प्ररोचनमुत्पादनीयम् । न त्वत्र क्षयरोगादिसाधने प्ररोचनमुत्पाद्यते । किन्तर्हि क्षयरोगादिनिवर्त्तके प्रायश्चित्ते । तन्निवृत्तिश्चानुकूलं फलम् ।

नन्वेवमपि क्षयरोगादिनिवृत्तिरूपएव प्रायश्चित्तात्मकस्य कर्म-

णो विपाकः प्ररोचकत्वेन वक्तव्यः। न तु ब्रह्महत्यादिविपाकः। तस्याप्ररोचकत्वात्। मैवम्। द्विविधा हि ब्रह्महत्यादयः, संचिताः सञ्चेष्यमाणाश्च। तत्र सञ्चेष्यमाणेषु प्रतिषेधविषयेषु ब्रह्महत्यादिषु क्षयरोगाद्युपन्यासो ब्राह्मणावगोरणादौ शतयातनादिवत् तन्निवर्त्त-कार्थवादत्वेनान्वेति। संचितेषु प्रतिकूलं फलं श्रुत्वा तत उद्विजमान-स्तन्निवृत्त्युपायमाकांक्षति। अत उद्वेगप्रयोजकतया प्रायश्चित्तेऽपि प्रवर्त्तकत्वं भवतीति प्रवर्त्तकनिवर्त्तकद्विविधार्थवादत्वेनायं कर्मवि-पाकोपन्यास उपयुज्यते।

तदेवं सञ्चितसंचेष्यमाणयोरुपयोगः। आरब्धफलेषु प्रतिकूलफ-लस्य प्रत्यक्षदर्शनादेवोद्वेगः सिद्ध्यति। प्रवर्त्तकन्तु व्याध्यादिनि-वृत्तिरूपस्य प्रायश्चित्तविपाकस्योपवर्णनम्। अतः क्षयरोगादिरूपस्त-न्निवृत्तिरूपस्य विपाकोऽत्र निरूप्यते।

तत्र सामान्येन पापकर्मविपाकः शिवधर्मोत्तरेऽभिहितः,—

"अथातः पततां पुंसामधर्मः परिकीर्त्तितः।
नरकादौ महाघोरे पतनात् पापमुच्यते"—इति।

विष्णुधर्मोत्तरेऽपि,—

"आतिवाहिकसंज्ञस्तु देहो भवति भार्गव।
केवलं तन्मनुष्याणां मृत्युकालउपस्थिते॥
याम्यैर्नरैर्मनुष्याणां तत् शरीरं भृगूत्तम।
नीयते याम्यमार्गेण नान्येषां प्राणिनां द्विज।
मनुष्याः प्रतिपद्यन्ते स्वर्गं नरकमेव वा॥
नैवान्ये प्राणिनः केचित् सर्व्वे ते फलभोगिनः।

शुभानामशुभानाञ्च कर्मणां भृगुनन्दन ॥
सञ्चयः क्रियते लोके मनुष्यैरेव केवलम् ।
तस्मान्मनुष्यस्य मृतोयमलोकं प्रपद्यते ॥
नान्यः प्राणी महाभाग, फलयोनौ व्यवस्थितः ।
याम्यलोकं प्रपन्नस्य पुरुषस्य तथा यमः ॥
योनीश्च नरकांश्चैव निरूपयति कर्मणा"—इति ।

ब्रह्मपुराणेऽपि,—

"कर्मणा मनसा वाचा ये धर्मविमुखा नराः ।
यमलोके तु ते घोरां लभन्ते परियातनाम् ॥
इहाल्पमपि कृत्वा तु नरः कर्माशुभात्मकम् ।
प्राप्नोति नरकं घोरं यमलोकेषु यातनाम्"—इति ॥

विष्णुपुराणेऽपि,—

"पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ।
पापानामनुरूपाणि प्रायश्चित्तानि तद्यथा* ॥
तथा तथैव संस्मृत्य प्रोक्तानि परमर्षिभिः"—इति ।

विष्णुधर्मोत्तरे—

"प्रायश्चित्तैः क्षयं याति कृतं पापं न संशयः ।
प्रायश्चित्तविहीना ये राजभिश्चाप्यदण्डिताः ॥
नरकं प्रतिपद्यन्ते तिर्य्यग्योनिं तथैव च ।

---

* यानि च,—इति मु० ।

† यथा,—इति मु० ।

मानुष्यमपि चासाद्य भवन्तीह तथाऽङ्किताः॥
प्रायश्चित्तमतः कार्य्यं कल्मषस्यापनुत्तये"—इति।

भविष्योत्तरेऽपि,—

"देवतिर्य्यङ्मनुष्याणामधर्मनिरतात्मनाम्।
धर्मराजः स्मृतः शास्ता सुघोरैर्विविधैर्विधैः॥
नियमाचारसक्तानां प्रमादात् स्खलितात्मनाम्।
प्रायश्चित्तैर्गुरुः शास्ता न तु तैरिष्यते यमः।
पारदारिकचोराणामन्यायव्यवहारिणाम्॥
नृपतिः शासकः प्रोक्तः प्रच्छन्नानां च धर्मराट्।
तस्मात् कृतस्य पापस्य प्रायश्चित्तं समाचरेत्"—इति॥

ब्रह्मपुराणे,—

"ततस्तु यातनादेहं क्रमेण प्रतिपद्यते।
तत् कर्मजं यातनार्थममातापितृसम्भवम्॥
तत्प्रमाणवयोऽवस्थासंस्थानैः प्राक्तनं यथा।
विहाय सुमहागुप्तं शरीरं पाञ्चभौतिकम्॥
अन्यत् शरीरमादत्ते यातनार्थं स्वकर्मजम्।
तन्मात्रगुणसंयुक्तं नानात्मीयं स्वकर्मजम्॥
दृढं शरीरमाप्नोति सुखदुःखोपभुक्तये।
तेन भुक्त्वा स्वकर्माणि पापकर्त्ता नरो भृशम्॥
सुखानि धार्मिकोभुङ्क्ते इहानीतो यमक्षयात्"—इति।

मनुस्तु मानसादिकर्मविशेषेण विपाकविशेषमाह,—

"चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्मस्त्वयाऽनघ।

कर्म्मणां फलनिर्वृत्तिं शंस नस्तत्त्वतः पराम् ॥
स तानुवाच धर्म्मात्मा महर्षीन्मानवो भृगुः ।
अस्य सर्व्वस्य शृणुत कर्म्मयोगस्य निर्णयम् ॥
शुभाशुभफलं कर्म मनोवाग्देहसम्भवम् ।
कर्म्मजा गतयो नृणामुत्तमाधममध्यमाः ॥
तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः ।
दशलक्षणयुक्तस्य मनो विद्यात् प्रवर्त्तकम् ॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥
पारुष्यमनृतञ्चैव पैशुन्यञ्चैव सर्व्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्व्विधम् ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ॥
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ।
मानसं मनसैवायमुपभुंक्ते शुभाशुभम् ॥
वाचैव वाक्कृतं कर्म्म कायेनैव तु कायिकम् ।
शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्”—इति ।

हारीतोऽपि । “सर्व्वाभक्ष्यभक्षणमभोज्यभोजनमगम्यागमनमयाज्ययाजनमसत्प्रतिग्रहणं परदाराभिगमनं परद्रव्यापहरणं प्राणिहिंसा चेति शारीराणि । पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाचिकानि । परोपतापनं पराभिद्रोहः क्रोधो लोभोमोहोऽहङ्कारश्चेति मानसानि । तदेतान्यष्टादश नैरयाणि कर्माणि यस्मिन्

यस्मिन् करोति यः, स तस्मिन् तस्मिन् वयसि शारीरवाचिकमानसानि प्राप्नोति। एवं ह्याह,—

यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम्।
तस्यां तस्यामवस्थायां तत्तत्फलमवाप्नुयात्।
शरीरेणैव शारीरं वाङ्मयेन तु वाचिकम्।
मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्"—इति॥

आत्मन ईश्वरस्वरूपत्वं प्रतिपाद्याह याज्ञवल्क्यः,—

"यद्येवं स कथं ब्रह्मन्, पापयोनिषु जायते।
ईश्वरः स कथं भावै*रनिष्टैः संप्रयुज्यते।
करणैरन्वितस्यापि पूर्व्वज्ञानं कथञ्च न॥
वेत्ति सर्व्वगतां कस्मात् सर्व्वगोऽपि न वेदनाम्।
अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः॥
दोषैः प्रयाति जीवोऽयं भवयोनिशतेषु च।
अनन्ताश्च यथा भावाः शरीरेषु शरीरिणाम्॥
रूपाण्यपि तथैवेह सर्व्वयोनिषु देहिनाम्।
विपाकः कर्मणां प्रेत्य केषाञ्चिदिह जायते॥
इह चामुत्र चैकेषां भावस्तत्र प्रयोजनम्।
परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन्॥
वितथाभिनिवेशी च जायतेऽन्त्यादियोनिषु।
पुरुषानृतवादी† च पिशुनः पुरुषस्तथा॥

---

* पापै,—इति मु०।

† एवं प्राण्युपघाती,—इति मु०।

अनिबद्धप्रलापी* च मृतः† पक्षिषु जायते ।
अदत्तादाननिरतः परदारोपसेवकः ॥
हिंसकश्चाविधानेन स्थावरेष्वभिजायते"—इति ।

सत्वादिगुणविशेषेण विपाकविशेषं सएवाह,—

"आत्मज्ञः शौचवान् दान्तस्तपस्वी विजितेन्द्रियः ।
धर्मकृद्वेदविद्याति सात्विकोदेवयोनिताम् ॥
असत्कार्य्यरतो धीर आरम्भी विषयात्मकः ।
स राजसो मनुष्येषु मृतोजन्माधिगच्छति ॥
निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।
प्रमादवान् भिन्नवृत्तो भवेत्तिर्य्यक्षु तामसः ॥
रजसा तमसा चैव समाविष्टो भ्रमन्निह ।
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते"—इति ॥

मनुरपि,—

"सत्वं रजस्तमश्चेति त्रीन् विद्यादात्मनोगुणान् ।
यैर्व्याप्येमान् स्थितो भावान्महान् सर्व्वानशेषतः ॥
यो यदैषां गुणोदेहे साकल्येनातिरिच्यते ।
स तदा तद्गुणप्रायं तं करोति शरीरिणम् ।
सत्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् ॥
एतद्व्याप्तिमदेतेषां सर्व्वभूताश्रितं वपुः ।

* अनुबन्धी प्रलापी,—इति मु० ।
† मृता,—इति मु० ।

प्राणिनां हिंसको नित्यं स प्रेतो जायते नरः।
अकृत्वा देवकार्य्यं यस्तथा च पितृतर्पणम्॥
योऽश्नाति भृत्यवर्गेभ्योऽदत्वा प्रेतः स जायते।
परदाररतश्चैव परवित्तापहारकः॥
परापवादसन्तुष्टः स प्रेतो जायते नरः।
कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया॥
कुरूपाय कुशीलाय स प्रेतो जायते नरः।
देवस्त्रीगुरुवित्तानि गृहीत्वा न प्रयच्छति॥
विशेषाद्ब्राह्मणेन्द्राणां स प्रेतो जायते नरः।
दीयमानस्य वित्तस्य ब्राह्मणेभ्यस्तु पापकृत्।
विघ्नमाचरते यस्तु स प्रेतो जायते नरः॥
शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदि॥
त्रिकालज्ञो वेदवेदी धर्मज्ञोऽथ षडङ्गवित्।
चतुर्व्वेद्यपि यो विप्रः स प्रेतो जायते नरः॥
शास्त्रकर्त्ता ग्रन्थकर्त्ता यद्यपि स्यात् षडङ्गवित्।
कुलदेशोचितं कर्म यस्त्यक्त्वाऽन्यत् समाचरेत्॥
कामाद्वा यदि वा मोहात् स प्रेतो जायते नरः।
उच्छिष्टस्य विशेषेण अन्तरिचमृतस्य च॥
विषाग्निजलमृत्यूनां तथा चैवात्मघातिनाम्।
प्रेतत्वं जायते नूनं सत्यमेतन्न संशयः”—इति॥

अग्निपुराणे,—

“मातरं पितरं वृद्धं ज्ञातिं साधुजनन्तथा।

लोभात्त्यजति यस्त्वेतान् स प्रेतो जायते नरः ॥
कुज्योतिः कुत्सितो वैद्यः कुज्ञानी च कुदेशिकः ।
शूद्रानुग्रहकर्त्ता च स प्रेतो जायते नरः ॥
निन्दको द्विजदेवानां गीतवाद्यरतः सदा ।
वृद्धं वालं गुरुं विप्रान् सोऽवमत्य भुनक्ति वै ॥
कन्यां ददाति शुल्केन स प्रेतो जायते नरः ।
न्यासापहर्त्ता मित्रभुक् परपाकरतः सदा ॥
निर्दोषं सुहृदं भार्य्यां ऋतुकाले न याति यः* ।
न सहेत यज्ञस्तेषां स प्रेतो जायते नरः ॥
हस्त्यश्वरथयानानि मृतशय्याऽऽसनानि च ।
कृष्णाजिनन्तु गृह्णाति अनापदि तु यो द्विजः ॥
तथोभयमुखीं घोरां सशैलां मेदिनीं द्विजः ॥
कुरुक्षेत्रे च यद्दानं चण्डालात् पतितात् तथा ।
मासिके च नवश्राद्धे भुञ्जन् प्रेतार्थमेवच ।
भूमिकन्याऽपहर्त्ताच स प्रेतो जायते नरः''—इति ॥

उमामहेश्वरसंवादे,—

"अपहृत्य च सर्व्वस्वं देवस्वं च तथापरम् ।
दत्तापहारदानाद्यं† पैशाच्यं याति वै नरः ॥
योनिकार्य्यञ्च यो देवि, अहितेन तु‡ कारयेत् ।

---

* त्यजन् काले न याति यः,—इति मु० ।

† दत्तापहारात् दानाच,—इति मु० ।

‡ न हि तेन तु,—इति मु० ।

सोऽपि याति पिशाचत्वं स्वामिद्रोहेण मानवः ॥
स्वामिद्रव्यं गृहीत्वा तु न यजेन्न ददाति च।
आत्मनः पोषको मूढः पिशाचत्वं स गच्छति ॥
मठापत्यञ्च* यो देवि, कुरुते मदमोहितः।
विनाशयेन्मठद्रव्यं निर्माल्यं यश्च भक्षति ॥
परस्य योषितं हृत्वा ब्राह्मणस्वमपहृत्य च।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥
अधर्मं धर्ममित्याहुर्ये तु मोहवशं गताः।
हर्त्तारः परदाराणां चौर्य्येण बलतोऽपि वा।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः"—इति ॥

मनुः—

"संयोगं पतितैर्गत्वा परस्यैवच योषितम्।
अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः ॥
गुरु त्वं कृत्य हुं कृत्य विप्रं निर्जित्य वादतः।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥
आचार्य्यमृत्विजश्चैव गुरुं चैव तपस्विनम् ॥
मुनींश्चाप्यवमन्यन्ते ते भवन्तीह राक्षसाः"—इति।

वामनपुराणे,—

"चण्डालादन्त्यजाद्वाऽपि प्रतिगृह्णाति दक्षिणाम्।
याजको यजमानश्च स स्यात्तु स्थलकीटकः"—इति ॥

---

* मठोऽपत्यञ्च,—इति पा०।

स्कान्दे रेवाखण्डे,—

"बुभुक्षितेषु भृत्येषु यएकोऽश्नाति मानवः।
श्वयोनिं स समासाद्य चण्डालो जायते नरः॥
वेदोक्तं यः परित्यज्य धर्ममन्यं समाचरेत्।
दश वर्षसहस्राणि श्वयोनौ जायते ध्रुवम्॥
वेदार्थ* निन्दका ये च ये च ब्राह्मणनिन्दकाः।
इह जन्मनि शूद्रास्ते मृताः श्वानो भवन्ति ह"—इति॥

ब्रह्मपुराणे,—

"यदि पुत्रसमं शिष्यं गुरुर्जह्यादकारणम्।
आत्मनः कामकारेण सोऽपि हिंस्रः प्रजायते॥
पितरं मातरं चैव यस्तु पुत्रोऽवमन्यते।
सोऽपि विप्रोमृतोजन्तुः पूर्व्वं जायेत गर्दभः।
गर्दभत्वन्तु संप्राप्य ततो जायेत मानवः॥
ज्येष्ठं पितृसमं चापि भ्रातरं योऽवमन्यते।
सोऽपि मृत्युमवाप्नोति क्रौञ्चयोनौ च जायते॥
आग्राऽपहर्त्ता तु नरः क्रिमियोनौ प्रजायते।
विश्वासहर्त्ता तु नरो मीनोजायेत दुर्म्मतिः॥
उपस्थिते विवाहे तु यज्ञे दाने महोत्सवे।
मोहात्करोति योविघ्नं स मृतो जायते क्रिमिः॥
कृतघ्नस्तु मृतो विप्रोयमस्य विषयं गतः।

---

* वेदाग्नि,—इति मु०।

यमस्य विषये क्रूरैर्बन्धं प्राप्नोति दारुणम् ॥
यातनाः प्राप्य तत्रस्थस्ततोवक्ष्ये श्रृणोद्विजाः।
ततोगतः* कृतघ्नस्य संसारं प्रतिपद्यते ॥
जलप्रवहणं यस्तु भिन्द्यान्मत्स्योभवेत्तु सः।
अयोनिगो वृकोहि स्यादुलूकः क्रयवञ्चनात् ॥
प्रतिश्रुत्य द्विजेभ्यश्चाप्यदत्वा मधुकोऽ† भवेत्।
लभेद्देवलको राजन् योनिं चण्डालसंज्ञिताम् ॥
मृतस्यैकादशाहे तु भुञ्जन् श्वा वाभिजायते"—इति।

गरुड़पुराणे,—
"कौटसाक्ष्यप्रदाः पापा अमेध्यक्रिमयश्चिरम्।
भूत्वा भवन्ति सर्पास्ते पिशाचास्तदनन्तरम् ॥
गुरुमित्रद्रुहः पापा ये च स्वामिद्रुहो जनाः।
द्विजग्निध्रुहश्चैव कृतघ्नानास्तिकास्तथा ॥
त्यागिनो बान्धवानाञ्च त्यागिनः शरणार्थिनाम्।
अमेध्यक्रिमयः सर्व्वे मृगव्याधा भवन्ति च ॥
गुरुरोलगणोपेताजायन्ते शम्बुकाजले।
चन्द्रार्कग्रहणे भुक्ता जायते कुञ्जरो नरः"—इति ॥

शिवधर्म्मोत्तरे,—
"विप्रः पञ्चमहायज्ञानकृत्वा योऽन्नमश्नुते ॥
विड्वराहो भवेन्नित्यं क्रव्यादो व्याधएवच।

---

* ततोदंशः,—इति मु०।
† द्विजेभ्यश्चादत्वा मधुकोे,—इति मु०।

द्विजस्त्वेकशफानाञ्च विक्रयाज्जायते मृगः ॥
सत्योऽपि विट्क्रिमिश्चैव अवज्ञाकार्य्यधः क्रिमिः”—इति ।

वायुसंहितायाम्,—

“खरो वै बक्कयाचित्वात् काकोमन्त्रितभोजनात्* ।
अपरीक्षितभोजी स्यात् वानरो विजने वने ॥
अविद्यां यः प्रयच्छेत बलीवर्द्दो भवेत्तु सः ।
अन्नं पर्य्युषितं विप्रे दत्वा वै कुष्ठतां† व्रजेत्”—इति ॥

उमामहेश्वरसंवादे,—

“अग्निहोत्रं भवेद्यस्य न कुर्य्यात् तस्य रक्षणम् ।
पर्व्वातिक्रमकारी तु मृगत्वं याति ब्राह्मणः ॥
वेदोपजीविकाः पापाः स्त्रीलोलाः सततं च ये ।
भवन्ति चेह काकाः‡ सुचिरं विड्भुजएवच ॥
पायसं कृसरं चैव हवींषि मधुराणि च ।
अदत्वा चाग्निविप्रेभ्यः आश्नन्नाक्कुनगोभवेत्”—इति ॥

नारदपुराणे,—

“भर्त्तुः सौख्येन या नारी सौख्ययुक्ता न जायते ।
सा श्येनी जायते राजन्, त्रीणि वर्षाणि पञ्च च ।
वाचा चाक्रोशिका या तु मत्सिरस्त्र मतिं स्त्रिया ॥
अकार्य्यं कारयेत्पापा सा नारी वल्गुरी भवेत् ।

---

* काकोनिमन्त्रितभोजनात्,—इति ग्रा० ।

† कुलतां,—इति मु० ।

‡ जाताः,—इति मु० ।

भर्त्तुरर्थे हि या वित्तं विद्यमानं न यच्छति ॥
जीवितं वा वरारोहे, विष्ठायां जायते क्रिमिः ॥
क्रिमियोनिविनिर्मुक्ता काष्ठकीटा भवेत्तु सा ।
न साधयन्ति कार्य्याणि प्रभूणां ये विचेतसः ॥
भूत्वा* वेतनभोक्तारो जायन्ते भूलता हि ते"—इति ।

वृद्धगौतमः,—

"मौख्यादेदोपदोष्टा च व्याघ्रो भवति मानवः ।
जम्बूको जायते जन्तुरननुज्ञातपाठकः ॥
शूद्रात् पतति चण्डालो ब्रह्मद्रव्योपजीवकः"—इति ।

याज्ञवल्क्योऽपि,—

"परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन् ।
वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु ॥
पुरुषोऽनृतवादी च पिशुनः पुरुषस्तथा ।
अनिबद्धप्रलापी च मृगपक्षिषु जायते ॥
अदत्तादाननिरतः परदारोपसेवकः ।
हिंसकश्चाविधानेन स्थावरेषु प्रजायते"—इति ॥

अथ नानानिषिद्धकर्मफलानि । उमामहेश्वरसंवादे,—

"श्वपाकपुल्कसादीनां कुत्सितानामचेतसाम् ।
कुलेषु तेऽभिजायन्ते गुरुवृद्धावमानिनः ॥
गुरूणां ह्यननुज्ञातो यो वेदाभ्यासमाचरेत् ।
स प्रयाति विहीनेषु जायते भुवि मानवः ॥

* भृत्या,—इति मु० ।

अधर्मं धर्ममित्याहुर्ये तु मोहवशं गताः ।
ते च कालहतोद्योगाः सम्भवन्तीह मानुषे ॥
निर्होमानिर्वषट्कारास्ते भवन्ति नराधमाः”—इति ।

स्कान्दे नागरखण्डम्,—

“प्राप्नुवन्ति कुदेशे च जन्म ये हेतुवादकाः ।
स्वामिद्रोहरता ये च कुक्कुटे जन्म चाप्नुयुः ॥
अदत्वा ये तथाऽश्नन्ति पितृदेवद्विजातिषु ।
दुर्भिक्षे जनतापे च कुदेशे जन्म चाप्नुयुः ॥
ये च कुर्व्वन्ति दम्पत्योर्विवादं सानुरागयोः ।
विरूपा भ्रममाणाश्च सर्व्वलोकविवर्जिताः* ॥
दरिद्रा जायया भ्रष्टा भवन्ति विगतायुषः ।
कन्यादाने च विघ्नं यो विक्रयं यः करोति वा ॥
स कन्याः केवलां सूते न पुत्रं केवलं क्वचित् ।
जायन्ते ताश्च वन्ध्यक्यो विधवा दुर्भगास्तथा”—इति ॥

प्रभासखण्डे,—

“यैर्न दत्तं नरैः किञ्चित्तेषां चिह्नं दरिद्रता ।
जायन्ते रोगिणोरौद्राहिंस्राः कुब्जाश्च वामनाः ॥
अपुत्राः कलहाक्रान्ताः परदारोपसेवकाः ।
महाराजकाकर्माणः कुचेलाः कुशरीरिणः ॥

* विगर्हिताः,—इति मु० ।
† केवलाः,—इति ग्रा० ।
‡ वह्याराजिक,—इति मु० ।

कुदण्डाश्वपलालुब्धा मूर्खा निष्ठुरभाषिणः।
धनहीना* भवन्त्येते देवब्रह्मस्वभक्षकाः”—इति॥

स्कान्दे रेवाखण्डे,—

“पिता माता गुरुर्भ्राता अन्यो वा विकलेन्द्रियः।
भवन्ति नादृता यैस्तु ते भवन्ति नराधमाः।
इह मानुषलोकेऽस्मिन् हीनाङ्गास्ते भवन्ति च॥
ये त्यजन्ति स्वकां भार्य्यां मूढ़ाः पण्डितमानिनः।
ते यान्ति नरकं घोरं तामिस्रं नात्र संशयः॥
तत्र वर्षशतस्यान्ते इह मानुषतां गतः।
दुष्कर्म्मा दुर्भगश्चैव दरिद्रः संप्रजायते॥
जायते ग्रन्थिसंयुक्तः परभार्य्योपसेवकः।
गद्गदोऽनृतवादी स्यात् मूकश्चैव गवानृते॥
अन्नं पर्य्युषितं विप्रे दद्दै कुब्जतां व्रजेत्।
मात्सर्य्यादपि जात्यन्धोद्वेषाच्च बधिरो भवेत्॥
अदत्वा भक्ष्यमश्नाति अनपत्यो भवेच्च सः”—इति।

गरुड़पुराणे,—

“अवमत्य च ये यान्ति भगवत्कीर्त्तनं नराः।
बाधिर्य्यमुपयान्त्याशु ते वै जन्मनि जन्मनि॥
पश्यन्तो भगवद्द्वारं ताममात्यपरिच्छदम्।
अकृत्वा तत्प्रणामादि ये यान्ति पुरुषाधमाः॥
जात्यन्धास्तेऽभिजायन्तेऽप्यङ्गहीनापरिग्रहाः।

* दानहीना,—इति पा०।

पङ्गवः पादहीनाश्च कुष्ठिनो भुवि ये नराः ॥
विष्णुच्छाया ध्रुवं तैस्तु लङ्घिता स्यात् न संशयः ।
तथाच भगवद्धामच्छायामाक्रमते तु यः ॥
अरण्ये जायते पङ्गुः स वै रोगादिपीड़ितः”—इति ।

विष्णुधर्मोत्तरेऽपि,—

“पिशुनः पूतिनासः स्यात् सूचकः पूतिवक्त्रकः ।
खल्वाटोमत्सरी चैव नास्तिको वेदनिन्दकः ॥
भूयएव समाप्नोति तथा नास्तिकतां द्विजः ।
घूर्णिकस्तैलिकश्चैव अन्धो भवति मानवः ॥
प्रतिकूलं गुरोर्यस्तु सोऽपस्मारी च जायते ।
मिष्टाश्येको महाभाग, वातगुल्मी प्रजापते ॥
भगभक्षस्तु कुण्डाशी दीर्घरोगी च पीड़कः ।
गुरुस्वामिद्विजाक्रोशं वेदनिन्दां तथैवच ॥
श्रुत्वा* भवति दुर्बुद्धिर्बधिरोमानवाधमः ।
देवदत्तेन दीपेन कृत्वा कर्म्म सुदुर्मतिः† ॥
जायते बुद्बुदाक्षोवा नेत्ररोगयुतोऽपिवा ।
तथैव हीनरूपश्च तेन पापेन कर्म्मणा ॥
हीनवर्णस्तथा लोके भवत्यत्यन्तदुर्मतिः ।
विरूपएव भवति तथाऽविक्रेयविक्रयी ॥

* कृत्वा,—इति मु० ।

† कर्म्माणि दुर्म्मतिः,—इति मु० ।

विनाऽपराधेन तथा कृत्वा पत्न्यधिवेदनम्।
स राजामयमाप्नोति व्यवहारे तथैवच ॥
मूलकर्म्म तथा कृत्वा वशीकरणकारणात्।
द्वेष्यो भवति लोकेऽस्मिन् जगतो नात्र संशयः ॥
परिवेत्ता तथा लोके सर्व्वव्याधिसमन्वितः।
अयाज्ययाजकश्चैव जायते वर्णसङ्करः ॥
वेदविक्रयिको मूर्खः कितवश्चैव जायते।
नास्तिकस्तु दरिद्रः स्यात् सर्व्वकर्मविवर्जितः ॥
अतिमानप्रवृत्तस्तु जायते कुत्सिते कुले।
श्वपाकपुल्कसादीनां कुत्सितानामचेतसाम्।
कुलेषु तेऽभिजायन्ते गुरुवृद्धापवादकाः*।
श्वभ्रे तु मरणं लोके विषैः स्थावरजङ्गमैः।
परेषां चेतसः क्लेशकारी भवति† मानवः।
क्षयी ज्वरी प्रमोही च गुल्मी दाही भगन्दरी ॥
रजस्वलान्त्यचण्डालपापिष्ठपतितैः सह।
व्यवहारी पुष्पवत्यां भुक्ता कुष्ठी ज्वरी भवेत् ॥
अनपत्यो दरिद्रश्च विश्वस्तस्य विषप्रदः।
निषिद्धवस्तुभोगेन मोहयेद्यः परान् पुमान् ॥
परोपदिष्टज्ञानो वा भवेदुन्मत्तकोऽपिवा।
ऋणं दत्त्वाऽधिकां वृद्धिं योग्यक्रातोह मानवः ॥

---

* कारकाः,—इति मु०।

† अत्र, प्राप्नोति,—इति पाठो भवितुं युक्तः।

स भूत्वा धनिनां वंशे व्रजेद्देशान्तरं ततः ।
वाणिज्यलाभस्तत्रापि नास्ति तस्य नरस्य वै ॥
असुख्यसुख्यकारी यः स ज्वरी श्वासकासवान् ।
सर्वाङ्गरोगः पापात्मा द्वेष्टा मृतसमाङ्गभाक्”—इति ॥

उमामहेश्वरसंवादे,—

“मृष्टान्नेन य आत्मानं पोषयन्ति नराधमाः ।
बालानां वीक्षमाणानामदत्त्वान्ति निस्पृहः ॥
न कृतं न तपस्तप्तमदत्तं किञ्च ब्राह्मणे ।
आत्मैव पोषितो येन तत्पापं कथयाम्यहम् ॥
यत्र देशे लनावृष्टिर्यत्र वायुसमुद्भवः ।
तस्मिन् देशे क्षुधार्त्तास्तु जायन्ते पापकर्मिणः”—इति ॥

पद्मपुराणे,—

“यस्तु विप्रत्वमुत्सृज्य क्षत्रधर्मं निषेवते ।
ब्राह्मण्यात्स परिभ्रष्टः क्षत्रयोनौ प्रजायते ॥
वैश्यकर्मा च योविप्रो लोभमोहव्यपाश्रयः ।
स द्विजो वैश्यतामेति शूद्रकर्म करोति यः ॥
स्वधर्मप्रच्युतोविप्रः स हि शूद्रत्वमाप्नुयात् ।
क्षत्रियोवा महाबाहो वैश्यो वा धर्मचारिणौ ॥
स्वानि कर्माण्यपाकृत्य शूद्रकर्म निषेवते ।
स्वस्थानाच्च परिभ्रष्टो जायते वर्णसङ्करः ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा याति तादृशः ।
शूद्रान्नेनोदरस्थेन म्रियते यदि पुत्रक ॥

ब्राह्मणः शूद्रतामेति नास्ति तत्र विचारणा"—इति।

मार्कण्डेयपुराणे,—

"ब्राह्मणः चत्त्रियोवैश्यः स्ववर्णे पाणिसंग्रहम्।

अकृत्वा त्वन्यथा पाणेः पतन्ति नृप, संग्रहात्॥

यस्तु यस्यास्तु हीनायाः कुरुते पाणिसंग्रहम्।

अकृत्वा वर्णसंयोगं सोऽपि तद्वर्णभाग्भवेत्"—इति॥

अथ विशेषेण कर्मविपाकः।

तत्र हिंसाविशेषाद्योनिविशेषः। तत्र मनुः,—

"यां यां योनिन्तु जीवोऽयं येन येनेह कर्मणा।

क्रमशोऽश्नाति लोकेऽस्मिन्नेतत्सर्वं निबोध मे॥

बहून् वर्षगणान् घोरान् नरकान् प्राप्य तत्क्षणात्।

संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमान्॥

श्वशूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्।

चण्डालपुल्कसानाञ्च ब्रह्महा योनिमृच्छति"—इति॥

नन्दिपुराणे,—

"नरकेषु क्रमेणैव ब्रह्महा पाच्यते नरः।

कल्पं कल्पं ततश्चान्ते स्थावरश्च प्रजायते॥

तृणगुल्मलतावल्लीवीरुद्द्रुमविभेदतः।

तृणभेदास्त्वगणिता गुल्मभेदास्तथा मताः॥

लताभेदाश्च निःसंख्यावल्लीभेदास्तथैवच।

वीरुद्भेदास्त्वसंख्याता असंख्या द्रुमजातयः॥

तेषाञ्च देशभेदेन पुनः कष्टत्वमुच्यते।

दंष्ट्रिभ्यश्च नखिभ्यश्च चण्डालाद्ब्राह्मणात् तथा ।
गृहाधःपतनाच्चैव द्रुमाधःपातनात् तथा ॥
गोभ्यश्च मरणं लोके विज्ञेयं पापकर्म्मणाम् ।
ताडितस्ताड्यते लोके हारितोहार्य्यते तथा ॥
हत्वा बधमवाप्नोति नात्र कार्य्या विचारणा ।
यद्‌यत् परस्याचरति तत्तदस्योपजायते ॥
प्राप्नोति यादृशीं बाधां कर्मणा स्वकृतेन यः ।
तस्यापि तादृशी बाधा ज्ञेया जन्मनि जन्मनि ॥
तस्मात् सर्व्वप्रयत्नेन परबाधां विवर्जयेत्"—इति ।

महाभारतेऽपि,—

"ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा गताचारास्ते भवन्ति गतायुषः ॥
कुशीलाभिन्नमर्य्यादानित्यं सङ्कीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरानिरयगामिनः ॥
लोष्ट्रमर्द्दी तृणच्छेदी नखखादी* च योनरः ।
नित्योच्छिष्टः सूचकश्च नेहायुर्विन्दते महत् ॥
आयुरस्य निकृन्तामि प्रजामस्याददे तथा ।
यः उच्छिष्टः प्रवदति स्वाध्यायं चाधिगच्छति ॥
यश्चानध्यायकालेऽपि मोहादभ्यसते द्विजः ।
प्रत्यादित्यं प्रत्यनलं प्रति गाञ्च प्रति द्विजम् ॥
ये मेहयन्ति पथि च ते भवन्ति गतायुषः"—इति ।

---

* नखघाती,—इति मु० ।

शिवधर्म्मोत्तरे,—

"देवद्रव्योपजीवी च स भवेद्दपवाहकः।
देवद्रव्यं स्वयं येन भुक्तं यस्य सदा भवेत्।
रसज्ञाविधुरः कुब्जः कण्डूसर्वाङ्गदुःखितः॥
देवस्वं नरः कृत्वा परप्रत्ययकारणात्॥
मिथ्याऽऽचारं चरेत् पश्चादर्ब्बुदाख्योनरो भवेत्*।
देवदासीधनं भुक्त्वा वृहद्गुल्मी च वै क्रमात्॥
सर्वाङ्गकुष्ठी तिमिरी नरोभवति पापतः।
दीपं देवगृहाद्धृत्वा पङ्गुस्त्वन्धो भवेन्नरः॥
मूर्च्छी भ्रमी सुरद्वेष्टा पक्षपाती ज्वरी भवेत्।
देवावमन्ता भवति सर्व्वदा मैथुने रतः॥
सदाऽपहृतसर्व्वस्वः कुत्सितः काममोहितः"—इति।

वृद्धगौतमः। "देवद्रव्योपजीवी हृद्रोगी। प्रतिज्ञाय ब्राह्मणस्यादानादल्पायुः। पत्नीवञ्चने सत्येकारामः क्लीवः। स्वामिना धर्मे नियुक्तः तदनुष्ठानाशक्तोजलोदरी। दुर्ब्बलबाधे बलवतामुपेक्षायामङ्गहीनः। व्यवहारपक्षपाते जिह्वारोगी। स्वयं प्रवर्त्तितधर्मानुष्ठानच्छेदने प्रतिपन्नेष्टवियोगः। स्वयमग्रभुक् शूलरोगी। परिक्षीणमित्रबन्धुस्वामिस्वजनावमन्ता परिभूतवृत्तिः। अतिथिं पश्यन्नश्नतः कपालपङ्क्तिका। सूर्य्यास्तकाले प्रतिश्रयादानादिष्टवियोगः। छद्मना गुरुस्वामिमित्रमुपचरतः प्राप्तार्थपरिभ्रंशः। विश्रम्भापहारी सर्व्वदुःखाश्रयः। गोदुःखकारी गोनामहा। गोनिर्दयश्चिपिटनासः। पथना-

* पश्चाद्दुन्दुदास्यो वनेचरः,—इति पाठान्तरम्।

शकोनिस्तेजस्कः। सभायाङ्गलग्रन्थी पुण्यान्वेषी वक्रणासः। शिष्टचीर्णधर्मदूषकः केकराचः। साधुजनतपस्विदेवद्विजगुरुज्ञानयोगद्वेष्टा वक्रास्यः। तटाकारामभेत्ता नेत्राङ्गहीनः। कृतघ्नः सर्व्वारम्भविकलः। परस्त्राभिलाषी चयरोगी स्यात्। चौररचकः,

व्यवहारेष्वमध्यस्थश्चौरवृत्तिपरस्य यः।
वाणिज्यलाभोनो तस्य देशान्तरगतस्य च ॥
व्याधिः स्यात् प्राणसन्देहो मृतिस्तत्रैव पापिनः"—इति।

शिवधर्म्मोत्तरे,—

"एवं पापविशुद्धास्य सावशेषेण कर्म्मणा* ।
ततः चितिं समासाद्य जायन्ते देहिनः पुनः ॥
तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु ।
निष्क्रान्ता कीटयोनिभ्यः क्रमाज्जायन्ति पक्षिणः ॥
संक्लिष्टाः पक्षिभावेन जायन्ते मृगयोनिषु ।
मृगदुःखमतिक्रम्य जायन्ते पशुयोनिषु ॥
पशुयोनिं समासाद्य पुनर्जायन्ति मानुषाः।
एवं योनिषु सर्व्वासु परिक्रम्य क्रमेण तु ॥
कालान्तरवशात् यान्ति मानुष्यमतिदुर्लभम् ।
उत्तमस्यापि मानुष्यं प्राप्यन्ते पुण्यगौरवात् ॥
विचित्रामतयः प्रोक्ताः कर्म्मणां गुरुलाघवात् ।
ततो मानुषतां प्राप्य व्याधिभिस्तत्र पीड्यते ॥

---

* सावशेषेण कर्म्मणाम् —इति मु० ।

कुष्ठरोगेण घोरेण ब्रह्महत्यां प्रयोजयेत्”—इति ।

मार्कण्डेयपुराणे,—

“अशस्त्रं पुरुषं हत्वा नरः संजायते खरः ।

क्रमिस्त्रीपरहन्ता च बालहा चोपजायते ॥

वृषस्य वृषणौ छित्वा षण्डत्वं प्राप्नुयान्नरः ।

परिहृत्य ततो भूयो जन्मनामेकविंशतिम् ॥

क्रमिकीटपतङ्गेषु स्थितस्तोयनरेषु च ।

गोत्वं प्राप्य च चण्डालपुल्कसादि जुगुप्सितः ॥

पङ्ग्वन्धबधिरः कुष्ठी यक्ष्मणा च प्रपीड़ितः ।

मुखरोगाक्षिरोगैश्च रोगैरन्यैश्च बाध्यते ।

अपस्मारी च भवति शूद्रत्वं चैव गच्छति ॥

एवमेव क्रमो दृष्टो गोसुवर्णादिहारिणाम् ।

विद्याऽपहारिणाञ्चैव निदेशभ्रंशिनां गुरौ”—इति ।

ब्रह्मपुराणे,—

“यस्तु रौद्रसमाचारः सर्व्वभूतभयङ्करः ।

हस्ताभ्यां यदि पद्भ्यां वा रज्ज्वा दण्डेन वा पुनः ॥

लोष्ट्रैः स्तम्भैरुपायैर्व्वा जन्तूंस्ताड़यतेऽनिशम् ।

हिंसार्थी निकृतप्रज्ञ उद्वेजनकरः सदा ॥

एवं शीलसमाचारो निरयं प्रतिपद्यते ।

स चेन्मनुष्यतां गच्छेद् यदि कालविपर्य्ययात् ॥

बधबन्धपरिक्लिष्टः कुले जायेत सोऽधमे ।

लोकद्वेष्टाऽधमः पुंसां स्वयं कर्मकृतैः फलैः”—इति ।

हिंसाकर्म्मविशेषफलानि शङ्खलिखिताभ्यां दर्शितानि। "अत ऊर्द्धं बहूनि वर्षसहस्राणि यमविषये कुम्भीपाकरौरवादिषु स्थानेषु दुःखान्यनुभूयेह जातानामिमानि लक्षणानि भवन्ति। तद्यथा, ब्रह्महा कुष्ठी गोघ्नश्चान्धः अनेकरोगिणश्च"—इति। यमः,—

"अभ्युद्धानान्तु पापानां पतितानाञ्च कर्मभिः।
उत्तीर्णानाञ्च तिर्य्यक्त्वात् देहे भवति लक्षणम् ॥
इह दुश्चरितैः केचित् केचित् पूर्व्वकृतैस्तथा।
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम् ॥
द्विजघ्नं कुष्ठिनं विद्यात् कुनखं स्वर्णहारकम्।
व्यङ्गाश्चाधर्मिणश्चैव जायन्ते प्राणिहिंसकाः"—इति।

हारीतः। "कुनखी भ्रूणहा*। ब्रह्मघ्नः कुष्ठी। परदुःखदायिनोनित्यान्धाः। परदाराभिरतादीर्घरोगिणः। दृष्ट्यपहर्त्तारोऽन्धाः। श्रोत्रापहर्त्तारोबधिराः। वाचोऽपहर्त्तारोमूकाः। एवं ह्याह,—

यदङ्गं पीड्यते येन तेन हीनोऽभिजायते।
नाकृत्वा† लभते किञ्चित् शुभं वा यदि वाऽशुभम्"—इति।

कश्यपः,—

"क्षयी स्यात् चेत्रहरणे अर्शोवान् नृबधेऽपिच।
जलोदरयुतः स स्यात् स्वनारीणाञ्च हिंसकः ॥
कर्णभेत्ता कर्णमूली ओष्ठरोग्योष्ठनाशकः।
दन्तपातनकर्त्ता च दन्तरोगी भवेत् सदा ॥

---

* स्वर्णहः,—इति मु०।

† नादत्वा,—इति मु०।

उरःस्तम्भादुरुस्तम्भी अग्निरोग्यग्निनाशकः।
पदा तु यस्ताड़यति विसर्पी स भवेन्नरः॥
पीडामप्रियकर्त्ता च धनुर्व्याधिर्धनुग्रहात्।
पादकीली स भवति पादहन्ता च यो भवेत्॥
असृग्दरी दारयति यो वृक्षानतिविस्तृतान्।
शूलेन शूली* भवति मनुष्याणाञ्च हिंसकः॥
असृग्दरी स भवति यस्तु हिंस्याद्वृथा पशून्।
नक्तान्ध्यं जायते तस्य यो गवां नयनद्वये॥
करोति शूलप्रक्षेपं पूर्व्वभावप्रचोदितः"—इति।

व्यासोऽपि,—

"पितृहा याति पैशाच्यं जात्यन्धो मातृघातकः।
प्राण्यङ्गं मृगशावं च हत्वा वन्ध्यो मृतप्रजः।
असाध्यरोगी† बालघ्नः क्षयी स्यात् सर्व्वजीवहा॥
गात्रहन्ता व्रणी श्वित्री विसर्पी परघातकः।
नेत्ररोगो भवेत् तस्य योऽन्येषां दृष्टिघातकः।
परेषां रसनाच्छेदाज्जिह्वाऽऽस्यव्रणवान् भवेत्॥
स्तनघ्नः स्फुटिताक्षो वा तृतीयज्वरसंयुतः।
चातुर्थकोष्णशीतोष्णज्वरी स्यात् सततज्वरी॥
ग्रामे वने वा जन्तूनां यग्निर्यो भीतिमर्पयेत्।
भयोद्वेगकरोऽन्येषां पाषाणेनाथ घातकः॥

---

* मूलशूली स,—इति मु०।
† असाध्यरोगी,—इति मु०।

तलघाती च सम्भूतः कुलेषु धनिनां नरः ।
गत्वा देशान्तरन्तेषां तत्र रागो महान् भवेत्"—इति ।

वृद्धगौतमः,—

"वृत्तच्छेत्ता वृथा यस्तु स नाडीव्रणवान् भवेत्"—इति ।

वायुपुराणे,—

"भवेत् स्फुटितपादस्तु यो निहन्याद् वनस्पतीन् ।
प्राणिहिंसापरो जन्तुघाती वा मृतसन्ततिः ॥
मुखे कृष्णव्रणी श्वित्री वन्ध्योवा स्याद्विसर्पवान् ।
वल्मीकन्तु खनित्वा यो हन्ति वायुभुजोनरः ॥
गजचर्मा ज्वरी च स्यादाज्ञया पूर्व्वकर्मणः ।
भ्रूणहा छिन्नहस्तः स्याद्गृहिणी दासपत्न्यपि"—इति ।

विष्णुधर्मोत्तरे,—

"यं कश्चिद्घातयित्वा तु प्राणिनां भृगुनन्दन ।
मांसं भुक्त्वा तु धर्मज्ञ, भवतीह गदातुरः"—इति ॥

इति हिंसाविशेषकर्मफलानि ।

अथापेयपानाभक्ष्यभक्षणकर्मविशेषाद्योनिविशेषः ।

तत्र शिवधर्मोत्तरे,—

"कृमिकीटपतङ्गानां विड्भुजां चैव पक्षिणाम् ।
सुरापः प्राप्यते योनिं पूर्व्वकर्मानुसारतः"—इति ॥

उमामहेश्वरसंवादे,—

"मद्यव्यसनिनोये च ये मद्यं सेवयन्ति च ।
शालान्तु कारयेद्यस्तु मद्यपानं ददाति यः ॥

मद्यविक्रयिणो ये च मद्यं ये क्रीणयन्ति च।
पिबन्ति ये नरा देवि, सर्व्वे ते समभागिनः॥
ते शौण्डिका वा चण्डाला लुब्धका मत्स्यघातकाः।
दासत्वेनैव सुश्रोणि, जायन्ते पुरुषाधमाः॥
तिर्य्यञ्चोऽपि समुत्पन्ना यथा मृत्युमुपागताः।
मद्यपानरता ये च शृणु तेषां गतिं शुभे॥
षष्टिवर्षसहस्राणि क्रमिर्भूत्वा महीतले।
क्रमियोनिक्षये भूते पापन्तु कथयाम्यहम्॥
श्वानयोनिशतं गच्छेत् जम्बूके पञ्चविंशतिम्।
मद्यपानरता ये तु कां गतिं यान्ति सुव्रते॥
शूद्रस्य चेदृशं पापं मद्यपानरतस्य च।
विप्रस्य कथयिष्यामि मद्यपस्य दुरात्मनः॥
काको भूत्वा चिरं देवि, विष्ठाभक्षस्तु जीवति।
वर्षाणां द्वादशे लक्षे स जीवेत्पापकर्मकृत्॥
स्वमांसं परमांसेन यो देही वृद्धिमिच्छति।
तस्य योनिशतं गत्वा शरीरं व्याधितं भवेत्॥
यासु योनिषु जायन्ते नरमांसस्य भक्षकाः।
व्याधिरोगशतैर्युक्ता जायन्ते तासु कर्मणा"—इति॥

मनुः,—

"कृमिकीटपतङ्गानां विड्भुजां चैव पक्षिणाम्।
हिंस्राणां चैव सत्वानां सुरापो ब्राह्मणो व्रजेत्"—इति॥

विष्णुरपि। "अभोज्यान्नभक्षणे क्रिमिः"—इति। वृद्धगौतमः,—

"विप्रवृत्तिविलोपेन दर्दुरः सप्तजन्मनि ।
निषिद्धान्नन्तु यो भुङ्क्ते कर्कटः सोऽभिजायते ॥
कीटाशी सूतकान्नाशी मत्स्याशी याचितान्नभुक् ।
आमन्त्रणं विना भुक्त्वा परान्नं काकतां व्रजेत्"—इति ॥

अथापेयपानादिकर्मविशेषफलानि ।

तत्र हारीतः । "सुरापोबद्धजिह्वः । अभक्ष्यभक्षः श्यावदन्तः"—इति । स्कान्दे रेवाखण्डे,—

"पापशेषात् तु भवति सुरापः श्यावदन्तकः"—इति ।

शिवधर्मोत्तरे । "अभक्ष्यभक्षी गण्डमाली"—इति । शङ्खलिखितौ । "अभक्ष्यभक्षी गण्डमाली"—इति । कश्यपः । "सुरापोलोलजिह्वः"—इति ।

अथ स्तेयकर्मविशेषाद् योनिविशेषाः ।

तत्र मनुः,—

"लूताऽहिसरटानाञ्च तिरश्चाञ्चाम्बुचारिणाम् ।
हिंस्राणां सपिशाचानां स्तेनो विप्रः सहस्रशः ॥
संयोगं पतितैर्गत्वा परस्यैव च योषिताम् ।
अपहृत्य च विप्रस्वं भवन्ति ब्रह्मराक्षसाः ॥
मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवाः ।
विविधानि च रत्नानि जायन्ते लोहकर्तृषु ॥
धान्यं हृत्वा भवत्याखुः कांस्यं हंसोजलं प्लवः ।
मधुदंशः पयः काकोरसं श्वा नकुलोघृतम् ॥
मांसं गृध्रोवसां मद्गुस्तैलं तैलपकः खगः ।

चीरवासस्तु लवणं बलाकः शकुनिर्दधि॥
कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः।
कार्पासं तान्तवं क्रौञ्चो गोधागां वाद्गुदोगुडम्॥
कुकुन्दरी शुभान् गन्धान् पत्रं शाकन्तु वर्हिणः।
श्वावित् कृतान्नं विविधमकृतान्नन्तु शल्यकः॥
वको भवति हृत्वाऽग्निं गृहकारी ह्युपस्करम्।
रक्तानि हृत्वा वासांसि जायते जीवजीवकः॥
वृकोमृगेभं व्याघ्रोऽश्वं फलपुष्पन्तु मर्कटः।
स्त्रीमृक्षस्तोककोवारि यानान्युष्ट्रः* पशूनजः॥
यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः।
अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः॥
स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमावाप्नुयुः।
एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः"—इति॥

याज्ञवल्क्यः,—

"हीनजातौ प्रजायेत पररत्नापहारकः।
पत्रशाकं शिखी हृत्वा गन्धान् कुकुन्दरी शुभान्॥
मूषिको धान्यहारी स्याद् यानमुष्ट्रः फलं कपिः।
जलं प्लवः पयः काको गृहकारी ह्युपस्करम्॥
मधु दंशः पलं गृध्रो गाङ्गोधाऽग्निं बकस्तथा।
श्वित्री वस्त्रं श्वा रसं तु चीरी लवणहारकः॥

* पानान्युष्ट्रः,—इति शा० स०।

प्रदर्शनार्थमेतत् तु मयोक्तं स्तेयकर्मणि* ।
द्रव्यप्रकारा हि यथा तथैव प्राणि जायते"—इति ॥

मार्कण्डेयपुराणे,—

"पुंसोऽपहर्त्ता नरकाद्विमुक्तो जायते क्रमिः ।
धान्यं यवांस्तिलान्माषान् कुलत्थान् सर्षपान् चणान् ॥
सस्यान्यन्यानि वा हृत्वा मोहाज्जन्तुरचेतनः ।
संजायते महावक्त्रो मूषिको वज्रसन्निभः ॥
भोजनं चोरयित्वा तु मक्षिका जायते नरः ।
हृत्वा दुग्धं तु मार्ज्जारो जायते नरकाच्च्युतः ॥
तिलपिण्याकसम्मिश्रमन्नं हृत्वा तु मूषिकः ।
घृतं हृत्वा तु नकुलः काको मुद्गरजामिषम् ॥
श्येनो मार्गामिषं हृत्वा चौरी लवणहारकः ।
चोरयित्वा पयश्चापि बलाका संप्रजायते ॥
यस्तु चोरयते तैलं तैलपायी स जायते ।
मधु हृत्वा नरोदंशो घृतं हृत्वा पिपीलिका ॥
चोरयित्वा तु निष्पावान् जायते गलगण्डकः ।
आसनं चोरयित्वा तु तित्तिरित्वमवाप्नुयात् ॥
अयो हृत्वा तु पापात्मा वायसः संप्रजायते† ।
हृते कांस्ये च हारीतः कपोतो रौप्यके हृते ॥
जीवंजीवकतां याति रक्तवस्त्रापहृन्नरः ।

---

* प्रोषकर्म्मणि,—इति शा० ।

† वायसत्वं प्रपद्यते,—इति मु० ।

कुकुन्दरी शुभान् गन्धान् रसं* हृत्वा शशो भवेत् ॥
षण्ढः पलालहरणे† काष्ठहृद्घुणकीटकः।
पुष्पापहृद् दरिद्रश्च पङ्ग्वर्यानापहारकः ॥
शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः।
भूहर्त्ता नरकान् गत्वा रौरवादीन् सुदारुणान् ॥
तृणगुल्मलतावल्लीत्वक्सारतरुतां गतः"—इति ॥

गौतमः। "अनृतवागुल्वलोमुकुर्मुकुः संलग्नवाक्। जलोदरो-दारत्यागी। कूटसाक्षी श्लीपदी उच्छूनजङ्घाचरणः। विवाहविघ्नकर्त्ता छिन्नोष्ठः। अवगूरणः छिन्नहस्तः। ‡मातृघ्नोऽन्धः। स्नुषागामी वातवृषणः‡। चतुष्पथे विण्मूत्रविसर्जने मूत्रकृच्छ्री। कन्यादूषकः षण्ढः। ‡पर्य्युषितभोजी कृमिः‡। ईर्ष्यालुर्मशकः। ‡पित्रोर्विवदमानो-ऽपस्मारी‡। न्यासापहार्य्यनपत्यः। रत्नापहार्य्यत्यन्तदरिद्रः। विद्या-विक्रयी पुरुषमृगः। वेदविक्रयी द्वीपी। बहुयाजको जलप्लवः। अयाज्ययाजको वराहः। अनिमन्त्रितभोजी वायसः। मृष्टैकभोजी वानरः। यतस्ततोऽश्नन् मार्ज्जारः। कक्षवनदाही खद्योतः। दारका-चार्य्यो मुखविगन्धः। अदत्तादायी बलीवर्द्दः। मत्सरी चमरः§। अभ्युत्सादी मण्डलकुष्ठी। शूद्राचार्य्यः श्वपाकः। गोहर्त्ता सर्पः। स्नेहापहारी क्षयी। अन्नापहार्य्यजीर्णी। ज्ञानापहारी मूकः।

---

* सस्यं,—इति स० शा०।

† पलालहारेण,—इति शा०।

‡ एतच्चिह्नान्तर्गता अंशाः न सन्ति शा० पुस्तके।

§ भ्रमरः,—इति शा०।

जलापहारी मत्स्यः। चौरहारी वलाकः। परद्रव्यापहारी परप्रेष्यः”—इति ।

शङ्खलिखितौ । “वेश्मापहारी अद्रिसर्पः। जलापहारी शिशुमारः। सस्यापहारी कपोतः। कव्यापहारी* वायसः। ताम्रापहारी बलाकः। अपूपापहारी प्रेतः। शास्त्रापहारी† जड़ः। छत्रापहारी कारण्डः‡। गन्धापहारी पतङ्गः। ध्वजापहारी ककलासः। शाकापहारी पशुः। शय्याऽपहारी अशयनः। पुष्पापहारी दुर्गन्धी। फलापहार्य्यफली§। दीपापहारी कौशिकः। भूम्यपहारी नकुलाहिविडालाखूनामन्यतमः”—इति ।

“यदा तदाऽपि पारक्यं स्वल्पं वा यदि वा बहु ।
हृत्वा वै योनिमाप्नोति तत्तद्भोगानुरूपतः”—इति ॥

स्तेयकर्म्मशेषफलानि । तत्र विष्णुधर्म्मोत्तरे,—

“मणिमुक्ताप्रवालानि रत्नानि विविधानि च ।
अपहृत्य नरा राजन्, जायन्ते हेमकर्त्तृषु ॥
यदा तदा परद्रव्यमपहृत्य बलान्नरः ।
प्राप्नोति भृगुशार्दूल, मानुष्ये भारवाहिताम् ॥
धान्यचौरोऽङ्गहीनः स्यादत्यन्तं मिश्रकोभवेत् ।
व्याधितश्चान्नहर्त्ता स्यान्मूकोवागपहारकः ॥

---

* क्रव्यापहारी,—इति मु० ।

† शस्त्रापहारी,—इति मु० ।

‡ कोदलः,—इति मु० ।

§ फलापहारी कपिः,—इति मु० ।

वस्त्रापहारी श्वित्री स्यात् पङ्गुश्चाश्वापहारकः।
अन्धो दीपापहारी स्यात् काणोनिर्व्वापको भवेत् ॥
दरिद्रः परवित्तघ्नः उन्मत्तश्चाश्वहस्तिनः।
पङ्गुरेव तथा ज्ञेयः सर्व्वयानापहारकः ॥
अन्धश्च जायते लोके गां हृत्वा च नराधमः।
वस्त्रभोज्यापहर्त्तारौ तथा नग्नबुभुक्षितौ।
रत्नापहारी भवति तथा कुष्ठी नराधमः"—इति ॥

वायुपुराणे,—

"वातव्याधियुतः स्तेयी तथा कुष्ठी नरो भवेत्।
ब्राह्मणस्वर्णहारी च प्रमेही जायते नरः ॥
प्रक्लिन्नपाणिपादः स्यादाहरेद्‌यो रसादिकम्।
अन्नचौरो भवेद्‌यस्तु सोऽकस्माज्जायते कृशः ॥
स्वरोपघाती वाक्यञ्च हृत्वा मर्त्त्यः प्रजायते"—इति ॥

उमामहेश्वरसंवादे,—

"धान्यचौरस्तु हीनाङ्गस्तृणहर्त्ता तु वा पुनः।
परद्रव्यापहारी च भृत्यानां वृत्तिजीवकः ॥
खलं क्षेत्रं गृहं वाऽपि परद्रव्यं हरन्ति ये।
सुवर्णमणिमुक्तानि वस्त्राण्याभरणानि च ॥
आसनानि विचित्राणि धनधान्यमुपस्करम्।
ये हरन्ति नरा नित्यं परद्रव्याणि मोहिताः ॥
इहलोकगतानाञ्च तेषामेष विधिः स्मृतः।
मग्नादीनाः क्षुधर्त्ताश्च कुचेला दुःखिताः सदा ॥

बन्धुभिः परिभूताश्च भोग्यभोगविवर्ज्जिताः ।
सुखानि प्रार्थयन्तीह दास* वृत्तिमुपागताः ॥
ये हरन्ति च तूर्य्याणि वाद्यानि विविधानि च ।
तेन पापेन ते देवि, तिर्य्यक्त्वं यान्ति मानवाः ॥
हत्वा मड्डादिवाद्यानि झल्लरीपटहानि च ।
तेन पापेन ते मूढा बाधिर्य्यं यान्ति मानवाः ॥
कांसिकं मुरजं वंशं वीणां तूलविलं तथा ।
ये हरन्ति च पापानि पिशाचास्ते† भवन्ति च ॥
पटहं‡ लेपनञ्चैव तथा सम्पुटिकाश्च ये ।
हरन्ति पुष्करं ये तु तेन ते यान्ति मूकताम् ॥
प्रासादेषु च ये देवि, हरन्ति दीपिकां नराः ।
गृहेषु चैव विप्राणां तेन ते यान्ति चान्धताम्"—इति ।

शङ्खलिखितौ । "सुवर्णस्तेयी कुनखी । वस्त्रापहारी श्वित्री । हिरण्यापहारी दद्रुणः । तैजसापहारी मण्डली । स्नेहापहारी क्षयामयी । अजीर्णवानन्नापहारी । वागपहारी मूकः । गृधोदेवद्रव्योपजीवकः । पाण्डुरोगी दीपहारी । ब्राह्मणवृत्तिघ्नश्च दरिद्रः । कर्म्मफलविशेषेण कुब्जषण्डपङ्गुदरिद्राश्च जायन्ते"—इति ।

यमः,—

"द्रव्यौषधापहर्त्ता च दीर्घरोगित्वमाप्नुयात् ।

---

* दान,—इति मु० ।

† पापेन बधिरास्ते,—इति मु० ।

‡ पट्टसं,—इति मु० ।

धान्यचोरो व्रणी च स्यात् कासी* भक्तापहारकः ॥
गलगण्डी गलद्द्रव्यहर्त्ता† भवति मानवः।
विकृतिर्मद्यहर्त्ता च स्यान्मांसस्यापहारकः"—इति ॥

स्कान्दे रेवाखण्डे,—

"मणिकूटं तुलाकूटं कूटसाक्ष्यं वदन्ति ये।
नरके त्वन्धतामिस्रे प्रपद्यन्ते नराधमाः ॥
शतमाहस्रिकं कालमुषित्वा तत्र ते नराः।
इह शङ्कटहे बद्धा भ्रमन्ते कालमीप्सितम् ॥
कुनखी स्वर्णहरणान्मूकः पुस्तकहारकः।
फलान्याहरतोऽपत्यं म्रियते नात्र संशयः"—इति ॥

अथागम्यागमन कर्मविशेषाद् योनिविशेषः।

स्कान्दे रेवाखण्डे,—

"गुरुदाराभिमर्शी च कृकलासो भवेद्ध्रुवम्।
राज्ञीगामी भवेद्दग्धो वृश्चिको वृषलीपतिः"—इति ॥

गौतमः। "चाण्डालीपुल्कसीगमनेऽजगरः। प्रव्रजितागमने मरुपिशाचः। शूद्रागमने दीर्घकीटः। सवर्णाभिगामी दरिद्रः। गोगामी मण्डूकः"—इति।

मार्कण्डेयपुराणे,—

"परदाराभिगमने रक्तद्रोणस्तु जायते।
श्वसृगालेभव्याघ्रेषु क्रमाज्जातिषु जायते ॥

---

* कृमिः,—इति मु०।

† गन्धद्रव्यापहर्त्ता,—इति मु०।

भ्रातृभार्य्याञ्च दुर्बुद्धिर्योधर्षयति पापकृत् ।
पुंस्कोकिलत्वमाप्नोति सपापो नरकाच्च्युतः ॥
सखिभार्य्यां गुरोर्भार्य्यां राजभार्य्यां च पापकृत् ।
प्रधर्षयति पापात्मा सूकरो जायते नरः ॥
शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ।
तस्यामपत्यमुत्पाद्य काष्ठान्तः कीटको भवेत् ॥
सूकरः कृमिको मद्गुश्चण्डालश्च प्रजायते"—इति ।

ब्रह्मपुराणे,—

"सखिभार्य्यां गुरोर्भार्य्यां शिष्यभार्य्यां* तथैवच ।
प्रधर्षयित्वा कामात्मा मृतोजायेत सूकरः ॥
सूकरः पञ्चवर्षाणि दशवर्षाणि वै वृकः ।
पिपीलिका तु मांसास्त्रीन् कीटः स्यान्मासमेव तु ॥
एतानासाद्य संसारान् क्रिमियोनौ प्रजायते ।
तत्र जीवति मासांश्च कृमियोनौ चतुर्दश ॥
ततोऽधर्मक्षयं कृत्वा ततो जायेत मानवः ।
परदाराभिमर्षी तु कृत्वा जायेत वै वृकः ।
श्वा सृगालस्ततो गृध्रो व्यालः काको बकस्तथा ॥
भ्रातृभार्य्यान्तु पापात्मा योधर्षयति मोहितः ।
कोकिलत्वमवाप्नोति सोऽपि संवत्सरं द्विजः ॥
मनसाऽपि गुरोर्भार्य्यां यः शिष्यो याति पापकृत् ।

---

* राजभार्य्यां,—इति मु० ।

उग्रान् स याति संसारानधर्म्मेणेह चेतसा ॥
श्वयोनौ तु स सम्भूतस्त्रीणि वर्षाणि जीवति।
तत्रापि निरयं प्राप्तः कृमियोनौ प्रजायते ॥
कृमिभावमनुप्राप्य वर्षमेकन्तु जीवति।
ततस्तु निरयं प्राप्तो ब्रह्मयोनौ प्रजायते।
वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ॥
ततः सम्प्राप्य निधनं जायते सूकरः पुनः।
सूकरो जातमात्रस्तु रोगेण म्रियते द्विजाः ॥
श्वा ततो जायते मूढः कर्मणा तेन भो द्विजाः।
श्वा भूत्वा कृतकालस्तु जायते मानवस्ततः ॥
तत्रापत्यं समुत्पाद्य ततो जायेत मूषिकः"—इति।

नारदपुराणे,—

"चिन्तयेद्वीचयेद्वाऽपि जननीं वा सुतां च वा।
वधूं वा भ्रातृदारान् वा गुरुभार्य्यां नृपस्त्रियम् ॥
स याति नरकं घोरं सञ्चिन्त्य श्वपचीमपि।
दृष्ट्वा हि प्रमदा ह्येता यः चोभं व्रजते नरः ॥
तस्य पुण्यं कृतं सर्व्वं वृथा भवति नान्यथा।
पुण्यस्य सङ्क्षयात् पापं पापाच्च भवेद्ध्रुवम्"—इति।

व्यभिचारिणीं प्रति वराहपुराणे,—

"ततः शुनी भवेत् पश्चात् सूकरी च ततः परम्।
कर्मचये ततः पश्चान्मानुषी कुत्सिता भवेत् ॥
न च सौख्यमवाप्नोति तेन दुःखेन दुःखिता"—इति।

"तृणगुल्मलतानाञ्च क्रव्यादां दंष्ट्रिणामपि ।
क्रूरकर्मरतानाञ्च क्रमशो गुरुतल्पगः ॥
हिंस्रा भवन्ति क्रव्यादाः क्रिमयोऽभक्ष्यभक्षिणः ।
परस्परादिनोमत्स्याः प्रेत्यान्त्यस्त्रीनिषेवकाः"—इति ।

अगम्यागमनकर्मविशेषात् फलविशेषः पद्मपुराणे,—

"उदरव्याधियुक्तस्तु तथा गुर्व्वङ्गनागमे ।
आचार्य्यभार्य्यागमने भगन्दरयुतो भवेत् ॥
तथा पापेन महता गुल्मी स्यादन्त्यजागमे"—इति ।

विष्णुधर्मोत्तरे,—

"षण्डश्च जायते लोके दारातिक्रमकारकः ।
परपुंसि प्रसक्ता च तस्य भार्य्या तथा भवेत् ॥
कुष्ठी भवति धर्मज्ञ, अपहृत्य तथा स्त्रियम्* ।
लिङ्गव्याधिमवाप्नोति वियोनौ मैथुने रतः ॥
गां च गत्वा द्विजश्रेष्ठ, लिङ्गनाशमवाप्नुयात् ।
दृष्ट्वा परस्त्रियं नग्नां नरो दुष्टेन चेतसा† ॥
जात्यन्धत्वमवाप्नोति परलोके न संशयः ।
अवकीर्णी च भवति लिङ्गव्याधिसमन्वितः‡ ॥
प्रकीर्णमैथुने जन्तुः क्लीवो भवति वै द्विज"—इति ।

---

* परस्त्रियम्,—इति मु० ।

† मनोदुष्टेन चक्षुषा,—इति मु० ।

‡ लिङ्गव्याधी न संशयः,—इति मु० ।

शङ्खलिखितौ। "पर्व्वमैथुने प्रमेही पुरुषव्याधिपीड़ितः। परदारगाम्यगुप्तदारकः। गोष्ववकीर्णी दुश्चर्मा। खराश्वाभिगामी मधुमेही*। सगोत्राभिगामी मद्यपस्त्रीगामी श्लीपदी†। मातृपितृभगिनीगाम्यबीजी। स्वदारादन्यत्र दीव्यतः केशाल्पलम्। गुरुतल्पगो दुश्चर्मा। चण्डाल्यवकीर्णी कन्यादूषी सगोत्राभिगाम्यबीजी। धर्म्मपत्न्यामाख्ये प्रवर्त्तकः खल्वाटः। मातृभगिनीगाम्यवकीर्णी शौपदी बधी मधुमेही च"—इति।

वृद्धबौधायनः,—

"गाङ्गत्वा मधुमेही स्यान्मूत्रकृच्छ्री चतुष्पदम्।
मधुमेही खराश्वादिगामी भवति मानुषः॥
सवर्णागमनेऽदत्कः पितृहा पाण्डुरोगधः।
अन्त्यजागमने मर्त्त्यो जायते नात्र संशयः"—इति।

वृद्धगौतमः,—

"धर्म्मपत्नीं गुरोर्गत्वा वृश्चिकोभुजगस्तथा।
पचिदंष्ट्रिमृगव्यालक्रव्यादोऽपि ततोऽसकृत्॥
तथा मानुष्यतां प्राप्तः चयी कुष्ठी तथा भवेत्।
महोदरी प्रमेही च दुश्चर्मा च भगन्दरी॥
ज्वरातिसारी दाची च पाददाही क्रिमिव्रणी।
गत्वा तु मातृभगिनीं जलेषु‡ मधुमेहवान्॥

---

* खराभिगामी मूत्रमेही,—इति शा०।

† श्लिष्टपदी,—इति मु०।

‡ दारेषु,—इति शा०।

कन्यागाम्यश्मरी शूली प्रमेही मूत्रकृच्छ्रपि ।
कन्यां च गोत्रजां गत्वा बाहुहीनो भवेन्नरः ॥
सगोत्रां च सवर्णाञ्च गत्वा स्यात् श्लीपदी नरः* ।
मातरं च स्वसारं च गत्वा श्लीपद्यजीवकः† ॥
अनखिपाणिपादः स्यात् श्वश्रूगः सखिभार्य्यगः ।
मूत्रकृच्छ्री तथाऽजिह्वः स्नुषागोमुष्कवृद्धिमान् ॥
रजस्वलाऽभिगामी च चण्डालीगमने रतः‡ ।
दाहज्वरी भवेन्मर्त्यः अन्त्यजन्मसु गुल्मवान् ॥
गत्वा तपस्विनीं नारीं गुर्विणीं मूत्रकृच्छ्रपि ।
स्यादामयावी भवति विधवागोऽश्मरीयुतः ॥
प्रमेही मूत्रकृच्छ्री च शूली मर्त्योऽभिजायते ।
परदाराभिगामी च प्रमेही गुरुदारगः§ ॥
दासीगामी क्रूरकर्म्मा सदा कामरतो‖ भवेत् ।
स्वजातिपरनारीगः कुष्ठी मर्त्त्योऽभिजायते ॥
वक्रमैथुनकर्त्ता च खल्वाटो जायते नरः ।
गत्वा तु महिषीं राज्ञः षण्डो भवति मानवः ॥
नेत्ररोगी भवेत् प्रेक्ष्य नितरां परयोषितः ।

---

* गत्वा श्लिष्टपदी नरः,—इति मु० ।
† श्लिष्टपद्यपजीवकः,—इति मु० ।
‡ गमनेऽपि च,—इति मु० ।
§ गुरुतल्पगः,—इति मु० ।
‖ कामातुरो,—इति मु० ।

बहुत्वे योषितामेकां पुन्नीगः खञ्जतां व्रजेत् ॥
स्वदारेभ्योऽन्यतो दीव्यन्नल्पकेशो भवेन्नरः ।
पुंश्चल्यो योषितो बालरण्डा स्युर्वधिरास्तथा ॥
दास्यो वा दीर्घरोगिण्यो दृष्टिहीना भवन्ति ताः" इति ।

ब्रह्मपुराणे,—

"परदारेषु ये चापि चक्षुर्द्दुष्टं[*] प्रयुञ्जते ।
तेन दुष्टस्वभावेन क्लीवत्वमुपयान्ति वै[†] ॥
पशूंश्च ये विबध्नन्ति[‡] ये चैव गुरुतल्पगाः ।
प्रकर्णमैथुना ये च क्लीवा जायन्ति ते नराः"—इति ।

तदेवं कानिचित् शास्त्राण्युदाहृत्य कियानपि कर्म्मविपाको-निरूपितः । अनयैव दिशा विपाकान्तराण्युन्नेयानि । न हि निःशेषेण केनचिदुदाहर्त्तुं शक्यम् । तदुक्तं विष्णुधर्म्मोत्तरे,—

"उक्ता यथाशक्ति मया तिरश्चां
या योनयो यानि च लक्षणानि ।
शक्यानि कार्त्स्न्येन मया न वक्तुं
या योनयश्चैव नराधमानाम्"—इति ।

अशक्तिश्च कर्म्मानन्त्यात् । यद्यप्यतिपातकादीनि प्रकीर्णकान्तानि पापानि दशविधत्वेन विष्णुना सङ्कलितानि, तथाप्यतिपातकादि-

---

* चक्षुर्द्दुष्टं,—इति मु० ।

† क्लीवत्वमुपजायते,—इति मु० । क्लीवत्वमुपयान्ति ते,—इति तु पाठः समीचीनः प्रतिभाति ।

‡ निबध्नन्ति,—इति मु० ।

जात्युपाधावेव तत्सङ्कलनम् । पापव्यक्तीनां तु स्वरूपतोदेशकाल-कर्त्त्रवस्थादिभेदाच्च* नेयत्ता । यदा कर्मणामेवेयत्ता नास्ति, तदा तद्विपाकानामियत्ता दूरापास्ता। एकैकस्य कर्मणो बहुविपाकस्मर-णात्। उदाहृताश्च बहुविपाकाभिधायिकाः श्वशूकरेत्यादिस्मृतयः। तथाच तेषां निःशेषकथनं मनसाऽपि चिन्तयितुमशक्यम् । अतो-दिङ्मात्रं प्रदर्शितम् ।

एतच्च विपाकाभिधानं सङ्क्षेप्यमाणेभ्यः पुरुषं निवर्त्तयत् सञ्चि-तेषु चोद्वेगं जनयन्निषेधेषु प्रायश्चित्तविधिषु चार्थवादतयाऽन्वेतीति पूर्वमभिहितम्। तत्र निषेधा आचारकाण्डे प्रपञ्चिताः। प्रायश्चित्त-विधयश्च प्रायश्चित्तकाण्डे। तानि च प्रायश्चित्तानि सञ्चितविषयाणि। प्रारब्धे तु विचारणीयम्। किं प्रायश्चित्तमस्ति, उत नेति । तत्र तावदस्तीति केचिदाहुः । उदाहरन्ति च वचनम्,—

"पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते ।
तच्छान्तिरौषधैर्दानैर्जपहोमार्च्चनादिभिः"—इति ।

ननु नैतद्युक्तिसहम् । तथाहि। निषिद्धस्य कर्मणः प्रायश्चित्त-निवर्त्तनीयत्वम्। यदा फलमारब्धं, तदैव कर्मत्वदशामतीत्य फलत्व-दशायां प्रविष्टम् । न च फलस्य प्रायश्चित्तं क्वचित् प्रसिद्धमस्ति ।

नायं दोषः। फलत्वदशायामपि कर्मत्वस्यात्यन्तिकनिवृत्त्य-भावात् । अन्यथा पापकर्मणः फलमिति व्यवहारानुपपत्तेः । अथवा। प्रायश्चित्तसद्भावः शास्त्रैकसमधिगम्यः। शास्त्रं चेत् फल-

---

* कर्त्तव्यावस्थाभेदाच्च,—इति शा० ।

स्यापि प्रायश्चित्तं ब्रूते, किन्तव च्छिद्यते*। उदाहृतञ्च शास्त्रं, तच्छान्तिरौषधैरित्यादि। तस्मादारब्धफलस्याप्यस्त्येव प्रायश्चित्तम्।

अपरे पुनर्मन्यन्ते। नास्त्येवारब्धफलस्य प्रायश्चित्तम्। कुनखित्वादिनिवृत्त्यदर्शनात्। यद्यारब्धफलं प्रायश्चित्तान्निवर्त्तते, तदा नैसर्गिकमपि कुनखित्वादिकं प्रायश्चित्तान्निवर्त्तेत। न त्वेवमुपलभामहे। यथा मुक्तस्येषोर्लक्ष्यवेधोऽप्रतिसमाधेयः, तथा प्रारब्धफलं न प्रतिसमाधातुं शक्यम्।

एतदेवाभिप्रेत्य भगवान् बादरायणः सूचयामास। "अनारब्धकार्य्ये एव तु पूर्वे तदवधेः (शा० मी० ४अ० १पा० १५सू०)"—इति। अस्यायमर्थः। ये सुकृतदुष्कृते तत्त्वज्ञाननिवर्त्त्यत्वेन पूर्वयोरधिकरणयोः(१) प्रकृते, ते अनारब्धकार्य्ये एव। न त्वारब्धफलयोः सुकृतदुष्कृतयोर्निवृत्तिः। कुतः। तदवधेः। "तस्य तावदेव चिरम्"—इति श्रुतावुत्पन्नज्ञानस्यापि मोक्षं प्रति शरीरपातावधिश्रवणादिति।

एवं तर्हि तच्छान्तिरित्यादेः का गतिरिति चेत्। उच्यते। न ह्यत्र प्रायश्चित्तमभिधीयते। तत्प्रकरणे पाठाभावात्। चिकित्साप्रकरणे हि इदं पठितम्। तथाच यथा चिकित्सा रोगनिवृत्तेर्दृष्टउपायः, तथा दानादिरपि दृष्टउपायः। तथा सति चिकित्सावद्दानादेर्न प्रायश्चित्तत्वम्। किन्तु रोगनिवर्त्तकं किञ्चित्प्रबलं सुकृता

* किन्त्ववच्छिद्यते,—इत्यादर्शपुस्तकेषु पाठस्त्वसमीचीनः।

(१) तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्, इतरस्याप्येवमसंश्लेषः इति चैतयोरधिकरणयोरित्यर्थः।

पूर्वमुत्पादयन्ति दानादयः । तच्च सुकृतं प्रवृत्तान्यपि फलानि प्रतिबध्य स्वफलं प्रयच्छति । प्रतिबद्धस्य फलशेषः स्वप्नादौ जन्मान्तरे वोपयुज्यते । एतत्सर्वमुपपुराणे पराशरेण प्रपञ्चितम्,—

"शरीरारम्भकं कर्म योगिनोऽयोगिनोऽपि च ।
विना फलोपभोगेन नैव नश्यत्यसंशयम् ॥
वर्त्तमानशरीरेण सम्पन्नं कर्म देहिनः ।
इह चामुत्र चाशस्य ददाति स्वफलं शुक ॥
इहैव फलदं कर्म प्रारब्धं प्रतिबध्य च ।
फलं ददाति स्वप्ने वा जाग्रत्कालेऽथवाऽनघ ॥
निवृत्तप्रतिबद्धन्तु प्रारब्धं कर्म सत्तम ।
निरुद्धांशफलं स्वप्ने ददाति स्थिरमुत्तमम् ॥
निरुद्धांशसमोभोगो यथोद्भूतश्च जायति ।
तथा निरुद्धन्तेनैव सह कर्म ददाति वै ॥
एवं निरुद्धभागन्तु* स्वप्ने जाग्रति वा फलम् ।
आरब्धस्यानगुण्येन भुङ्क्ते देही न संशयः ॥
अत्युत्कटैरिहत्यैस्तु पुण्यपापैः शरीरभृत् ।
प्रारब्धं कर्म विच्छिद्य भुङ्क्ते तत्तत्फलं बुधः ॥
प्रारब्धशेषं विच्छिन्नं पुनर्देहान्तरेण तु ।
भुङ्क्ते देही न नो भुङ्क्ते तन्नश्यति कः पुमान् ॥
अवश्यं ननु भोक्तव्यं† प्रारब्धस्य फलं जनैः ।

---

* इदं निरुद्धभोगन्तु,—इति शा० ।

† अवश्यमनुभोक्तव्यं,—इति मु० ।

देहेनानेन* वाऽन्येन युगपद्वा क्रमेण वा ॥
श्वसूकरखरोष्ट्रादिविरुद्धैर्विग्रहैरपि।
भोक्ताऽस्यैव फलस्येह शुक, कर्माणि च क्रमात् ॥
कारणानि भवन्तीह चक्रवत् परिवर्त्तने।
आरभन्ते क्रमेणैव तेषां नाशस्तु भोगतः ॥
सञ्चितेषु समस्तेषु प्रबलं कर्म देहिनः।
फलमारभते देहमपि तत्साधनं बुध ॥
दुर्घटं सकलं शक्तिर्माया माहेश्वरी जडा।
घटयत्यत्र सन्देहो नास्ति सा तादृशी गतिः"—इति।

प्रबलेन कर्मणा प्रारब्धफलस्य प्रतिबन्धाङ्गीकारे नैसर्गिकाः कुनखित्वादयोऽपि क्वचित् प्रतिबध्येरन्निति चेत्। प्रतिबध्यन्तां नाम। यत्र प्रतिबन्धो न दृश्यते, तत्र दौर्बल्यं कल्पनीयम्। प्रबलाभ्यान्तु वर-शापाभ्यां जन्मान्यथाभावोऽपि क्वचित् स्मर्य्यते। तथाच स्कन्द-पुराणे व्याघ्र ईश्वरवरेण गणेश्वरत्वं प्राप्त इत्यभिहितम्। महाभारते नहुषस्येन्द्रपदप्रेप्सोरगस्त्यशापेनाजगरत्वं प्राप्तमित्यभिहितम्। यदा जातस्य देहस्यापि प्रबलेन निमित्तेनान्यथाभावोऽस्ति, तदा किमु वक्तव्यं, कौनख्यादेरन्यथाभावः,—इति।

एवञ्च सति रोगशान्त्यादिप्रतिपादकानि सर्वाणि शास्त्राणि प्रारब्धभोगाविरोधेनानुगृहीतानि भविष्यन्ति। रोगशान्तिश्चौषधा-दिसाध्या। तत्रौषध्यान्यायुर्वेदप्रसिद्धानि। दानानि च बौधायन-

* देहेनैकेन,—इति शा०।

कल्पब्रह्माण्डपुराणादिष्ववगन्तव्यानि । अयन्तु शौनकादिप्रोक्त-ऋग्विधानसामविधानादौ बहुधा प्रपञ्चितः । तथा च ऋग्विधाने स्मर्य्यते,—

"ऋतस्येति जपेत् सूक्तं ह्ययुतं विष्णुमन्दिरे ।
अश्वत्थे माघमासे च मूत्ररोगो विनश्यति ॥
वायोश्शुक्रो जपेत् सूक्तमश्वत्थे ह्ययुतं तु चेत् ।
बहुधा वातरोगोऽपि विनश्यति न संशयः ॥
वाहणं वा जपेत् सूक्तमयुतं धात्रिमूलके ।
वातादिव्याधिनाशे तु सुखी पश्चात् स्थितो भुवि ॥
कद्रुद्राय जपेत् सूक्तं शीतज्वरविनाशनम् ।
शिवं स्पृष्टाऽयुतं धीमाञ्छीरोगः शीघ्रमस्तथा ॥
इमां रुद्राय तवसे जपेत् सूक्तं शिवालये ।
उष्णज्वरविनाशाय ह्ययुतं* नात्र संशयः ॥
इमां रुद्राय सूक्तन्तु जपेच्चेच्छिवमन्दिरे ।
कासशूलादिरोगघ्नमयुतं नात्र संशयः ॥
ईङ्खयन्ती जपेत् सूक्तं लक्षं विल्वशिरोऽपि† वा ।
कुष्ठनाशो भवेच्छीघ्रं माघमासे न संशयः ॥
हंसमन्त्रं जपेद्धीमान् ह्ययुतं‡ विष्णुमन्दिरे ।
अर्घ्यं दद्यात् कुष्ठरोगी सुवर्णसमतामियात् ॥

---

* ह्यायुतं,—इति मु० ।

† जले विल्वे विलेऽपि वा,—इति मु० ।

‡ ह्ययुतं,—इति मु० ।

जपेच्छीघ्रं* देवमन्त्रं शिरोरोगो विनश्यति।
आयुर्वृद्ध्यादिकं पश्चादयुतं विष्णुमन्दिरे॥
अमीवहा स्वप्रयुक्तं जपेत् सूक्तं शिवालये।
अयुतं चेत् कुष्ठरोगी स्वर्णवर्णं प्रयाति सः॥
मित्रस्येति जपेत् सूक्तमपस्मारो विनश्यति।
महापातकयुक्तोऽपि नीरोगी भूतले स्थितः॥
उदासेो† कुक्षिशूली तु जपेत् सूक्तं शिवालये।
अयुतं माघमासे तु मुच्यते नात्र संशयः॥
सूर्य्येण नो दिवः‡ सूक्तं प्रत्यब्दं प्रजपेद्द्विज।
वर्द्ध्यान्तु त्रिवर्षन्तु क्षयादिव्याधिनाशनम्"—इति॥

तएते जपा व्यधिविधाने शौनकेन प्रोक्ताः। होमश्च तत्र सएवाह,—

"ततश्च त्रिचमन्त्रेण होमं कुर्य्यात् सहस्रकम्।
अर्केण त्रिमधु कृत्वा शिरोरोगोऽविनश्यति।
सप्तम्यां रवियुक्तायां जलमध्ये यथा तथा॥
करवीरैश्च गायत्र्या होमं कुर्य्यात् सहस्रकम्।
व्याधिनाशो भवेच्छीघ्रं मृत्युं जयति सः पुमान्"—इति॥

बौधायनोऽपि,—

"असाध्यव्याधिना ग्रस्त उपेत प्राणहारिणा।
अतिरौद्रेण सूक्तेन मन्त्रयं वाग्यतः शुचिः॥

---

* अवे निषं,—इति मु०।

† उदके,—इति मु०।

‡ सूर्य्योदये जपेत्,—इति मु०।

पूर्व्वमाज्याहुतीर्हुत्वा उपस्थाय च शङ्करम्।
हविःशेषेण वर्त्तेत एकोत्तरमतन्द्रितः॥
पूर्णे मासि जयेन्मृत्युं रोगेभ्यश्च विमुच्यते।
होमकर्म्मण्यशक्तानां जपस्तद्द्विगुणो भवेत्"—इति॥

तैत्तिरीयकशाखायां च द्वितीयकाण्डे रोगनिवृत्त्यर्था होमा-बहुधोपवर्णिताः। तत्र तावत् प्रथमप्रश्ने काम्यपशुप्रकरणे प्रथमानुवाके। "वायव्यं श्वेतमालभेत"—इति श्वेतपश्वालम्भनानुवृत्तौ श्रूयते। "वायवे नियुत्वत आलभेत ज्योगामयावी"—इति। ज्योगामयावी दीर्घरोगी। वायोरश्वा नियुतः, तद्वते नियुत्वते। फलं च वाक्यशेषे श्रुतम्। "सएवास्मिन् प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव"—इति। सएव नियुत्वान् वायुरेव। अस्मिन् दीर्घरोगवति। इतासुर्गतप्राणः।

द्वितीयानुवाके श्रूयते। "यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमालभेत"—इति। वरुणगृहीतो जलोदराख्यव्याधिगृहीतः* इत्येके। अज्ञातरोगइत्यन्ये। एकः शितिः श्वेतः पादो यस्य स एकशितिपात्। "स एवैनं वरुणपाशाद्विमुञ्चति"—इति फलम्। सएव वरुणएव। वरुणपाशादुक्तरोगात्।

तस्मिन्नेवानुवाके। "आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं ज्योगामयावी"—इति। बभ्रुः पिङ्गलवर्णः। तत्फलन्तु "अग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येव"—इति।

चतुर्थानुवाके। "यदि बिभीयाद्दुश्चर्म्मा भविष्यामीति सोमा-

* महोदरव्याधिगृहीतः,—इति मु०।

पौष्णं श्याममालभेत"—इति। काण्ड्वादिभिः* पूर्व्वभाविभिश्चि-ह्नैर्भविष्यद्रोगं निश्चितवतः तस्माद्भयं सम्भवत्येव। तत्फलन्तु। "न दुश्चर्मा भवति"—इति।

षष्ठानुवाके। "प्राजापत्यं तूपरमालभेत यस्यावाज्ञातमिव ज्योगामयेत्"—इति। तूपरः शृङ्गहीनः पशुः। तत्फलन्तु। "सएवैनं तस्मात् स्रामान्मुञ्चति"—इति। सएव प्रजापतिरेव। तस्मात् स्रामादस्पष्टात् दीर्घरोगात्।

नवमानुवाके। "मैत्रं श्वेतमालभेत वारुणं कृष्णं ज्योगामयावी"—इति। तत्फलन्तु। "साक्षादेवैनं वरुणपाशान्मुञ्चति उत यदीतासु-र्भवति जीवत्येव"—इति। एवमेते रोगनिवर्त्तकाः पशवः प्रथमप्रश्ने-ऽभिहिताः।

तथा द्वितीयप्रश्ने काम्येष्टिप्रकरणे प्रथमानुवाके श्रूयते। "अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्व्वपेद् यस्य गावो वा पुरुषा वा प्रमीयेरन् यो वा बिभीयात्"—इति। भयप्रतियोगी तु रोगात्मकः पूतिगन्धोऽवगन्तव्यः। वाक्यशेषे "पूतिगन्धस्याप-हत्यै"—इति ,तत्फलकीर्त्तनात्।

तृतीयानुवाके। "अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्व्व-पेत् अग्नये पावकायाग्नये शुचये ज्योगामयावी"—इति। तत्फलन्तु। "यदग्नये पवमानाय निर्व्वपति प्राणमेवास्मिन् तेन दधाति। यद-ग्नये पावकाय वाचमेवास्मिन् तेन दधाति। यदग्नये शुचये आयु-रेवास्मिन् तेन दधाति। उत यदीतासुर्भवति जीवत्येव"—इति।

* काण्डूपतिभिः,—इति मु०।

तथा तत्रैव श्रुतम्। "एतामेव निर्व्वपेच्चक्षुष्कामः"—इति। चक्षुष्कामोनेत्ररोगग्रस्तः। "यदग्नये शुचये चक्षुरेवास्मिन् तेन दधात्युत यद्यन्धो भवति प्रैव पश्यति"—इति तत्फलश्रवणात्।

अनयैव दिशा वाक्यान्तराण्युदाहरणीयानि। ऋग्वेदयजुर्वेदाश्रितौ जपहोमौ प्रदर्शितौ। सामवेदाथर्व्ववेदाश्रितावपि सामविधानादिपर्य्यालोचनया* प्रदर्शनीयौ।

अर्चनानि तु शैववैष्णवाद्यागमादिषु प्रसिद्धानि। अर्च्चनादिभिरित्यादिशब्देनार्थ्यध्यानयोगप्राणायामादयो दृष्टादृष्टोपाया व्याधिनिवर्त्तका अवगन्तव्याः। ते च योगशास्त्रादौ प्रसिद्धाः। अस्माभिर्ग्रन्थविस्तरभिया न लिख्यन्ते।

न चोक्तेषु जपादिष्वनुष्ठितेष्वपि क्वचित् फलविसंवाददर्शनात् न विश्रम्भप्रवृत्तिरिति शङ्कनीयम्। औषधेष्वप्यस्य न्यायस्य समानत्वात्। तत्रापि मा भूद्विश्रम्भ इति चेत्। हन्तैवमायुर्व्वेदोदत्तजलाञ्जलिः स्यात्।

अथ मन्यसे, प्रयुज्यमानेष्वौषधेषु कस्माच्चिद्दोषात् निवर्त्त्यदोषप्रबलत्वाद्वा निवर्त्तकौषधप्रयोगस्याभ्यासोऽपेक्षितः,—इति। तर्हि जपादिष्वपि तुल्यमेतदुत्तरम्। सकृत् कृते कृतः शास्त्रार्थः,—इति न्यायस्त्वदृष्टफलेष्वेवावगन्तव्यो न दृष्टफलेषु। अतएवावघातादिष्वावृत्तिः परिकल्प्यते। न ह्यनिष्पन्नेषु तण्डुलेषु सकृत् मुसलप्रहारेणावघातविधेश्चरितार्थतां मीमांसकामन्यन्ते। तत्र यथा तण्डुलनिष्पत्तिपर्य्यन्तोऽवघाताभ्यासः, एवमत्रापि रोगनिवृत्तिप-

* सामवेदाश्रितावपि सामवेदपर्य्यालोचनया,—इति पु॰।

र्य्यन्तो जपाद्यभ्यासो द्रष्टव्यः ।

यत्तु क्वचिज्जपादीनामल्पसङ्ख्याश्रवणं, तदल्पदोषविषयतया व्यवस्थापनीयम् । एवञ्च सति न क्वापि विसंवादः ।

अयञ्च व्याधिप्रतीकारन्यायः सर्व्वेष्वपि अनिष्टेषु प्रारब्धफलेषु कर्मसु योजनीयः । यदि जपादीनां प्रायश्चित्तत्वमङ्गीकृत्य प्रारब्धकर्मनिवृत्तिरभ्युपेयते, यदि वा तदनङ्गीकारेण फलमात्रप्रतिबन्धः, सर्व्वथाऽपि विहिते जपादौ विश्रम्भेण प्रवृत्तिः ।

यदा भोगैकनिवर्त्त्यत्वशङ्कायुक्तेष्वपि प्रारब्धफलेष्वीदृशः प्रतीकारविश्रम्भः, तदाऽनारब्धफलेषु सञ्चितेषु कर्मसु प्रायश्चित्तप्रवृत्तिविश्रम्भोऽस्तीति किमु वक्तव्यम् । तस्मात्, यथोक्तेषु प्रायश्चित्तेषु निःसन्दिग्धैः प्रवर्त्तितव्यमित्यशेषमतिमङ्गलम् ।

तदेवमयं भगवान् पराशराचार्य्यः काण्डद्वयेन व्यवहारसूचनसहितमाचारप्रायश्चित्तप्रपञ्चमभिधाय शास्त्रमुपसंहरति,—

**एतत् पाराशरं शास्त्रं श्लोकानां शतपञ्चकम् ॥ ८० ॥**
**द्विनवत्या* समायुक्तं धर्मशास्त्रस्य सङ्ग्रहः । इति ।**

पराशरेण कस्यचिदुपपुराणस्यापि निर्मितत्वात् तस्य च ज्ञानप्रधानत्वात् तद्व्यवच्छेत्तुमेतदित्युक्तम् । अथातो हिमशैलाग्रे,—इत्यारभ्य प्रणीतो द्वादशाध्यायात्मको ग्रन्थसन्दर्भः प्रकृतत्वादेतच्छब्देन परामृश्यते । अस्य शास्त्रस्य कलिधर्मविषये प्रामाण्यातिशयं पूर्व्वोक्तमनुस्मारयितुं पराशरसम्बन्धोपवर्णनम् । शास्त्रशब्दोऽत्र विधायकं

* द्वनवत्या,—इति मु० ।

वचनमाचष्टे । शासनात् शास्त्रमिति तद्व्युत्पत्तेः । ननु शंसनात् शास्त्रमित्यपि तद्व्युत्पत्तिरस्ति । तदुक्तं पुराणे,—

"शासनात् शंसनाच्चैव शास्त्रमित्यभिधीयते"—इति ।

वाढम् । सा व्युत्पत्तिर्मोक्षशास्त्रविषया । तस्य सिद्धब्रह्मतत्त्वाख्यानरूपत्वात् । अत्र त्वनुष्ठेयार्थकथनात् पूर्व्वोक्तैव व्युत्पत्तिः समीचीना । तदेवाभिव्यञ्जयितुं शास्त्रमित्युक्तम् । वचनान्तराणामपोद्दापनिवृत्तये सङ्ख्याऽभिधानम् । मन्वादिस्मृतिवद्ग्रन्थबाहुल्याभावात् केषाञ्चिद्धर्म्माणामनुक्तिमाशङ्क्य तद्व्यवच्छेदाय सङ्क्षेप इत्युक्तम् ।

अस्य शास्त्रस्यार्थानुष्ठानप्रधानत्वात् पाठस्य स्वर्गं प्रत्यकिञ्चित्करत्वमाशङ्क्य वेदाध्ययनवत् स्वर्गसाधनत्वमाह,—

**यथाऽध्ययनकर्माणि* धर्मशास्त्रमिदं तथा ॥ ८१ ॥**
**अध्येतव्यं प्रयत्नेन नियतं स्वर्गगामिना । इति ।**

निगदव्याख्यातमेतत् ।

** ननु व्यासेन कलिधर्म्माणां पृष्टत्वात्, कलौ पराशरस्मृतिः,—इति पराशरेणोत्तरितत्वाच्च, पराशरोक्ताः सर्व्वे कलिधर्म्मा एवेति वक्तव्यम् । किञ्च । शेषं मुनिविभाषितम्,—इति इतरमुन्युक्तकलिनिषेधानामप्यभ्युपगतिः स्पष्टं लक्ष्यते । अतो-मूलोक्ताघसङ्कोचादीनां मूलोक्तीतदूरयात्रादीनामस्मिन् युगे प्रवृत्तावप्रवृत्तौ च विरोधो जागरूकः ।

---

* यथाऽध्यायनधर्म्माणि,—इति मु० ।

** एतच्चिह्नकोडीकृतो ग्रन्थांशो बङ्गीयपुस्तकेषु न दृश्यते ।

न च बाहुल्यमात्रेण स्मृतेः कलिधर्म्मविषयत्वं किं न स्यादिति वाच्यम्। विभाजकनिमित्ताभावात्। निषेधवचनानां निमित्तत्वे कृष्यादिकस्याप्यननुष्ठेयत्वापत्तेः। एतद्ग्रन्थोक्तव्यतिरिक्तविषयाणां तेषां निमित्तत्वे अघसङ्कोचादीनामपि कृष्यादिवदनुष्ठेयत्वापत्तेः। संन्यासाद्याश्रम-कृष्यादिव्यतिरिक्तापद्वृत्ति-सेतुयात्राव्यतिरिक्त-दूरयात्रादीनामग्राह्यत्वापत्तेः। आचारस्य तथात्वे अतिप्रसङ्गापत्तेः। स्मृतिवैयर्थ्यापत्तेश्चेति चेत्।

अत्रोच्यते। कलौ पराशरोक्तं तद्वचनोन्नीतञ्च सर्व्वमप्यनुष्ठेयमेव, नानुष्ठेयं किञ्चिदप्यस्ति। किन्त्वनुष्ठाने विशेषो विज्ञायते। समन्वयबलात्। तथाहि। निषेधाश्च युगप्रयुक्तानुपपत्तिमूलकाः। अन्यथा विध्युत्पत्तिवैयर्थ्यात्। अनुपपत्तिश्च दृष्टाऽदृष्टा चेति द्विविधा। तत्र दृष्टानुपपत्तिमूलकानामनुष्ठानमननुष्ठानञ्चानिन्दितम्। यत्रानन्यथासिद्धिप्रतिप्रसवविधिरुन्नीयते, तत्र दृष्टानुपपत्तिः कल्प्यते।

"दूराध्वोपगतं श्रान्तम्"
"यतिहस्ते जलं दद्यात्"
"वैश्वदेव उपस्थितम्"
"चातुर्वर्ण्याश्रमागतम्"
"एकपिण्डास्तु दायादाः"
"देशान्तरमृतः कश्चित्"
"ब्रह्मचारी गृहे येषाम्"
"सव्रतः सत्रपूतस्य"

"आहिताग्निश्च यो द्विजः"

"राज्ञश्च सूतकं नास्ति"

"यस्य चेच्छति पार्थिवः"

"सम्प्रणीतः श्मशानेषु"

"दासनापितगोपालकुलमित्रार्द्धसीरिणः"

"यजेत वाऽश्वमेधेन"

इत्याद्यन्यथाऽनुपपत्त्या दूरयात्रादिविधिरूहनीयः। "एकाहाच्छुध्यते विप्रः"—इत्यशक्ताशौचविधिर्यायावरविषयत्वेन वा, शौपासनोत्कापवादप्रतिप्रसवविषयत्वेन वा, अन्यथासिद्धः। "नष्टे मृते प्रव्रजिते"—इति पुनरुद्वाहविधिः परिवेदनाद्यक्रमविवाहविषयत्वेनान्यथासिद्धः। "क्षेत्रजस्यैव"—इत्यादि क्षेत्रजादिपुत्रभेदप्रदर्शनं कुण्डगोलकप्रदर्शनवत् प्रायश्चित्तार्थत्वेनान्यथासिद्धम्। न च दत्तौरसयोरपि तथा स्यादिति वाच्यम्। ऋतुगमनप्रशंसनेन वैपरीत्यनिन्दनेन च औरसस्यैव लक्षणप्रणयनेन दत्तस्यापि विध्यभिप्रायविषयत्वप्रतिपादनात् दत्तौरसकथनं न प्रायश्चित्तरूपमिति स्पष्टीकृतम्। "संसर्गमाचरेद्विप्रः"—इत्यादि संसर्गप्रायश्चित्तं विलक्षणयाजनादिविषयत्वेनान्यथासिद्धम्। "याजनाध्ययनात्"—इति तु पापित्वमात्रापादकत्वेनान्यथासिद्धम्।

अन्यच्च गोवधादौ अदृष्टाऽनुपपत्तिः कल्प्यते। तेषामनुष्ठानं निन्दितम्। यत्र प्रत्यक्षोऽपूर्व्वविधिर्दृश्यते हत्यादौ, तस्याननुष्ठानं निन्दितम्। तदितरविषयत्वेनैव निषेधानां प्रवृत्तत्वात्। पूर्व्वोक्तान्यथासिद्धविधिविषयाणामप्येवमेव द्रष्टव्यम्। तेषामपि स्वविषयेषु

प्रत्यक्षापूर्व्वविधित्वात्। एतदभिप्रायेणैव सर्व्वमपि व्याख्यानं सङ्गच्छते।

अध्यायाचारकाण्डानभिहितसमयाचारभेदान् द्वितीये
काण्डेऽध्यायाष्टकेऽपि क्वचिदनभिहितान् निष्कृतीनां प्रभेदान्।
अध्याये द्वादशेऽस्मिन्नकथयदनघः शक्तिसूनुर्मुनीन्द्र-
स्तं शिष्टानुग्रहार्थं सुविवृतमकरोन्माधवाचार्य्यवर्य्यः ** ॥

अध्यायेऽत्रावाशिष्टं समुदितमुभयोः काण्डयोर्द्वादशे स्यात्
प्रायश्चित्तं यदस्मिन्ननुपदमगमत् पातकादौ रहस्ये।
अन्यत् सौम्यादिकृच्छ्रं सुविहितफलदं कर्मणो यो विपाकः
सर्व्वं भावोपलक्ष्यं स्मृतिहृदयमिदं व्याकृतं माधवेन* ॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां द्वादशोऽध्यायः समाप्तः ॥०॥

समाप्तञ्चेदं प्रायश्चित्तकाण्डम् ॥०॥

---

** एतच्चिह्नक्रोडीकृतो ग्रन्थांशो वङ्गीयपुस्तकेषु न दृश्यते।

* श्लोकोऽयमस्य मुद्रितपुस्तके नास्ति।

श्रीगणेशाय नमः ।

# पराशरमाधवः ।



## व्यवहारकाण्डम् ।



वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यन्नत्वा कृतकृत्याः स्युः तं नमामि गजाननम् ॥

सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परं
मज्जन् सज्जनसङ्गतीर्थनिपुणः सद्वृत्ततीर्थं श्रयन् ।
लब्ध्वामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो-
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम्(१) ॥

---

(१) सोऽहं माधवाचार्य्यनामा विवेकरूपस्य तीर्थस्य पदवीं मार्गं प्राप्य हृदि अव्याहतं श्रीकण्ठं महादेवं भजे ध्यायामीत्यर्थः। कीदृशोऽहं? आम्नायो वेदस्तद्रूपे तीर्थे परं केवलं मज्जन् स्नानं कुर्व्वन्। तदेकपरायण इत्यर्थः। तथा, सज्जनसङ्गरूपेण तीर्थेन निपुणः, निर्णीतशास्त्रतत्त्वः। तथा, सद्वृत्तं साधूनामाचरणं, तदेव तीर्थं श्रयन् आश्रयन्। तथा, श्रीभारतीतीर्थतः तन्नामकाद्गुरोः सका-

सत्यैकव्रतपालको द्विगुणधीः त्र्यर्थी चतुर्वेदिता
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः ।
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दशप्रत्ययः
स्मार्त्तोच्छ्रायधुरन्धरो विजयते श्रीबुक्कणः क्ष्मापतिः(१) ॥

---

शात् लब्धां प्रभावलहरीमिष्टदेवताप्रसादरूपां लहरीमाकलयन् प्राप्नुवन्नित्येकोऽर्थः । भारतीरूपात्तीर्थात् लब्धां प्रभावलहरीं पाण्डित्यरूपामाकलयन्नित्यपरः । तथा, विद्या ब्रह्मविद्या, तद्रूपं तीर्थमुपाश्रयन् सेवमान इत्यर्थः । एतस्यैव विद्यारण्यइति नाम प्रसिद्धम् । इति काशीपुस्तके टीका ।

(१) धर्म्मवर्त्तकं स्वदेशाधिपतिं वर्णयति सत्येति । श्रीमान् बुक्कणनामा क्ष्मापतिः राजा विजयते । कीदृशः ? सत्यरूपं यदेकं मुख्यं व्रतं, तत्पालकः । तथा द्विगुणधीरिति परापेक्षया द्विगुणबुद्धिमानित्यर्थः । अथवा, द्वौ गुणौ सत्वरजोरूपौ यस्यां, तादृशी धीर्यस्य, न तु तमोगुणशालिनीत्यर्थः । तथा, त्रीन् धर्म्मार्थकामानर्थयते प्रार्थयते, तच्छीलः । तथा, चतुर्णां वेदानां सामाद्युपायानां वा वेदिता ज्ञाता । तथा, पञ्चसु स्कन्धेषु तन्नामकेषु सहायादिपदार्थेषु कृती कुशलः । यदुक्तं नीतिशास्त्रे।

"सहायाः साधनोपाया विभागो देशकालयोः ।
विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते"—इति ।

अस्यार्थः । सहायाः राजकार्य्ये मन्त्रिसैनिकाद्याः । तथा, कार्य्यस्य साधने उपायाः सामादयः । तथा, देशकालयोर्विभागो व्यवस्था, अस्मिन् काले अस्मिन् देशे अयमुपाय इत्येवंरूपा । तथा, विनिपातस्य दुष्ट (?) रोगोत्पातादिरूपस्य प्रतीकारो निराकरणम् । तथा, सिद्धिः इष्टलाभः । एते पञ्चस्कन्धा राज्याङ्गमित्यर्थः । कीदृशो-

इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैव्यस्य मेधातिथि-
र्धौम्यो धर्मसुतस्य वैण्यनृपतेः स्वौजा निमेर्गौतमिः।
प्रत्यग्दृष्टिररुन्धतीसहचरो[१] रामस्य पुण्यात्मनो-
यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः॥
प्रज्ञामूलमही विवेकसलिलैः सिक्ता बलोपघ्निता[२]
मन्त्रैः* पल्लविता विशालविटपा सन्ध्यादिभिः षड्गुणैः।

* बलोपघ्निकामन्त्रैः,—इति पाठान्तरम्।

राजा? षडन्वयदृढः, षसां गुणानामन्वयेन संबन्धेन दृढोऽजेय इत्यर्थः। षसां शास्त्राणामित्यर्थान्तरम्। पुनः कीदृशः? सप्तभिरङ्गैः सर्वसहनशीलः। तानि च,—

"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च"—इति

नीतिशास्त्रोक्तानि ज्ञेयानि। तथा, अष्टौ(?) व्यक्तयो भूतयो यस्य, तादृशस्य शिवस्य कलाया अंशस्य धारकः। तास्व भूतयो जलाग्नियजमानचन्द्रसूर्य्याकाशवायुपृथ्व्य आगमोक्ताः। पुनः कीदृशः? नवनिधिः, नवसङ्ख्याका निधयो यस्य, ते च महापद्मादयः प्रसिद्धाः। नवानां रसानां निधिरित्यर्थान्तरम्। नवो नूतनो निधिरिति वा। पुनः कीदृशः? पुष्यद्दशप्रत्ययः, पुष्यन्ती वर्द्धमाना दशा यस्य, तादृशः प्रत्ययो ज्ञानं यस्य, तादृशः। तथा, स्मार्त्तानां पाषण्डिभिन्नशिष्टानामुच्छ्रायस्य वृद्धेर्धुरन्धरः तत्प्रवर्त्तक इत्यर्थः। इति काशीपुस्तके टीका।

(१) अन्तर्गतजड़प्रातिकूल्येन सच्चिदानन्दरूपेणाञ्चति प्रकाशते इति प्रत्यक् तथा दृष्टिर्यस्येति विग्रहः। इति काशीपुस्तके टीका।

(२) प्रज्ञैव मूलं च मही च यस्याः, सा तथा। बलैरुपघ्निता जातोपघ्ना। उपघ्नः पुनराश्रयतरुः। स्पष्टमन्यत्।

शक्त्या कोरकिता यशःसुरभिता सिद्ध्या समुद्यत्फला
सम्प्राप्ता भुवि भाति नीतिलतिका सर्वोत्तरं माधवम् ॥
श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः ॥
स माधवः सकलपुराणसंहिता-
प्रवर्त्तकः स्मृतिसुषमापराशरः ।
पराशरस्मृतिजगदीहिताप्तये
पराशरस्मृतिविवृतौ प्रवर्त्तते ॥

---

व्याख्याते आचारप्रायश्चित्ते ।

## अथ व्यवहारः प्रस्तूयते ।

यद्यप्यृणादानादीनामष्टादशपदानां व्यवहाराणां मध्ये कमपि व्यवहारं पराशरो न व्युत्पादितवान्, तथाप्याचारकाण्डे चतुर्णां वर्णानां क्रमेणाचारान् ब्रुवन्,—

"क्षत्रियस्तु प्रजाश्चैव क्षितिं धर्मेण पालयेत्"—

इत्यस्मिन् वचने क्षत्रियविशेषस्य राज्ञ आचारविशेषमेवमवोचत्*, "क्षितिं धर्मेण पालयेत्"—इति। तत्र क्षितिपालनं नाम, क्षित्याश्रितासु प्रजासु दुष्टानां निग्रहः शिष्टोपद्रवपरिहारश्च। एतदर्थमेव हि

---

* राजाचारविशेषमेवमवोचत्,—इति पाठान्तरम् ।

जगदीश्वरस्य रामकृष्णादिरूपेणावतारः। तच्च गीतासु भगवता विस्पष्टमभिहितम्,—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे"—इति।

यथा महतां रावणादीनां शिक्षार्थे रामाद्यवतारः, तथा क्षुद्राणां चौरादीनां शिक्षार्थे राजावतारः,—इति द्रष्टव्यम्। अतएव मनुः,—

"अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः॥
चन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
इन्द्रवित्तेशयोश्चैव मात्रा आहृत्य शाश्वतीः[१]॥
यस्मादेव सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः।
तस्मादभिभवत्येष सर्वभूतानि तेजसा॥
तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट्।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः॥
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति॥

(१) चन्द्रादीनां शाश्वतीर्नित्यामात्रा अंशान् आहृत्य राजानमसृजदिति पूर्व्वेण सम्बन्धः।

एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्।
कुलं दहति राजाग्निः सपशुद्रव्यसञ्चयम्॥
कार्य्यं सोऽवेक्ष्य शक्तिञ्च देशकालौ च तत्त्वतः।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः"—इति।

एतच्च सर्वमस्माभिराचारकाण्डएव राजधर्मान् व्याचक्षाणैः प्रपञ्चितम्। बृहस्पतिस्तु विशेषतः ऋणादानादिव्यवहारविचारमेव राजोत्पत्तिप्रयोजनमभिप्रेत्य तद्विचारक्षमत्वमुपपादयितुं इन्द्राद्यात्मकत्वं राज्ञ उदाजहार,—

"गुणधर्मवतो राज्ञः कथयाम्यनुपूर्वशः।
धनिकर्णिकसन्दिग्धौ प्रतिभूलेख्यसाक्षिणः॥
विचारयति यः सम्यक् तस्योत्पत्तिं निबोधत।
सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च॥
तेजोमात्रं समुद्धृत्य राज्ञोमूर्त्तिर्विनिर्मिता।
तस्य सर्वाणि भूतानि स्थावराणि चराणि च॥
भूयोभोगाय कल्पन्ते स्वधर्मान्न चलन्ति च।
नाराजके कृषिवणिक्कुसीदपशुपालनम्।
तस्माद्वर्णाश्रमाणान्तु नेताऽसौ निर्मितः सुरैः"—इति।

लोके हि, राजा भूपो नृप इत्येते शब्दा एकार्थवाचित्वेन प्रयुज्यन्ते। तत्र राजशब्दो रूढः, भूपनृपशब्दौ यौगिकौ। भुवं पातीति भूपः, नॄन् पातीति नृपः। तथाच राज्ञो भूपालकत्वं मनुष्यपालकत्वं च गुणः। तत्प्रयुक्तधर्मो व्यवहारविचारः। स च पूर्वं नाभिहितः, किन्तु वर्णाश्रमधर्मान् व्याचक्षाणेन बृहस्पतिना राजन्यपि क्षत्रियत्ववर्णप्र-

युक्तोगृहस्थाश्रमप्रयुक्तस्य धर्मोऽभिहितः। अतः परं भूपत्वगुणप्रयुक्त-व्यवहारविचारात्मको राजधर्मोऽभिधीयते। धनिको धनप्रदाता, ऋणिकस्तदीयस्यार्थस्य गृहीता, तयोः सन्दिग्धिर्विवादः[१]। प्रतिभूस्तस्य प्रत्यर्पणं कारयिष्यामीति प्रतिश्रुत्य तदीयस्य भारस्य वोढा। लेख्यं धनसङ्ख्यावृद्धिविशेषादियुक्तं पत्रम्। साक्षिण उत्तमाधमर्णयोः सम्प्रतिपन्नाः मध्यस्थाः। एतेषां प्रतिभ्वादीनां त्रयाणां सन्दिग्धिर्न्यायान्यायवर्त्तित्वाभ्यां सन्देहः। तस्मिन् सन्देहे सति योराजा विचारयितुं प्रभवति, तस्योत्पत्तिरभिधीयते इत्यर्थः। यस्माद्राजा सोमेन्द्रादिदेवतांशसम्भूतत्वादृणादानादीन् व्यवहारान् विचारयितुं प्रभवति, तस्मात्तानसौ विचारयेत्। तदाह याज्ञवल्क्यः,—

"व्यवहारान् नृपः पश्येद् विद्वद्भिर्ब्राह्मणैः सह।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः"—इति।

अत्र व्यवहारशब्दो रूढियोगाभ्यां निर्णयफलकमर्थिप्रत्यर्थिविवादमाचष्टे। तत्र रूढिः कात्यायनेन निरूपिता,—

"प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे।
साध्यमूलस्तु यो वादो व्यवहारः स उच्यते"—इति।

न्यायः शिष्टसम्प्रतिपन्नं लौकिकमाचरणं, तस्य विस्तर इदं मदीयं धनमन्येनापहृतम्; तत् चेत्तं धनादिकमेतस्य युक्तं नान्यस्येति उपपत्तिपुरःसरो निर्णयः। तस्मिन् न्यायविस्तरे विषयीभूते सति तत्प्रवर्त्तकोऽर्थिप्रत्यर्थिनोर्यो विवादः स व्यवहार उच्यते। मदीयं धनं अन्येनापहृतं तत् पुनर्मया साधनीयमिति अर्थी यदुद्दिश्य प्रवर्त्तते,

---

(१) सन्दिग्धौ इति पदं सन्दिग्धिशब्दात् सप्तम्येकवचने निष्पन्नम्।

तन्मूलं साध्यम् । तच्च मूलं यस्य विवादस्य, सोऽयं साध्यमूलः । स च कदा सम्पद्यते,—इत्यपेक्षायामुक्तम्,—"प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये"—इति ।

"सत्यं ब्रूयात् प्रियं ब्रूयात् न स्तेनः स्यात् न वार्द्धुषिः"—

इत्यादिविधिनिषेधावुपलभ्य विहितानुष्ठाने प्रतिषिद्धवर्जने चोत्पन्न उत्साहः प्रयत्नः । तेन साध्यो धर्मनामकः पदार्थो यदा विच्छिन्नो भवति, तदानीमयं विवाद उत्पद्यते । असति तु धर्मविच्छेदे नास्ति व्यवहारस्यावकाशः ।अतएव नारदः,—

"मनुः प्रजापतिर्यस्मिन् काले राज्यमबूभुजत् ।
धर्मैकतानाः पुरुषास्तदाऽऽसन् सत्यवादिनः ॥
तदा न व्यवहारोऽभूत् न द्वेषो नापि मत्सरः ।
नष्टे धर्मे मनुष्येषु व्यवहारः प्रवर्त्तते"—इति ।

बृहस्पतिस्तु द्वेषलोभादिदुष्टस्यैव व्यवहर्त्तृत्वमाह,—

"धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः ।
लोभद्वेषाभिभूतानां व्यवहारः प्रवर्त्तते" ॥

तस्माद्धर्मे विच्छिन्ने सति साध्यमूलो न्यायनिर्णयफलो विवादो व्यवहारशब्देन रूढ्याऽभिधीयते । हारीतोऽपि निरूढिमभिप्रेत्याह,—

"स्वधर्मस्य यथा प्राप्तिः परधर्मस्य वर्जनम् ।
न्यायेन क्रियते यत्तु व्यवहारः स उच्यते"—इति ।

व्यवहारशब्दस्य यौगिकमर्थं कात्यायन आह,—

"वि नानार्थेऽव सन्देहे हरणं हार उच्यते ।
नानासन्देहहरणाद्व्यवहार इति स्मृतः"—इति ।

व्यवहार इत्यत्र विशब्दो नानेत्येतस्मिन्नर्थे वर्त्तते। अवशब्दश्च सन्देहे वर्त्तते। नानेतानेवंविधानेकसन्देहहारिणोव्यवहारानर्थाद्विगतरागद्वेषवशात् प्राशान् राजा सम्यग्विचारयेत्[१]। तद्विचारश्च राज्ञो गुणधर्मरूप आचारः। अतएव आचारकाण्डे व्यवहाराणामन्तर्भावमभिप्रेत्य पराशरः पृथग्व्यवहारकाण्डमकृत्वा, "चितिं धर्मेण पालयेत्"—इति सूचनमात्रं व्यवहाराणां कृतवान्। तानेवात्र सूचितान् व्यवहारान् वयं स्मृत्यन्तराणि तन्निबन्धनानि चानुसृत्य यथाशक्ति निरूपयामः।

तत्र पूर्वोदाहृताभ्यां रूढियोगस्मृतिभ्यां व्यवहारस्वरूपं निरूपितम्।

---

## अथ तद्भेदाः निरूप्यन्ते।

तत्र सपणत्वापणत्वाभ्यां द्वैविध्यमाह नारदः,—

"सोत्तरोऽनुत्तरश्चेति स विज्ञेयो द्विलक्षणः।
सोत्तरोऽभ्यधिको यत्र विलेखापूर्वकः पणः"—इति।

अहं यदि पराजयेयं, तदा शास्त्रप्रापिताद्दण्डद्रव्यात् अधिकमेव द्रव्यं राज्ञे तुभ्यञ्च दास्यामीति पत्रं लिखित्वा यदभिभाषणं, तदुत्तरम्। तेन सह वर्त्तते इति सोत्तरः। तद्रहितोऽनुत्तरः। पुनरपि

---

(१) अर्थो धनम्। अर्थादिविषयरागद्वेषवशात् प्राशान् व्यवहारान् राजा विचारयेदित्यर्थः। व्यवहारानर्थान् विगतरागद्वेषवशात् प्राशानित्यादिपाठे, प्राशान् व्यवहारान् राजा विगतरागद्वेषवशात् विचारयेदिति सम्बन्धः।

चतुष्पात्त्वादिभिस्त्रयोदशभिः प्रकारैः व्यवहारस्य अवान्तरभेदान् सएव निर्दिश्य विवृणोति,—

"चतुष्पाच्च चतुःस्थानः चतुःसाधनएवच ।
चतुर्हितः चतुर्व्यापी चतुःकारी च कीर्त्तितः ॥
त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा ।
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैवच ॥
धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः ।
तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ॥
चरित्रं तु स्वीकरणे राजाज्ञायां तु शासनम् ।
सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते ॥
चतुर्णामपि वर्णानां रक्षणाच्च चतुर्हितः ।
कर्त्तारं तस्माक्षिणश्च सभ्यान्राजानमेवच ॥
व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः ।
धर्मस्यार्थस्य यशसो लोकहेतोस्तथैवच ।
चतुर्णां करणादेष चतुष्कारी प्रकीर्त्तितः ॥
कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात् प्रवर्त्तते ।
त्रियोनिः कीर्त्यते तत्र त्रयमेतद्विवादकृत् ॥
द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः ।
शङ्काऽसतान्तु संयोगात् तत्त्वं होढादिदर्शनात् ॥
पक्षद्वयाभिसम्बन्धात् द्विद्वारः स उदाहृतः ।
पूर्ववादस्तयोः पक्षः प्रतिवादस्तदुत्तरः ॥

भूतच्छलानुसारित्वात् द्विगतिः स उदाहृतः।
भूतं तत्त्वादिसंयुक्तं प्रमादाभिहितं छलम्॥
राजा सपुरुषः सभ्याः शास्त्रं गणकलेखकौ।
हिरण्यमग्निरुदकमष्टाङ्गः स उदाहृतः॥
ऋणादानं ह्युपनिधिः सम्भूयोत्थानमेवच।
दत्तस्य पुनरादानमशुश्रूषाऽभ्युपेत्य च॥
वेतनस्यानपाकर्म तथैवास्वामिविक्रयः।
विक्रीयासम्प्रदानञ्च क्रीत्वाऽनुशय एवच॥
समयस्यानपाकर्म विवादः क्षेत्रजस्तथा।
स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसम्॥
वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेवच।
द्यूतं प्रकीर्णकञ्चैवेत्यष्टादशपदः स्मृतः॥
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते"—इति।

ननु धर्मादीनां पादत्वमयुक्तं, प्रतिज्ञोत्तरप्रमाणनिर्णयाणां व्यवहारपादत्वात्। यतो याज्ञवल्क्यः प्रतिज्ञादीनि प्रकृत्याह,—

"चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः"—इति।

वृहस्पतिरपि,—

"पूर्वपक्षः स्मृतः पादः द्वितीयश्चोत्तरः स्मृतः।
क्रियापादस्तृतीयस्तु चतुर्थो निर्णयः स्मृतः"—इति।

नायं दोषः। धर्मादीनां प्रकारान्तरेण पादत्वोपपत्तेः। योऽयं निर्णयाख्यश्चतुर्थपादोऽभिहितः, स धर्मादिभिश्चतुर्भिः निष्पद्यते। तदाह वृहस्पतिः,—

"धर्म्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः"—इति ।

तस्मान्निर्णयहेतुतया धर्मादीनां व्यवहारपादत्वं भविष्यति। तेषां च निर्णयहेतुत्वं कात्यायनेन प्रपञ्चितम्,—

"दोषकारी तु कर्तृत्वं धनस्वामी स्वकन्धनम् ।
विवादे प्राप्नुयाद्यत्र स धर्मेणैव निर्णयः"—इति ।

दोषकारी वाक्पारुष्यादिकारी च* यस्मिन् विवादे व्यवहारे चरित्र-राजशासननैरपेक्ष्येण धर्माभिमुखः सन्नद्धाधर्माद्भीतः† स्वकीयं दोष-कर्तृत्वं स्वयमेव अङ्गीकरोति ; यत्तु धनस्वामी‡ व्यवहारादिप्रायासम-न्तरेण धर्माभिमुखाद्धनापहारिणः स्वकीयं धनं प्राप्नोति, तत्र दोषका-रिणो धर्माधिमुख्यमेव निर्णयहेतुः। व्यवहारस्य निर्णयहेतुत्वं सएवाह,—

"स्मृतिशास्त्रन्तु यत्किञ्चित् प्रथितं§ धर्मसाधकैः ।
कार्य्याणां निर्णयाद्धेतोर्व्यवहारः स्मृतो हि सः॥"—इति ।

यत्र धर्मशास्त्रकुशलैर्विद्वद्भिरर्थिप्रत्यर्थिनोरग्रे निर्णयाय धर्मशास्त्रं

---

* अत्र चकारोऽधिकः प्रतिभाति । दोषकारी इत्यस्य विवरणरूप-त्वात् वाक्पारुष्यादिकारीत्यस्य । परन्तु, सर्व्वेष्वादर्शपुस्तकेषु स्थित-त्वाद्रक्षितः ।

† इत्थमेव पाठः सर्व्वेष्वादर्शपुस्तकेषु । मम तु, सन् अथवा अधर्म्माद् भीतः,—इति पाठः प्रतिभाति ।

‡ यत्तद्धनस्वामी,—इति का० । मम तु, यत्र धनस्वामी,—इति पाठः प्रतिभाति ।

§ प्रापितम्,—इति का० ।

‖ कार्य्याणां निर्णयार्थे तु व्यवहारस्मृतौ हि सः,—इति का० । मम तु, व्यवहारः स्मृतो हि सः,—इति पाठः प्रतिभाति ।

प्रख्यापितं भवति, स निर्णयो व्यवहारजन्यः। चरित्रजन्यं निर्णय-माह सएव,—

"यद्यदाचरते येन धर्म्यं वाऽधर्म्यमेव वा।
देशस्याचरणं नित्यं चरित्रं तद्धि कीर्त्तितम्"—इति।

शास्त्रोक्तधर्म्मादनपेतं* धर्म्यं, तद्विपरीतं अधर्म्यं, तदुभयं देशाचारानुसारेण यत्र स्वीक्रियते,तत्र चरित्रं निर्णयहेतुः। राजशासनस्य निर्णयहेतुतामाह सएव,—

"न्यायशास्त्राविरोधेन† देशदृष्टेस्तथैवच।
यद्धर्म्मं स्थापयेद्राजाऽन्याय्यं तद्राजशासनम्"—इति।

न्यायशास्त्रं व्यवहारप्रतिपादकं स्मृतिशास्त्रं, तस्य देशाचारस्य वा विरोधेन राजा यमनुशास्ति, स निर्णयो राजशासनजन्यः। यथोक्तानां धर्म्मादीनां चतुर्णां मध्ये पूर्वस्य पूर्वस्य च बाध्यत्वं उत्तरोत्तरस्य बाधकत्वञ्च वृहस्पतिना प्रपञ्चितम्,—

"शास्त्रमेव समाश्रित्य क्रियते यत्र निर्णयः।
व्यवहारः स विज्ञेयो धर्म्मस्तेनापि हीयते॥
देशस्थित्याऽनुमानेन नैगमानुमतेन च।
क्रियते निर्णयस्तत्र व्यवहारस्तु कथ्यते॥

---

* शास्त्रोक्तधर्म्माद्युपेतम्,—इति शा० स०।

† सर्व्वेष्वादर्शपुस्तकेष्वेवमेव पाठः। मम तु, न्यायशास्त्रविरोधेन,—इति पाठः प्रतिभाति। अतएव, उत्तरः पूर्व्वबाधक इत्यादिना राजशासनस्य सर्व्वबाधकत्वमुक्तं सङ्गच्छते। न्यायशास्त्राविरोधेन,—इति पाठे तु, 'ऽन्याय्यम्'—इत्यत्र न्याय्यं, 'देशाचारस्य वा विरोधेन'—इत्यत्र, देशाचारस्य वाऽविरोधेन,—इति पठितुमुचितम्।

विज्ञाय चरिताचारं यत्र कुर्य्यात् पुनर्नृपः ।
निर्णयं, सा तु राजाज्ञा चरित्रं बाध्यते तया"—इति ।

(१)चतुर्षु वर्णेषु यः कश्चिद्राजद्रोहं कृत्वा राज्ञो भीतः सन् अतिभीरुतया स्वापराधमङ्गीचकार । तत्र समीपवर्त्तिनः साक्षिणो वर्णिवधं निवारयितुमिच्छन्तः सत्यमुलङ्घ्य, तत्र साक्ष्यनृतं वदेदित्येतादृशं शास्त्रमेवाश्रित्य तदीयमपराधं पर्य्यहार्षुः । तत्र व्यवहारेण धर्म्मो बाध्यते। केरलदेशादौ वेश्यागमने साक्षिभिरापादितेऽपि देशाचारवशान्नायं राज्ञा दण्ड्यते। तत्र चरित्रेण व्यवहारस्य बाधः। सत्यपि तादृशे देशाचारे 'त्वयैवं न व्यवहर्त्तव्यम्'—इति राजा यदाऽनुशास्ति, तदा राजाज्ञया चरित्रस्य बाधः । (२)ये एते प्रोक्ताः धर्म्मादयश्चत्वारः पादास्ते सत्यादिषु चतुर्षु प्रतिष्ठिताः। दोषकारी स्वयमनृताद्भीतोऽयमपि* अपराधोऽस्तीति सत्यं ब्रूते। अतो धर्मस्य सत्ये अवस्थानम्। प्रतिज्ञोत्तरयोः कृतयोः साक्षिणा यस्य पक्षोऽभ्युपगम्यते, तस्य जयः, तेन व्यवहारस्तस्य साक्षिण्यवस्थानम्। कार्णाटकदेशे बलान्मातुलसुताविवाहो न दोषाय, केरलदेशे कन्यायाः ऋतुमतीत्वं न दोषायेत्येवमादिकस्तत्तद्देशसमयः।तत्र तत्र पत्रादिशासनञ्च तिष्ठति। शिष्यते इति शासनं, राजाज्ञानुसारेण प्रजानां वर्त्तनम् । तच्च राजाज्ञायां प्रतिष्ठितम्। सामदानभेददण्डैश्चतुर्भिः दोषकारिणो दोष-

---

* मन्तताद्भीतोऽपि,—इति का० ।

---

(१) उत्तरः पूर्व्वबाधक इति नारदवचनांशं व्याचष्टे चतुर्ष्वित्यादिना ।

(२) तत्र सत्ये स्थितोधर्म्म इत्यादिवचनानि व्याख्यातुमुपक्रमते, ये एते इत्यादिना ।

करणाय* चतुःसाधनत्वम्। चतुर्हितत्वं विस्पष्टम्। कर्त्रादिचतुष्टय-व्यापित्वं मनुना स्पष्टीकृतम्,—

"पादोऽधर्मस्य कर्त्तारं पादो गच्छति साक्षिणः।

पादः सभासदः सर्वान् पादो राजानमृच्छति"—इति।

जेतुर्नृपस्य वा धर्म्मार्थयशसो लोकानुराग†सम्पादनाच्चतुष्कारित्वम्। त्रियोनित्वं स्पष्टम्। असतां कितवस्तेनादीनां संसर्गं यः करोति, तस्मिन्नपि चौर्य्यादिशङ्का जायते। होढ़ोऽपहृतद्रव्यादिदर्शनम्, तल्लिङ्गं वा। तस्मादभियोगो भवति। अर्थिप्रत्यर्थिनोः यौ पूर्वोत्तरपक्षौ तौ व्यवहारस्य प्रवर्त्तकौ। तस्मात् द्विद्वारत्वम्। द्रव्यसङ्ख्यादिकं याथातथ्येनान्यथा वा राजादीनां अग्रे यदा ब्रूते, तदा तस्योभयस्य उपरि व्यवहारः प्रवर्त्तते। ततो द्विगतित्वम्। अष्टाङ्गेषु सपुरुषो राजेत्येतदेकमङ्गम्। अतो नास्ति नवत्वसङ्ख्याप्रसक्तिः। ऋणादानादीनां अष्टादशपदानां स्वरूपमुपरिष्टात् तत्र तत्र विचारयिष्यते‡। एतेषां अष्टादशपदानां मध्ये एकैकस्य पदस्य अवान्तरक्रियाभेदादनन्तभेद-भिन्नत्वं शतशाखत्वम्। एतान् अष्टादशपदानवान्तरानन्तभेदभिन्नान् व्यवहारान् प्रकारान्तरेण द्वेधा संगृह्णाति कात्यायनः,—

"द्वे पदे साध्यभेदात्तु पदाष्टादशतां गते।

अष्टादशक्रियाभेदाद्भिन्नान्यथ सहस्रधा"—इति।

---

* दोषकारणाय,—इति का०। मम तु, दोषकरणादिति पाठः प्रतिभाति।

† धर्म्मार्थास्त्रयोलोकानुराग,—इति का०। मम तु, धर्म्मार्थयशोलोकानुराग,—इति पाठः प्रतिभाति।

‡ विवदिष्यते,—इति शा० स०।

द्विपदत्वं विशदयति वृहस्पतिः,—

"द्विपदो व्यवहारः स्याद्धनहिंसासमुद्भवः।
द्विसप्तकोऽर्थमूलस्तु(१) हिंसामूलः चतुर्विधः"—इति।

तदेतदुभयविधं स एव विवृणोति,—

"कुसीदनिध्यदेयाद्यं* सम्भूयोत्थानमेव च।
भृत्यदानमशुश्रूषा†(२) भूवादोऽस्वामिविक्रयः॥
क्रयविक्रयानुशयः समयातिक्रमस्तथा।
स्त्रीपुंसयोगः स्तेयञ्च दायभागोऽक्षदेवनम्॥
एवमर्थसमुत्थानं पदानि‡ तु चतुर्दश।
पुनरेव प्रभिन्नानि क्रियाभेदैरनेकधा॥
पारुष्ये द्वे साहसञ्च परस्त्रीसंग्रहस्तथा।
हिंसोद्भवपदान्येवं चत्वार्य्याह वृहस्पतिः"—इति।

जगति सम्भावितानशेषान् विवादानुक्तेष्वष्टादशसु स एव अन्त-र्भावयति,—

"पदान्यष्टादशैतानि धर्म्मशास्त्रोदितानि तु।
मूलं सर्वविवादानां ये विदुस्ते परीक्षकाः"—इति।

इति व्यवहारपरिच्छेदः।

---

* कुसीदनिध्याधेयाद्यं,—इति ग्रा०।
† भृत्यदारमशुश्रूषा,—इति का०।
‡ एवमर्थसमुत्थानपदानि,—इति पाठो मम प्रतिभाति।

---

(१) द्विसप्तक इति चतुर्दश इत्यर्थः।
(२) भृतिः कर्म्ममूल्यं, तस्या भृतेरदानं भृत्यदानम्।

## अथ सभा निरूप्यते ।

तत्र वृहस्पतिः,—

"दुर्गमध्ये गृहं कुर्य्याज्जलवृक्षान्वितं पृथक् ।
प्राग्दिशि प्राङ्मुखीन्तस्य लक्षण्यां कल्पयेत् सभाम् ॥
माल्यधूपासनोपेतां बीजरत्नसमन्विताम् ।
प्रतिमाऽऽलेख्यदेवैश्च युक्तामग्न्यम्बुना तथा"—इति ।

गृहं राजगृहम् । तस्य प्राग्दिशि धर्म्माधिकरणभूता सभा । सा च वास्तुशास्त्रलक्षणोपेता कर्त्तव्या । तस्याः सभायाः धर्म्माधिकरणत्वं कात्यायनो दर्शयति,—

"धर्म्मशास्त्रविचारेण मूलसारविवेचनम् ।
यत्राधिक्रियते स्थाने धर्म्माधिकरणं हि तत्"—इति ।

मूलस्यावेदितार्थस्य सारासारविवेचनं* तत्र निष्कर्षः† । तत्र प्रवेशकालं मनुराह,—

"प्रातरुत्थाय च नृपः कृत्वा नित्यं समाहितः ।
गुरुं ज्योतिर्विदो वैद्यान् देवान् विप्रान् पुरोहितान् ॥
यथार्हमेतान् सम्पूज्य सुपुष्पाभरणैर्नृपः ।
अभिवन्द्य च गुर्वादीन् सम्मुखान् प्रविशेत्सभाम्"—इति ।

---

* इत्थमेव पाठः सर्व्वत्र । मम तु, सारविवेचनं,—इति पाठः प्रतिभाति ।

† तत्तन्निष्कर्षः,—इति पु॰ । मम तु, तत्त्वनिष्कर्षः,—इति पाठः प्रतिभाति ।

प्रविश्य तत्र विद्वद्भिर्मन्त्रिभिश्च सह कार्य्याण्यनुसन्दध्यात्। तदाह मनुः,—

"व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम्॥
तत्रासीनः स्थितो वाऽपि पाणिमुद्यम्य दक्षिणम्।
विनीतवेषाभरणः पश्येत् कार्य्याणि कार्य्यिणाम्॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः।
अष्टादशसु मार्गेषु* व्यवहारान् पृथक् पृथक्"—इति।

विचारकालमाह कात्यायनः,—

"दिवसस्याष्टमम्भागं मुक्त्वा कालत्रयञ्च† यत्।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः"—इति।

दिवसमष्टधा कृत्वा प्रथमम्भागमग्निहोत्राद्यर्थं मुक्त्वा अनन्तरभागत्रयं व्यवहारकालः। अत्र वर्ज्यास्तिथीराह संवर्त्तः,—

"चतुर्दशी ह्यमावास्या पौर्णमासी तथाऽष्टमी।
तिथिष्वासु न पश्येत्तु‡ व्यवहारांस्तु नित्यशः"—इति।

येयमुक्ता सभा, तस्याः चातुर्विध्यमाह बृहस्पतिः,—

"प्रतिष्ठिताऽप्रतिष्ठिता मुद्रिता शास्त्रिता तथा।
चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः॥

---

* निबन्धानि,—इति का०।

† भागत्रयन्तु,—इत्यन्यत्र पाठः।

‡ तिथिष्वेतासु नो पश्येत्,—इति का०।

प्रतिष्ठिता पुरे ग्रामे चला नामाप्रतिष्ठिता ।

मुद्रिताऽध्यक्षसंयुक्ता राजयुक्ता च शासिता"—इति

राजगृहसमीपवर्त्तिनः सभास्थानान्मुख्यादन्यान्यमुख्यानि स्थानान्याह भृगुः,—

"दश स्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः ।

निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः ॥

आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः* सार्थिकैस्तथा ।

सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः ॥

उभयानुमतश्चैव स्मृतं स्थानमीप्सितम्† ।

कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः ॥

ग्रामपौरगणश्रेण्यश्चातुर्विद्यश्च वर्गिणः ।

कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथा"—इति ।

स्वकैरारण्यकैः । ग्रामेऽपीत्यादि शब्दात् ये‡ ग्रामे अरण्यादौ च निवसन्ति, तेऽप्युभयवासिभिः ग्रामवासिभिररण्यवासिभिश्च निर्णयं कुर्य्युः, उभयव्यवहाराभिज्ञत्वात्तेषाम् । कुलिकाः कुलश्रेष्ठिनः । सार्थः ग्रामयात्रादौ मिलितो जनसङ्घः । मुख्याः ग्रामण्यादयः । पुरं मुख्यं नगरं, तस्मादर्वाचीनो ग्रामः । §पुरग्रामनिवासिनां भेदः । कुलिकादीनि पञ्च स्थानानि । तानि चारण्यकादिजनविशेषाणामेव । ग्रामाकारेणावस्थितजनविवादे समीपग्रामनिवासिभिः निर्णयः ।

---

* 'सार्थ' स्थाने 'सार्द्ध'—इति पाठः ग्रा॰ पुस्तके सर्व्वत्र ।

† स्थानमीप्सितम्,—इति ग्रा॰ ।

‡ ये तु,—इत्येतावन्मात्रं ग्रा॰ पुस्तके ।

§ अत्र, 'इति'—इति भवितुं युक्तम् ।

अर्थिप्रत्यर्थिनोरननुज्ञयानुमतं स्थानं कुलिकसार्थमुख्यपुरग्रामनिवासिनो गच्छन्ते। ग्रामादीनि दश स्थानानि साधारणानि। ग्रामो-ग्रामाकारेणावस्थितो जनः। पौरः पुरवासिनां समूहः। गणः कुलानां समूहः। श्रेणी रजकाद्यष्टादशहीनजातयः। चातुर्विद्यः आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः[1]। वर्गिणो गणस्त्रयः। तथाच कात्यायनः,—

"गणः पाषण्डपूगश्च* ब्राह्मणश्रेणयस्तथा ।

समूहस्थाश्च ये चान्ये वर्ग्याख्यास्ते बृहस्पतिः"—इति ।

आयुधधराणां समूहो जातम्†। कुलानि अर्थिप्रत्यर्थिनोः सगोत्राणि। कुलिकास्तत्र वृद्धाः। नियुक्ताः प्राड्विवाकसहितास्त्रयः सभ्याः। नृपतिः ब्राह्मणादिसहितः। सभ्यानाह याज्ञवल्क्यः,—

"श्रुताध्ययनसम्पन्नाः धर्मज्ञाः सत्यवादिनः ।

राज्ञा सभासदः कार्य्याः रिपौ मित्रे च ये समाः"—इति।

तेषां सङ्ख्यामाह बृहस्पतिः,—

"लोकधर्म्माङ्गतत्त्वज्ञाः[2] सप्त पञ्च त्रयोऽपि वा।

---

* पौगण्डपूगश्च,—इति स० शा० ।

† इत्यमेव पाठः सर्व्वत्र ।

---

(१) "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती"—इत्यान्वीक्षिक्यादिविद्याचतुष्टयं ज्ञेयम् ।

(२) लोकोलोकाचारः देशाचार इति यावत्। धर्म्मोधर्म्मशास्त्रमिति फलितार्थः। अङ्गानि, "शिक्षा कल्पोव्याकरणं निरुक्तं ज्योतिषां चितिः। छन्दसां विचितिश्चैव षडङ्गोवेद इष्यते"—इत्युक्तलक्षणानि वेदाङ्गानि ।

यत्रोपविष्टाः विप्राग्र्याः सा यज्ञसदृशी सभा"—इति।

तत्र वर्ज्यान् सएवाह,—

"देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्ज्जिताः।

उन्मत्तकुहका लुब्धाः* न प्रष्टव्याः विनिर्णये"—इति।

राज्ञः प्रतिनिधिमाह याज्ञवल्क्यः,—

"अपश्यता कार्य्यवशात् व्यवहारान् नृपेण तु।

सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्व्वधर्म्मवित्"—इति।

सोऽपि राजवत् सर्व्वकार्य्याणि विचारयेत्। यदाह मनुः,—

"यदा स्वयं न कुर्य्यात्तु नृपतिः कार्य्यदर्शनम्।

तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्य्यदर्शने॥

सोऽस्य कार्य्याणि सम्पश्येत् सभ्यैरेव त्रिभिर्वृतः।

सभामेव प्रविश्याग्र्यामासीनः स्थितएववा"—इति।

स च विचारको ब्राह्मणः प्राड्विवाक इति उच्यते। तदाह बृहस्पतिः,—

"राजा कार्य्याणि सम्पश्येत् प्राड्विवाकोऽपि वा द्विजः।

न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः॥

बलेन चतुरङ्गेन यतो रञ्जयते प्रजाः।

दीप्यमानः स्ववपुषा तेन राजाऽभिधीयते॥

विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैवच।

प्रियपूर्वं प्राग्वदति प्राड्विवाकोऽभिधीयते"—इति।

नारदोऽपि,—

---

* उन्मत्तकुद्धलुब्धाश्च,—इति का०।

"अष्टादशपदाभिज्ञः षड्भेदाष्टसहस्रवित् ।
आन्वीक्षिक्यादिकुशलः श्रुतिस्मृतिपरायणः ॥
विवादसंश्रितं धर्मं पृच्छति प्रकृतं मतम् ।
विवेचयति यस्तस्मात् प्राड्विवाकस्तु स स्मृतः ॥
यथा शल्यं भिषक् कायादुद्धरेद्यन्त्रयुक्तितः ।
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः"—इति ।

प्राड्विवाकस्य गुणाः स्मृत्यन्तरे दर्शिताः—

"अक्रूरो मधुरः स्निग्धः क्रमायातो विचक्षणः ।
उत्साहवानलुब्धश्च वादे योज्यो नृपेण तु"—इति ।

प्राड्विवाकस्य अनुकल्पमाह कात्यायनः,—

"ब्राह्मणो यत्र न स्यात्तु क्षत्त्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥
*यत्र विप्रो न विद्वान् स्यात् क्षत्त्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्ज्जयेत्"—इति ।

तद्वर्जने बाधकमाह मनुः,—

"जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः[१] ।

---

* नास्त्ययं श्लोकः स० शा० पुस्तकयोः ।

---

(१) ब्राह्मणमात्मानं ब्रवीति न स्वयं ब्रह्मणवृत्तो यः, सोऽयं ब्राह्मणब्रुवः । स च,—

"धर्म्मकर्म्मविहीनस्तु ब्राह्मैर्लिङ्गैर्विवर्ज्जितः ।
ब्रवीति ब्राह्मणोऽस्मीति तमाहुर्ब्राह्मणब्रुवम्"—इत्युक्तलक्षणः ।

धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन ॥
यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम्।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥
द्विजान् विहाय सम्पश्येत् कार्य्याणि वृषलैः सह।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशञ्च नश्यति"—इति।

गणक-लेखकावपि कार्य्यावित्याह वृहस्पतिः,—

"शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची।
नानालिपिज्ञौ कर्त्तव्यौ राज्ञः गणकलेखकौ"—इति।

व्यासोऽपि,—

"त्रिस्कन्धज्योतिषाभिज्ञं[1] स्फुटं प्रत्ययकारणम्।
श्रुताध्ययनसम्पन्नं गणकं योजयेन्नृपः ॥
स्फुटलेखं नियुञ्जीत शाब्दं* लाक्षणिकं शुचिम्।

---

* स्फुटलेख्यं नियुञ्जीत शाब्दं,—इति पा०।

---

(१) ज्योतिःशास्त्रं हि गणितस्कन्ध-जातकस्कन्ध-सिद्धान्तस्कन्धरूपस्कन्धत्रयोपेतमिति गणिततत्त्वचिन्तामणिप्रभृतिषूक्तम्। गणितस्कन्धे व्यक्ताव्यक्तभेदाद् द्विविधं गणितं निर्णीतम्। जातकस्कन्धे तु जातस्य शुभाशुभचिन्ता। सिद्धान्तस्तु, "त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमाच्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः। भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः॥"—इति सिद्धान्तशिरोमण्युक्तलक्षणः। द्विधा गणितमिति प्रतिलोमानुलोमभेदादिति गणिततत्त्वचिन्तामणौ व्याख्यातम्।

स्पष्टाचरं जितक्रोधमलुब्धं सत्यवादिनम्"—इति।

साध्यपालोऽपि कर्त्तव्य इति तेनैवोक्तम्,—

"साध्यपालस्तु कर्त्तव्योराज्ञा साध्यस्य साधकः।

क्रमायातो दृढः शूद्रः सभ्यानाञ्च मते स्थितः"—इति।

बृहस्पतिरपि,—

"आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम्।

सभ्याधीनः सत्यवादी कर्त्तव्यश्च स पूरुषः"—इति।

राज्ञा कतिपयैर्वणिग्भिरधिष्ठितं सदः कर्त्तव्यम्। तदाह कात्यायनः,—

"कुलशीलवयोवृद्धैर्वित्तवद्भिरमत्सरैः।

वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम्"—इति।

कुलभूतैर्वृन्दभूतैरित्यर्थः। तेषामुपयोगमाह सएव,—

"श्रोतारो वणिजस्तत्र कर्त्तव्या न्यायदर्शने"—इति।

यथोक्तराजादियुक्तायाः सभायाः दशाङ्गानि सप्रयोजनान्याह बृहस्पतिः,—

"नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ।

सहेमाग्न्यम्बुपुरुषाः* साधनाङ्गानि वै दश॥

एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः।

न्यायान् पश्येत् कृतमतिः सा सभाऽध्वरसम्मिता॥

दशानामपि चैतेषां कर्म प्रोक्तं पृथक् पृथक्।

---

* हेमाग्न्यम्ब्वन्नपुरुषाः,—इति का०।

सभाध्यक्षो नृपः शास्ता सभ्याः कार्य्यपरीक्षकाः ॥
स्मृतिर्विनिर्णयं ब्रूते जयदानधनन्तथा।
शपथार्थे हिरण्याग्नी जलं तृषितलुब्धयोः ॥
गणको गणयेदृष्टं* लिखेन्न्यायञ्च लेखकः।
प्रत्यर्थिसभ्यानयनं साक्षिणाञ्च स पूरुषः ॥
वाग्दण्डश्चैव धिग्दण्डो विप्राधीनौ तु तावुभौ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपि ॥
राज्ञा ये विदिताः सम्यक् कुलश्रेणीगणादयः।
साहसन्यायवर्ज्यानि कुर्युः कार्य्याणि ते नृणाम्"—इति।

यथाविधि विचारे राज्ञः फलमाह कात्यायनः,—

"सप्राड्विवाकः† सामात्यः सब्राह्मणपुरोहितः।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः"—इति।

वैपरीत्ये दोषमाह मनुः,—

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति"—इति।

सभ्यानां फलमाह बृहस्पतिः,—

"अज्ञानतिमिरोपेतान् सन्देहपटलान्वितान्।
निरामयान् यः कुरुते शास्त्राञ्जनशलाकया ॥
इह कीर्त्तिं राजपूजां लभते स्वर्गतिञ्च सः।
लोभद्वेषादिकं त्यक्त्वा यः कुर्य्यात्कार्य्यनिर्णयम् ॥

* गणयेदिष्टं,—इति का०।

† प्राड्विवाकश्च,—इति का०।

4

शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत्”—इति।

विपक्षे दोषमाह कात्यायनः,—

“न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम्।
तत्र धर्मो ह्यधर्मेण हतो हन्ति* न संशयः॥
अपन्यायप्रवृत्तन्तु नोपेक्ष्यं तत् सभासदः†।
उपेक्षमाणाः सनृपाः नरकं यान्त्यधोमुखाः॥
अन्यायेनापि तं यान्तं ये तु यान्ति‡ सभासदः।
तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः॥
न्यायमार्गादपेतन्तु ज्ञात्वा चित्तं महीपतेः।
वक्तव्यं तत्प्रियं तत्र न सभ्यः किल्बिषी भवेत्§”—इति।

कार्य्यानिष्पत्तावपि यथाशास्त्रवादिनो नास्ति प्रत्यवायः,—इति सएवाह,—

“सभ्येनावश्यकर्त्तव्यं धर्म्मार्थसहितं वचः।
शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनघः”—इति।

यदा तु राजा यथाशास्त्रं धर्मं श्रुत्वा दोषकारिणि पक्षपातं न करोति, तदा निष्पापो भवति। तदाह मनुः,—

“राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः।
एनो‖ गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते”—इति।

---

* हतोहीति,—इति का०।
† नोपेक्षन्ते सभासदः,—इति का०।
‡ येऽनुयान्ति,—इति ग्रन्थान्तरीयः पाठः समीचीनः।
§ “तत्प्रियं न वक्तव्यं तद्वचने किल्बिषी भवेत्”—इति पाठान्तरं का०।
‖ यतो,—इति का०। विना,—इति शा०।

अन्यथावादिनः सभ्यस्य दण्डमाह नारदः,—

"रागादज्ञानतो वाऽपि यो लोभादन्यथा वदेत्।
सभ्योऽसभ्यः स विज्ञेयस्तं पापं विनयेद्भृशम्"—इति।

कात्यायनोऽपि,—

"स्नेहादज्ञानतो वाऽपि मोहादज्ञानतोऽपि वा।
तत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यः स्मृतो हि सः"—इति।

याज्ञवल्क्योऽपि,—

"रागाद् द्वेषाद् भयाद्वाऽपि स्मृत्यपेतादिकारिणः।
सभ्याः पृथक् पृथक् दण्ड्याः विवादात् द्विगुणं दमम्"—इति।

बृहस्पतिरपि,—

"अन्यायवादिनः सभ्याः तथैवोत्कोचजीविनः।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्वएव ते"—इति।

कात्यायनः,—

"अनिर्णीते तु यद्यर्थे सम्भाषेत रहोऽर्थिना।
प्राड्विवाकोऽपि दण्ड्यः स्यात् सभ्यश्चैव* विशेषतः"—इति।

राजादीनां सभायामुपवेशनप्रकारमाह बृहस्पतिः,—

"पूर्वामुखस्तूपविशेद्राजा सभ्याः उदङ्मुखाः।
गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः"—इति।

सभोपविष्टाः नृपादयो यस्याङ्गानि, तमङ्गिनं व्यवहारं पुरुषरूपेण परिकल्पयति स एव,—

---

* सभ्याश्चैव,—इति स॰ पु॰।

"एषां मूर्द्धा नृपोऽङ्गानां मुखञ्चाधिकृतः स्मृतः ।
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ ॥
हेमाग्न्यम्बुस्वपुरुषाः पादौ च पुरुषस्य च"—इति ।

या वृद्धराहित्यादिदोषरहिता, सा मुख्या सभा। तदुक्तं महाभारते,—

"न सा सभा यत्र न सन्ति वृद्धाः
न ते वृद्धाः ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम्"—इति ।

इति सभानिरूपणम् ।

---

## अथ व्यवहारदर्शनविधिर्निरूप्यते ।

तत्र प्रजापतिः,—

"राजाऽभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः ।
धर्म्मासनगतः पश्येत् व्यवहाराननुत्वणान्"—इति ।

नारदः,—

"तस्माद्धर्म्मासनं प्राप्य राजा विगतमत्सरः ।
समः स्यात् सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम्"—इति ।

(१)यथा यमः,

"प्रियद्वेष्यौ समौ ज्ञात्वा प्राप्तकाले नियच्छति ।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम्"—इति ।

---

(१) यमोयथा प्राप्तकाले प्रियद्वेष्यावुभावपि नियच्छति, तथा राज्ञा सर्व्वाः प्रजा नियन्तव्याइति सम्बन्धः ।

यश्च व्यवहारप्रतिपादकं धर्मशास्त्रं यच्च तदन्तर्गतं द्रव्यदण्डादि-रूपमर्थशास्त्रं, तदुभयमपि व्यवहारदर्शिना राज्ञा अनुसरणीयम् । तदाह मनुः,—

"धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन पार्थिवः ।
समीक्षमाणो निपुणो व्यवहारगतिं नयेत्"—इति ।

धर्मशास्त्राणि पितामहेन दर्शितानि,—

"वेदाः साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा ।
एतानि धर्मशास्त्राणि पुराणं न्यायदर्शनम्*"—इति ।

ननु न धर्मशास्त्रान्तर्गतमर्थशास्त्रं, किन्त्वन्यदेव नीत्यात्मकम् । यत्तु† भविष्यपुराणे दर्शितम्,—

"षाड्गुण्यस्य प्रयोगस्य प्रयोगः कार्य्यगौरवात् ।
सामादीनामुपायानां योगो व्याससमासतः ।
अध्यक्षाणाञ्च निक्षेपः कण्टकानां निरूपणम् ॥
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज"—इति ।

बाढ़म् । अस्मिन्नप्यर्थशास्त्रे धर्म्मशास्त्राविरुद्धो योऽंशः स उपादेयः, इतरस्तु परित्याज्यः । तदाह नारदः,—

"यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्"—इति ।

धर्मशास्त्रार्थशास्त्रयोर्विरोधे(१) न्यायेन निर्णतव्यम् । तदाह

* पुराणन्यायदर्शनाम्,—इति का० ।
† इत्थमेव पाठः सर्व्वत्र । मम तु, तत्तु,—इति पाठः प्रतिभाति ।

(१) धर्म्मशास्त्रयोरर्थशास्त्रयोश्च विरोधे इत्यर्थः ।

याज्ञवल्क्यः,—

"स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः"—इति ।

व्यवहारतो वृद्धव्यवहारप्रसिद्धो* न्यायोबलवान् । न्यायानाश्रयणे बाधमाह वृहस्पतिः,—

"केवलं शास्त्रमाश्रित्य न कर्त्तव्यो हि निर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥
चोरोऽचोरोऽसाधुः साधुर्जायते† व्यवहारतः ।
युक्तिं विना विचारेण माण्डव्यश्चोरताङ्गतः ॥
असत्याः सत्यसदृशाः सत्याश्चासत्यसन्निभाः ।
दृश्यन्ते भ्रान्तिजनकाः तस्माद्युक्त्या विचारयेत्"—इति ।

न्यायस्य निर्णायकत्वमुपपादयति मनुः,—

"यथा नयत्यसृक्पातैः मृगस्य मृगयुः पदम् ।
नयेत्तथाऽनुमानेन धर्मस्य नृपतिः पदम् ॥
वाक्यैर्विभाव्य‡ लिङ्गैर्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषोश्चेष्टितेन वा"—इति ।

याज्ञवल्क्योऽपि,—

"असाक्षिके हते चिह्नै युक्तिभिश्चागमेन च ।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृताद्भयात्"—इति ।

यत्तु पूर्वमुक्तं, भूतच्छलानुसारित्वात् द्विगतिरिति ; तत्र छलं हेयम् । तदाह याज्ञवल्क्यः,—

* वृद्धव्यवहारात् प्रसिद्धः,—इति मु० स० ।
† चौरोऽचौरः साध्वसाधुर्जायते,—इति का० ।
‡ वाह्यैः,—इत्यन्यत्र समीचीनः पाठः ।

"छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः"—इति ॥

निर्णये प्रमाणं साक्ष्यादिकम् । तदाह गौतमः । "विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था"—इति । मनुरपि,—

"प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबन्धानि पृथक् पृथक्"—इति ।

देशाचारैः शास्त्रोक्तदिव्यादिभिश्चाष्टादशपदसम्बन्धीनि कार्य्याणि निर्णयेत् । तत्र देशाचारोऽनुकल्पः । तदाह कात्यायनः,—

"तस्मात् शास्त्रानुसारेण राजा कार्य्याणि साधयेत् ।
वाक्याभावे तु सर्वेषां देशदृष्टेन तन्नयेत्*"—इति ।

देशदृष्टस्य लक्षणमाह स एव,—

"यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।
श्रुतिस्मृत्यविरोधेन देशदृष्टः स उच्यते"—इति ।

तत्तद्देशीयानां मिथोविवादे देशदृष्टेन निर्णयः । तदाह स एव,—

"देशपत्तनगोष्ठेषु पुरग्रामेषु वादिनाम् ।
तेषां स्वसमयैर्धर्मशास्त्रतोऽन्येषु तैः सह" ॥

यत्र तत्तद्देशीयानां इतरैः सह विवादः, तत्र शास्त्रतो निर्णयो न तु देशदृष्टतः । लेख्यादिप्रमाणाभावे राजा स्वेच्छया निर्णयेत् । तदाह स एव,—

"लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः"—इति ।

---

* देशदृष्टं सतं नयेत्,—इति का० ।

वणिगादिसमयेषु समयिभिरेव निर्णेतव्यम्। तदाह व्यासः,—

"वणिक्शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु ।
अशक्यो निर्णयोह्यन्यैस्तज्ज्ञैरेव तु* कारयेत् ॥
गुरुः स्वामी कुटुम्बश्च पिता ज्येष्ठः पितामहः ।
विवादानथ पश्येयुः स्वाधीने विषये नृणाम्"—इति ।

निर्णयकारिणां उत्तमाधमभावमाह नारदः,—

"कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः ।
प्रतिष्ठा व्यवहाराणां सर्वेषामुत्तरोत्तरम्"—इति ।

पितामहोऽपि,—

"ग्रामे दृष्टः पुरं यायात् पुरे दृष्टस्तु राजनि ।
राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भवः"—इति ।

राज्ञो नियममाह पितामहः,—

"न रागेण न लोभेन न कोपेन नयेन्नृपः ।
परैरप्रार्थितानर्थान् न चापि स्वमनीषया"—इति ।

अस्यापवादमाह सएव,—

"छलानि चापराधांश्च पदानि नृपतिस्तथा ।
स्वयमेव निगृह्णीयात् नृपस्त्वावेदकैर्विना"—इति ।

तत्र छलान्याह सएव,—

"पथिभङ्गी कराक्षेपी† प्राकारोपरिलङ्घकः ।

---

* तज्ज्ञैरेव तु,—इति का० ।

† पथिभङ्गकराक्षेपः,—इति मु० स० ।

निपानस्य विनाशी च तथा चायतनस्य च॥
परिखापूरकश्चैव राजच्छिद्रप्रकाशकः।
अन्तःपुरं वासगृहं भाण्डागारं महानसम्॥
प्रविशत्यनियुक्तो यो भोजनञ्च निरीक्ष्यते।
विण्मूत्रश्लेष्मवातानां चेप्तुकामो नृपात्मजः॥
पर्य्यङ्कासनबन्धी* चाग्रस्थाननिरोधकः।
राज्ञोऽतिरिक्तवेषश्च विधृतश्च† विशेत्तु यः॥
यश्चापद्वारेण विशेद्वेलायां तथैव च।
शय्यासने पादुके च शयनासनरोहणे॥
राजन्यासन्नशयने यस्तिष्ठति समीपतः।
राज्ञो विद्विष्टसेवी वा ऽप्यदत्तविहितासनः॥
वस्त्राभरणयोश्चैव सुवर्णपरिधायकः।
स्वयं ग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः॥
अनियुक्तप्रभाषी च नृपाक्रोशकएव च।
एकवासास्तथाऽभ्यक्तो मुक्तकेशोऽवगुण्ठितः॥
विचित्रिताङ्गः स्रग्वी च परिधानविधूनकः।
छलान्येतानि पञ्चाशत् भवन्ति नृपसन्निधौ"—इति॥

अपराधानाह नारदः,—

"आज्ञालङ्घनकर्त्तारः स्त्रीवधो वर्णसङ्करः।
परस्त्रीगमनञ्चौर्यं गर्भश्चैव पतिं विना॥

---

* कार्य्यं काम्यानुबन्धं,—इति स० शा०।

† राज्ञोऽतिरिक्तवर्षस्य द्विवर्षस्य,—इति शा० स०।

वाक्पारुष्यमवाच्यन्तद्* दण्डपारुष्यमेवच ।
गर्भस्य पातनञ्चैवेत्यपराधाः दशैवच"—इति ॥

विवादमन्तरेणापि दण्डस्य† हेतुत्वादेतेषामपराधत्वम्। अतएव संवर्त्तः,—

"आसेवं पथिभङ्गञ्च यस्य गर्भः पतिं विना ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
कन्याऽपहारकं पापं वित्तञ्च पतितं तथा ।
परापवादसंयुक्तं स्वयं राजा विचारयेत् ॥
षड्भागकान्तं शुल्कार्थं मार्गच्छेदकमेवच ।
स्वराष्ट्रचौर्य्यभीतिञ्च परदाराभिमर्शनम् ॥
गोब्राह्मणनिहन्तारं मद्यानाञ्चैव घातकम् ।
दशैतानपराधांश्च स्वयं राजा विचारयेत्"—इति ।

तदप्याह पितामहः,—

"उत्क्रान्ती‡ मद्यघाती च अग्निदश्च तथैवच ।
पटहाघोषणाच्छादी[१] द्रव्यमस्वामिकञ्च यत् ॥
राजावलीढद्रव्यं यत् यच्चैवाङ्गविनाशनम् ।
द्वाविंशति§पदान्याहुः नृपज्ञेयानि पण्डिताः"—इति।

---

* मवाच्यया,—इति का॰ ।

† दण्डन,—इति का॰ ।

‡ उत्क्रान्तिः,—इति शा॰ ।

§ द्वाविंशति,—इति का॰ ।

---

(१) पटहेन यदाघुष्यते, तस्याच्छादनकर्त्ता इत्यर्थः ।

यत्र छलादीनि राजा स्वयं द्रष्टुमशक्तः, तत्र स्तोभकात् सूचकाच्च बोद्धव्यम्। तयोः स्वरूपमाह कात्यायनः,—

"शास्त्रेण निन्दितं त्वर्थमुख्योराज्ञा* प्रचोदितः।
आवेदयति यः पूर्वं स्तोभकः स उदाहृतः॥
नृपेणैव नियुक्तः स्यात् परदोषमवेक्षितुम्।
नृपस्य समयं ज्ञात्वा सूचकः स उदाहृतः"—इति।

शास्त्रनिन्दितं छलादिकम्। अर्थमुख्यो धनलाभप्रधानः। राज्ञा शास्त्रादिपर्य्यालोचनपुरःसरमेव कार्य्यं कर्तव्यम्। तदाह हारीतः,—

"शास्त्राणि वर्णधर्मांश्च प्रकृतीनाञ्च भूपतिः।
व्यवहारस्वरूपञ्च ज्ञात्वा कार्य्यं समाचरेत्"—इति।

प्रकृतयः पितामहेन दर्शिताः,—

"रजकश्चर्मकारश्च नटो वरुटो† एवच।
कैवर्त्तकश्च विज्ञेयो म्लेच्छभिल्लौ तथैवच॥
मेधिकस्त्विरव्यालहस्तौ लचट्टिघट्टिकौ‡।
कौषेदिकाः§ भारुपदामानगोष्ठोपगोपमाः॥
एताः प्रकृतयः प्रोक्ता अष्टादश मनीषिभिः।
वर्णानामाश्रमाणाञ्च सर्वदैव वहिः स्थिताः"—इति।

---

* त्वर्थं मुख्यस्यार्थः,—इति का०।

† बुरूड़,—इति का०।

‡ लच्चट्टघट्टिकाः,—इति पाठः।

§ कौसेदिकाः—इति का०।

मनुस्तु जात्यादि समीचणीयमित्याह,—

"जातिजानपदान् धर्मान् श्रेणीधर्मांश्च शाश्वतान् ।

समीक्ष्य कुलधर्मांश्च स्वे वर्णे प्रतिपादयेत्"—इति ।

उन्मार्गवर्त्तिनः कुलादीन् स्वमार्गे स्थापयेदित्याह याज्ञवल्क्यः,—

"कुलानि प्रकृतीश्चैव श्रेणीर्जनपदानपि ।

स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि"—इति ।

कार्य्यदर्शनप्रकारमाह नारदः,—

"धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।

समाहितमतिः पश्येत् व्यवहारमनुक्रमात् ॥

आगमः प्रथमः कार्य्यो* व्यवहारपदन्ततः ।

विचारो निर्णयश्चेति दर्शनं स्याच्चतुर्विधम्"—इति ।

आगमोऽर्थिवचनश्रवणं, तदादौ कर्त्तव्यम् । ततस्तद्वचनं ऋणादानाद्यन्यतमस्मिन् पदे अन्तर्भाव्यम् । ततः प्रतिज्ञोत्तरप्रमाणानां विचारः । ततः प्रमाणतोजयावधारणम् ।

इति व्यवहारदर्शनविधिः ।

---

* कार्य्यं,—इति का० ।

अध्यावाहनिकं नाम स्त्रीधनं तदुदाहृतम्॥
प्रीत्या दत्तञ्च यत्किञ्चिदन्येन श्वशुरेण वा।
आधिवेदनिकञ्चैव प्रीतिदत्तं तदुच्यते"—इति।

बन्धुदत्तं कन्यामातृपितृबन्धुभिर्दत्तम्। शुल्कं, यद् गृहीत्वा कन्या दीयते। अन्वाधेयकं परिणयनादनु पश्चाद्दत्तम्। तदुक्तं कात्यायनेन,—

"गृहोपस्करवाह्यानां दोह्याभरणकर्म्मिणाम्।
मूल्यं लब्धन्तु यत्किञ्चित् शुल्कं तत् परिकीर्त्तितम्॥
विवाहात्परतो यत्तु लब्धं भर्त्तुः कुलात् स्त्रिया।
अन्वाधेयं तु तद्द्रव्यं लब्धं पितृकुलात् तथा"—इति।

पित्रादिभिः स्त्रीभ्यो धनदाने विशेषमाह कात्यायनः,—

"पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै।
यथाशक्त्या द्विसाहस्रं दातव्यं स्थावरादृते"—इति।

यथाशक्ति स्थावरव्यतिरिक्तं धनं द्विसहस्रकार्षापणपर्य्यन्तं दातव्यमित्यर्थः। अयञ्च नियमः प्रत्यब्ददाने[१] वेदितव्यः। अनेकाब्दे तूपजीवनार्थं सकृदेव दाने नायमवधिनियमः। नापि स्थावरपर्य्युदासः। तथाच बृहस्पतिः,—

"दद्याद्धनञ्च पर्य्याप्तं चेत्रांशं वा यदिच्छति"—इति।

अतएव सौदायिके स्थावरेऽपि यथेष्टविनियोगार्हत्वमुक्तन्तेनैव,—

"ऊढ़या कन्यया वाऽपि भर्त्तुः पितृगृहेऽपि वा।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम्॥

---

(१) प्रत्यब्ददानएव स्थावरपर्य्युदासः न तूपजीवनार्थं दाने इति भावः।

सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तदेतदुपजीवनम्* ॥
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि"--इति ।

पतिदत्तस्थावरेऽपि विशेषमाह नारदः,--

"भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि च ।
सा यथाकाममश्नीयात् दद्यात् वा स्थावरादृते"--इति ।

पित्रादिभिरुपाध्यादिना दत्तं स्त्रीधनं न भवतीत्याह कात्यायनः,--

"तत्र सोपाधि यद्दत्तं यच्च योगवशेन वा ।
पित्रा भ्रात्राऽथवा पत्या न तत् स्त्रीधनमिष्यते"--इति ।

उत्सवादौ धारणार्थं दत्तमलङ्कारादिकं सोपाधिदत्तम्। योगवशेन वचनादिनेत्यर्थः। शिल्पादिप्राप्तमपि स्त्रीधनं न भवतीत्याह सएव,--

"प्राप्तं शिल्पैस्तु यद्वित्तं† प्रीत्या चैव यदन्यतः ।
भर्त्तुः स्वाम्यं तदा‡ तत्र शेषं तु स्त्रीधनं स्मृतम्"--इति ।

अन्यतः स्वादित इति यावत्[१]। तदेतत् स्त्रीधनं दुहितृदौहित्रपुत्ररहितायां स्त्रियामतीतायां बान्धवा भर्त्रादयो गृह्णन्ति। अत्रैवं क्रमः। मातरि वृत्तायां प्रथमं दुहिता गृह्णाति। अतएवोक्तं तेनैव,--

* तैर्दत्तं तत् प्रजीवनम्,—इति ग्रन्थान्तरधृतः पाठः।
† यद्दित्तं,—इति ग्रन्थान्तरधृतः पाठः।
‡ भवेत्,—इति ग्रन्थान्तरधृतः पाठः।

(१) स्वं ज्ञातिः।

"मातुर्दुहितरः शेषमृणात्ताभ्यः ऋतेऽन्वयः"--इति।

गौतमोऽपि। "स्त्रीधनं दुहितॄणां अप्रत्तानां अप्रतिष्ठितानां च"--इति। दुहितॄणामभावे दौहित्र्यो गृह्णन्ति। तद्दुहितॄणां प्रसूता चेदिति याज्ञवल्क्यस्मरणात्। भिन्नमातृकाणां दौहित्राणां विषमाणां समवाये मातृतो भागकल्पना। तथाच गौतमः। "पितृमातृस्वसृवर्गे भागविशेषः"—इति। दुहितृदौहित्रीणां समवाये मनुः,—

"यास्तासां स्युर्दुहितरस्तासामपि यथाऽर्हतः।
मातामह्याधनात् किञ्चित् प्रदेयं प्रीतिपूर्वकम्"—इति।

दौहित्रीणामप्यभावे दौहित्राधनहारिणः। तथाच नारदः,—

"मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः"—इति।

दुहितृदुहितॄणामभावे तदन्वयो दौहित्रौ गृह्णातीत्यर्थः। दौहित्राणामभावे,

"विभजेरन् सुताः पित्रोरूर्ध्वं ऋक्थमृणं समम्"—

इत्यादियाज्ञवल्क्यवचनतः मातृऋणापाकरणतोऽवशिष्टं मातृधनं पुत्रा गृह्णन्ति। यत्तु मनुनोक्तम्,—

"जनन्यां संस्थितायान्तु समं सर्वे सहोदराः।
भजेरन् मातृकं ऋक्थं भगिन्यश्च सनाभयः"—इति।

एतत् पुत्राणां दुहितॄणां च सम्भूय मातृऋक्थग्राहित्वपरं न भवति; किन्तु तेषां धनसम्बन्धे प्राप्ते समविभागप्राप्त्यर्थं, समशब्द-श्रवणात्। यदपि शङ्खलिखिताभ्यामुक्तम्। "समं सर्वे सहोदरा-मातृकं ऋक्थमर्हन्ति कुमार्य्यश्च"—इति। तदपि मनुवचनेन समा-

नार्थम्। अथ वा, एतद्वचनद्वयं भर्त्तुः कुललब्धस्त्रीधनविषयम्। अस्मिन्नेव विषये वृहस्पतिः,—

"स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी।
अप्रत्ता चेत्समूढ़ा तु लभते सा न मातृकम्"—इति।

अपत्यानां पुमपत्यानाम्*। यत्तु पारस्करेणोक्तम्,—

"अप्रत्तायास्तु दुहितुः स्त्रीधनं परिकीर्त्तितम्।
पुत्रस्तु नैव लभते प्रत्तायां तु समांशभाक्"—इति।

तदप्रतिष्ठितो षण्डदुहितृविषयम्†। अतएव मनुः,—

"मातुस्तु यौतकं यत् स्यात् कुमारीभाग एव सः"—इति।

यौतुकं पितृकुललब्धम्। अनपत्यहीनजातिस्त्रीधनं उत्तमजातिसपत्नीदुहिता गृह्णाति, तदभावे तदपत्यम्। तदुक्तं मनुना,—

"स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत्"—इति।

ब्राह्मणी जात्यधमजात्युपलक्षणार्थम्‡। पुत्राणामभावे पौत्रा गृह्णन्ति पौत्राणामपि पितामहृणापाकरणम्। पुत्रपौत्राणां देयमिति अधि-

---

* मान्यानाम्,—इति का०।

† इत्यमेव पाठः सर्व्वेष्वादर्शपुस्तकेषु। मम तु, अप्रतिष्ठितादत्तदुहितृविषयम्,—इति पाठः प्रतिभाति।

‡ ब्राह्मणी जात्युत्तमजात्युपलक्षणार्थम्,—इति का०। पाठद्वयमप्यसमीचीनं प्रतिभाति। ब्राह्मणीपदमुत्तमजात्युपलक्षणार्थम्,—इति तु पाठः समोचीनो भवति।

कारश्रवणात् । अस्तु ऋणापाकरणेऽधिकारः । ऋक्थभाक्त्वं कुतइति चेत् । तन्न । "ऋक्थभाजः ऋणं प्रतिकुर्य्युः"—इति गौतमवचनेन ऋक्थभाजामेव ऋणापाकरणाधिकारश्रवणात् । पौत्राणामप्यभावे भर्त्रादयोऽपि ऋक्थभाजः। अत्रैव विवाहभेदेन विशेषमाह मनुः,—

"ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
अप्रजायामतीतायां भर्त्तुरेव तदिष्यते ॥
यत्त्वस्यै स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
अतीतायामप्रजायां मातापित्रोस्तदिष्यते"—इति ।

ब्राह्मदैवार्षगान्धर्वप्राजापत्यविवाहेषु संस्कृताया भार्य्याया यद्धनं तद्दुहित्रादिपौत्रान्ततद्धनहारिसन्ततेरभावे सति भर्तृगामि, न पुनर्मात्रादीनामित्यर्थः। आसुरराक्षसपैशाचविवाहसंस्कृतायाः भार्य्याया-धनं मातापित्रोर्भवतीत्यर्थः । यत्तु कात्यायनेनोक्तम्,—

"बन्धुदत्तन्तु बन्धूनामभावे भर्तृगामि तत्"—इति ।

तदासुरादिविवाहसंस्कृतस्त्रीविषयम् । अतएवोक्तं तेनैव,—

"आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रियाः ।
अभावे तदपत्यानां मातापित्रोः तदिष्यते"—इति ।

भर्त्रादिभिर्दत्तमपि शुल्काख्यं स्त्रीधनं सोदरएव गृह्णाति । तथाच गौतमः । "भगिनीशुल्कं सोदर्य्याणामूर्द्ध्वं मातुः"—इति । सोदर्य्याणामभावे मातुर्भवतीत्यर्थः । यत्पुनस्तेनैवोक्तम् । "स्वञ्च शुल्कं वोढ़ाऽर्हति"—इति । तच्छुल्कग्रहणानन्तरं संस्कारात् प्राक् मृतायां द्रष्टव्यम् । अतएव याज्ञवल्क्यः,—

"मृतायां दत्तमादद्यात् परिशोध्योभयव्ययम्"—इति ।

यत्तु कन्यायै मातामहादिभिर्दत्तं भूषणादि, तदपि सोदरा एव गृह्णीयुः । तथाच बौधायनः,—

"स्वक्थं मृताया गृह्णीयुः कन्यायाः सोदराः समम् ।
तदभावे भवेन्मातुस्तदभावे पितुर्भवेत्"—इति ।

अनपत्यपुत्रिकाधनमपि सोदरो गृह्णाति । तथाच पैठीनसिः,—

"प्रेतायां पुत्रिकायान्तु न भर्त्ता दायमर्हति ।
अपुत्रायां कुमार्य्याञ्च भ्रात्रा तद्ग्राह्यमित्यपि"—इति ।

पुत्रिकायां पितुः पश्चादौरससद्भावे सएव गृह्णीयात्‌ न भर्त्ता । यत्तु मनुवचनम्,—

"अपुत्रायां मृतायां तु पुत्रिकायां कथञ्चन ।
धनं तु पुत्रिकाभर्त्ता हरेत्तैवाविचारयन्"—इति ।

तत्पश्चादुत्पन्नभ्रात्रभावे वेदितव्यम् । यत्तु क्वचिदनपत्यं स्त्रीधनं स्वस्रीयादीनां भवतीत्युक्तं बृहस्पतिना,—

"मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्व्वजपत्नी च मातृतुल्या प्रकीर्त्तिता ॥
यदाऽऽसामौरसो न स्यात् सुतो दौहित्र एवच ।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः"—इति ।

अस्यायमर्थः । ब्राह्मादिविवाहेषु भर्त्तुरभावे, आसुरादिषु मातापित्रोरभावे, मातृष्वस्रादीनां धनं यथाक्रमं मातृष्वस्रीयाद्या गृह्णीयुः । क्वचिज्जीवन्त्याः सप्रजाया अपि पत्न्याधनं भर्त्ता गृह्णीयादित्याह याज्ञवल्क्यः,—

"दुर्भिक्षे धर्म्मकार्य्ये च व्याधौ संप्रतिरोधके ।

गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति”—इति।

संप्रतिरोधके बन्दिग्रहादौ स्वकीयद्रव्याभावे स्त्रीधनं गृहीत्वा पुनस्तस्यै न दद्यात्। प्रकारान्तरेण गृहीतं पुनर्दद्यादेव। तथाच कात्यायनः,—

“न भर्त्ता नैव च सुतो न पिता भ्रातरो न च।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥
यदि चैकतरोऽप्येषां स्त्रीधनं भक्षयेद्बलात्।
सवृद्धिकं प्रदाप्यः स्याद्दण्डञ्चैव समाप्नुयात्॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम्।
मूलमेव स दाप्यः स्याद् यद्यसौ धनवान् भवेत्”—इति।

देवलोऽपि,—

“वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत्।
भोक्त्री तत् स्वयमेवेदं पतिर्नार्हत्यनापदि॥
वृथा मोक्षे च भोगे च स्त्रियै दद्यात् सवृद्धिकम्”—इति।

विभाज्यद्रव्यमाह कात्यायनः,—

“पैतामहञ्च पित्र्यञ्च यच्चान्यत्स्वयमर्जितम्।
दायादानां विभागे तु सर्वमेव विभज्यते”—इति।

पितृद्रव्योपजीवनेन स्वयमर्जितं यत्तद्विभजेत् तदनुपजीवनेनार्ज्जितस्याविभाज्यत्वात्। एतच्चितयमपि ऋणावशिष्टं विभजेत्। तथाच सएव,—

“ऋणं प्रीतिप्रदानञ्च दत्त्वा शेषं विभाजयेत्”—इति।

ऋणप्रदानार्थं धनाभावे पितृऋणमपि विभजेत्। कथं ऋणं

समभिति वचनात्। ऋक्थं ऋणमिति वचनादिनिवृत्यर्थं शोध्य-मित्याह* सएव,—

"ऋणमेवंविधं शोध्यं विभागे बन्धुभिः सदा।
गृहोपस्करवाह्याश्च दोह्याभरणकर्मिणः॥
दृश्यमाना विभज्यन्ते कोशं गूढ़ेऽब्रवीत् भृगुः"—इति।

अत्र कोशग्रहणमितरदिव्यप्रतिषेधार्थम्। तथाच सएव,—

"शंकाविश्वाससन्धाने विभागे ऋक्थिनां सदा।
क्रियासमूहकर्तृत्वे कोशमेवं प्रदापयेत्"—इति।

अविभाज्यद्रव्यमाह याज्ञवल्क्यः,—

"पितृद्रव्याविरोधेन यदन्यत् स्वयमर्जितम्।
मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत्॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः।
दायादेभ्यो न तद्दद्यात् विद्यया लब्धमेवच"—इति।

पितृद्रव्याविरोधेन यत् स्वयं कृष्यादिना उपार्ज्जितं, यच्च विद्यादिना लब्धं, विवाहाच्च यल्लब्धं, तद्भ्रात्रादीनां न भवेत्। यत्पि-त्रादिक्रमायातं चौरादिभिरपहृतमन्यैरनुद्धृतं द्रव्यं पुत्राणां मध्ये यः कश्चिदितराभ्यनुज्ञयोद्धरति, तत्तस्यैव भवति। चेत्रं तु तुरी-यांशमेवोद्धर्त्ता गृह्णाति शेषं तु सर्वेषां सममेव। तथा शङ्खः,—

"पूर्वनष्टान्तु यो भूमिं यः कश्चिदुद्धरेत् क्रमात्।
यथाभागं लभन्तेऽन्ये दत्वांऽशन्तु तुरीयकम्"—इति।

---

* इत्थमेव पाठः सर्व्वत्र। परमयमसमीचीनः पाठः।

तथा विद्ययाऽध्ययनादिना* लब्धमपि स्वस्यैव भवति । पितृद्रव्याविरोधेनेति सर्वत्र शेषः । अतएव मनुः,—

"अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
दायादेभ्यो न तद्दद्यात् विद्यया लब्धमेव च"—इति ।

श्रमेण कृष्यादिना । पितृग्रहणमविभक्तोपलक्षणार्थम् । व्यासोऽपि,—

"विद्याप्राप्तं शौर्य्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत्तस्य नान्वेष्टव्यं च रिक्थिभिः"—इति ।

अविभाज्यविद्याधनस्य लक्षणमाह कात्यायनः,—

"परभक्तोपयोगेन प्राप्ता विद्याऽन्यतस्तु या ।
तया प्राप्तं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥
उपन्यस्तेषु यल्लब्धं विद्यया †पणपूर्वकम् ।
विद्याधनं तु तद्विद्यात् विभागे न नियोज्यते ॥
शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वाऽपि लब्धं प्राधान्यतश्च यत् ॥
परं निरस्य यल्लब्धं विद्यातो द्यूतपूर्वकम् ।
विद्याधनं तु तद्विद्यात् न विभाज्यं बृहस्पतिः ॥
सन्निविष्टे हि धर्म्मोऽयं तस्माद्यच्चाधिकम्भवेत्‡ ।
विद्याबलकृतञ्चैव यान्यत्तच्छिष्यतस्तथा§ ॥

* विद्यया अध्यापनादिना,—इति का० ।

† रणा,—इति का० ।

‡ शिल्पेष्वपि हि धर्म्मोऽयं मूल्याद्यच्चाधिकं भवेत्,—इति ग्रन्थान्तरीयः पाठः ।

§ यानतः शिष्यतस्तथा,—इति का० ।

एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा"—इति ।

अतो विद्याधनादन्यथाभूतमविभक्तपित्रादिद्रव्योपयोगप्राप्तं तद-विभक्तानां सामान्यं साधारणमिति यावत् । क्वचिद्विद्याप्राप्तमपि धनं विभाज्यमित्याह नारदः,—

"कुटुम्बं बिभृयात् भ्रातुर्यो विद्यामधिगच्छतः ।

भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन्*"—इति ।

कात्यायनेनापि,—

"कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा ।

शौर्य्यप्राप्तं तु यद्वित्तं विभाज्यं तत् बृहस्पतिः"—इति ।

अविभक्तस्य कुले पितृव्यादेः पितृतोऽपि वा प्राप्तविद्यानां यद्धनं† शौर्य्यादिना प्राप्तं विद्ययैव प्राप्तं, तद्विद्याधनं विभाज्यमिति । पितृद्रव्यार्जितेनार्जिते धने भागद्वयमेकस्याह वसिष्ठः । "येन चैषां यदुपार्जितं स्याद्‌द्व्यंशमेव लभेत"—इति । यत्तु,—

"सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः"—इति ।

तद्विद्येतरकृष्याद्युपार्जितधनविषयम् । अविभाज्यविद्याधने अर्ज-केच्छया अंशमाह गौतमः । "स्वयमर्जितं चैव वैद्येभ्यो वैद्यः कामं दद्यात्"—इति । इच्छाभावे त्वाह नारदः,—

"वैद्यो वैद्याय नाकामो दद्यादंशं स्वतो धनात् ।

पितृद्रव्यं समाश्रित्य न चेत्तद्धनमाहृतम्"—इति ।

---

* भागं विद्याद्धनात्तस्मात्तत्सुतोऽपि लभेत् समम्,—इति ग्रा० ।

† प्राप्तं विद्यार्थिनां यद्धनं,—इति का० ।

अवैद्याय सकामोऽपि न दद्यात्। तदाह कात्यायनः,—

"नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित्।
समविद्याधिकानान्तु देयं वैद्येन तद्धनम्"—इति।

विद्याप्राप्तधनवत् शौर्य्यादिप्राप्तमपि धनमविभाज्यमित्याह स एव,—

"शौर्य्यप्राप्तं विद्यया च स्त्रीधनं चैव यत् स्मृतम्।
एतत्सर्वं विभागे तु विभाज्यं नैव रिक्थिभिः॥
ध्वजाहृतम्भवेद् यत्तु विभाज्यं नैव तत् स्मृतम्"—इति।

ध्वजाहृतस्य लक्षणं तेनैवोक्तम्,—

"संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम्।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते"—इति।

बृहस्पतिरपि,—

"पितामहपितृभ्यां च* दत्तं मात्रा च यद्भवेत्।
तस्य तन्नापहर्त्तव्यं शौर्य्यभार्य्याधनं तथा"—इति।

शौर्य्यप्राप्तधनस्वरूपं च कात्यायनेन दर्शितम्,—

"आरुह्य संशयं यत्र प्रसभं कर्म्म कुर्वते।
तस्मिन् कर्म्मणि तुष्टेन प्रसादः स्वामिना कृतः॥
तत्र लब्धं तु यत्किञ्चित् धनं शौर्य्येण तद्भवेत्"—इति।

पित्रादिद्रव्योपजीवनेन विद्याप्राप्तधनवत् शौर्य्यप्राप्तधनेऽप्यर्जकस्य भागद्वयमाह व्यासः,—

"साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्।

---

* पितामहपितृव्याणां,—इति ग्रा०।

शौर्य्यादिनाऽऽप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः”—इति ।

अन्यदप्यविभाज्यमाह मनुः,—

“वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमप्रचारञ्च न विभाज्यं प्रचक्षते”—इति ।

वस्त्रं धृतं वस्त्रम् । पितृधृतं वस्त्रं पितुरूर्द्ध्वं विभागे श्राद्धभोक्त्रे दातव्यम् । तथाच बृहस्पतिः,—

“वस्त्रालङ्कारशय्यादि पितुर्य्यद्वाहनादिकम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत्”—इति ।

अन्यानि तु वस्त्राणि विभाज्यान्येव । पत्रं वाहनं, पत्रं अश्वशिविकादिवाहनम् । तदपि यद् येनारूढं तत्तस्यैव । अनारूढं तु सर्वैर्विभाज्यम् । अलङ्कारोऽपि यो येन धृतः, स तस्यैव । अधृतः साधारणोविभाज्य एव,

“पत्यौ जीवति यत् स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादाः भजमानाः पतन्ति ते”—इति

तेनैव धृत इति विशेषेणोपादानात् । कृतान्नं तण्डुलमोदनादि । तदपि यथासम्भवं भोक्तव्यम् न विभाज्यम् । उदकं तदाधारः कूपादिः । सोऽपि विषमः पर्य्यायेणोपभोक्तव्यो न मूल्यद्वारेण विभाज्यः । स्त्रियश्च दास्योविषमाः पर्य्यायेण कर्म्म कारयितव्याः । तथाच बृहस्पतिः,—

“एकां स्त्रीं कारयेत् कर्म्म यथांऽशेन गृहे गृहे ।
बह्व्यः समांशतो देया दासानामप्ययं विधिः”—इति ।

पित्राऽवरुद्धास्तु समा अपि न विभाज्याः। तथाच गौतमः। "स्त्रीषु संयुतास्त्वविभागः"—इति। योग इति श्रौतस्मार्त्ताग्निसाध्यमिष्टं कर्म्म लक्ष्यते। क्षेमः इति लब्धपरिरक्षणहेतुभूतं वहिर्वेदिदान-तड़ागारामनिर्म्माणादि पूर्त्तं कर्म्म लक्ष्यते। तदुभयं पितृद्रव्यविरोधार्जितमप्यविभाज्यम्। तदुक्तं लौगाक्षिणा,—

"क्षेमं पूर्त्तं यागमिष्टमित्याहुस्तत्त्वदर्शिनः।

अविभाज्ये च ते प्रोक्ते शयनासनमेवच"—इति।

अथवा। योगक्षेमशब्देन छत्रचामरशस्त्रवाहनादिप्रभृतय उच्यन्ते। प्रचारोगृहारामादिषु प्रवेशनिर्गममार्गः। सोऽप्यविभाज्यः। यत्तु उशनसा क्षेत्रस्याप्यविभाज्यत्वमुक्तम्,—

"अविभाज्यं सगोत्राणामासहस्रकुलादपि।

वाप्यं* क्षेत्रञ्च पत्रञ्च कृतान्नमुदकं स्त्रियः"—इति।

तत्प्रतिग्रहलब्धक्षेत्रं क्षत्रियासुतेन सार्द्धं ब्राह्मणीसुतेन अविभाज्यमित्येवं परम्।

"न प्रतिग्रहभूर्देया क्षत्रियादिसुताय च"—

इति स्मरणात्। अन्ये मन्यन्ते। वस्त्रादयोऽपि विभाज्या एव। तथाच वृहस्पतिः,—

"वस्त्रादयोऽविभज्यायैरुक्तं तैर्न विचारितम्।

धनं भवेत्समृद्धानां वस्त्रालङ्कारसंश्रितम्॥

मध्यस्थितमनाजीव्यं दातुं तैः कस्य शक्यते।

युक्त्या विभजनीयं तदन्यथाऽनर्थकं भवेत्॥

---

* याज्यं,—इति ग्रन्थान्तरधृतः पाठः।

विक्रीय वस्त्राभरणमृणमुद्राङ्क लेखितम्।
कृतान्नं वा कृतान्नेन परिवर्त्य विभज्यते॥
उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते।
एकां स्त्रीं कारयेत् कर्म यथाऽंशेन गृहे गृहे॥
बह्व्यः समांशतो देया दासानामप्ययं विधिः।
योगक्षेमवतो लाभः समत्वेन विभज्यते॥
प्रचारश्च यथाऽंशेन कर्त्तव्यो स्वक्थिभिः सह"—इति।

तेन वस्त्रादीनामविभज्यत्वप्रतिपादकं मनुवचनमुशनोवचनं चानादरणीयम्। तदनुपपन्नम्। विरोधे हि वचनानां विषयव्यवस्थाऽऽश्रयणं युक्तं, न चान्यथाकरणम्। बृहस्पतिवचनानान्तु अधृतवस्त्रादिविषयत्वम्, मन्वादिवचनस्य तु धृतवस्त्रादिविषयत्वम् पूर्वमेवोक्तमिति विषयव्यवस्था घटते इति।

विभागकाले केनचिदञ्चितं पश्चादुद्भावितं चेत्, तत्सर्वं समं विभजेयुः। तथाच याज्ञवल्क्यः,—

"अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते।
तत्पुनस्ते समैरंशैः विभजेरन्निति स्थितिः"—इति।

समशब्दो विषमविभागनिरासार्थः। विभजेरन्निति बहुवचनेन येन दृष्टं तेनैव न ग्राह्यमिति दर्शयति। मनुरपि,—

"ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि।
पश्चाद्दृश्येत यत्किञ्चित् तत्सर्वं समतां नयेत्"—इति।

अपहृतद्रव्यवञ्चकास्त्रोक्तानतिक्रमेण विषमभागतया* विभक्तमपि

* विषमभागयता,—इति नास्ति का० पुस्तके।

समतां नयेत्* । तथाच कात्यायनः,—

"अन्योन्यापहृतं द्रव्यं दुर्विभक्तञ्च यद्भवेत् ।

पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः"—इति ।

एवं च सति वञ्चितद्रव्यस्य पश्चाद् दृष्टस्यैव विभागविधानात् पूर्वं विभक्तस्य पुनर्विभागोनास्तीत्यवगम्यते । यत्तु मनुनोक्तम्,—

"विभागे तु कृते किञ्चित् सामान्यं यत्र दृश्यते ।

नासौ विभागो विज्ञेयः कर्त्तव्यः पुनरेव हि"—इति ।

तद्विभक्तद्रव्यार्जनव्ययकरणादर्वाग्वेदितव्यम् । †अन्योन्यापहृतमित्यादिवचनानां निर्विषयतापत्तेः । अत्रान्योन्यवञ्चने दोषोऽप्यस्ति । तथाच श्रुतिः । "यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते"—इति । अयमर्थः । यो भागिनं भागार्हं भागान्नुदते भागादपाकरोति भागं तस्मै न प्रयच्छतीति यावत् । अथ भागान्नुन्नतः एनमपहारकं चयते नाशयति पापिनं करोतीति यावत् । यदि तं न नाशयति, तदा तस्य पुत्रं पौत्रं वा नाशयतीति । यत्तु मनुनोक्तम्,—

"यो ज्येष्ठो विनिकुर्वीत लोभात् भ्रातॄन् यवीयसः ।

सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः"—इति ।

तत्स्वतन्त्रस्यापि ज्येष्ठस्य समुदायद्रव्यापहारे दोषोऽस्ति किमु-

---

* इत्यमेव पाठः सर्व्वत्र । परमयमसमीचीनः पाठः । अत्र कियानपि पाठो भ्रष्टोऽन्यथा जातोवेत्यनुमीयते ।

† अत्र, अन्यथा,—इति भवितुमुचितम् ।

तास्वतन्त्राणां यवीयसामित्येवंप्रतिपादनपरम् । न तु ज्येष्ठस्यैव दोषप्रतिपादनपरम् । अन्यथा स्मृत्या श्रुतेः सङ्कोचापत्तेः । विभक्तानां कर्त्तव्यमाह नारदः,—

"यद्येकजाता बहवः पृथग्धर्म्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत् कार्य्येषु सम्मताः ॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य च"—इति ।

एकस्माज्जाता विभक्ताभ्रातरः परस्परानुमतिमन्तरेण धनसाध्येष्टापूर्त्तादिधर्म्मकारिणो भवेयुः । तथा, धनसाध्यकृष्यादिकर्म्मकारिणो भवेयुः । तथा, विभिन्नोलूखलमुसलादिकर्म्मोपसर्जनद्रव्योपेताः स्युः । तथाच कार्य्येषु भ्रातरो यदि न सम्मताः, तदाताननादृत्य कार्य्यं कुर्य्युः । तथा, विभक्ता भ्रातरः स्वभागान् यदि दद्युर्विक्रीणीयुर्वा, न दद्युर्वा, तत्सर्वं यथेष्टं कुर्युः । यस्मात्ते विभक्ताः स्वधनस्येशाः स्वतन्त्राः स्वामिन इत्यर्थः । यत्तु बृहस्पतिवचनम्,—

"विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये"—इति ।

तदेवं व्याख्येयम् । अविभक्तेषु द्रव्येषु साधारणत्वादेकस्यानीश्वरत्वात् सर्वैरनुज्ञाऽवश्यं कार्य्या । विभक्ते तूत्तरकालं विभक्तसंशयव्युदासनसौकर्य्याय सर्वाभ्यनुज्ञा । न पुनरेकस्यानीश्वरत्वेन । अतो विभक्तानुमतिव्यतिरेकेणापि व्यवहारः सिध्यत्येवेति । यत्तु स्मृत्यन्तरम्,—

"स्वग्रामज्ञातिसामन्तदायादानुमतेन च ।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी"—इति ।

तत्रायमभिप्रायः । तत्र ग्रामानुमतिः,

"प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः" ।

इति स्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते न पुनर्ग्रामानुमतिमन्तरेण व्यवहारो न सिद्ध्यतीति । सामन्तानुमतिरपि सीमाविप्रतिपत्तिनिरासार्थम् । एवं तदनुमतिरपि* विभक्तसंशयव्युदासेन व्यवहारसौकर्यार्थमेव । हिरण्योदकदानमपि विक्रये कर्त्तव्ये सहिरण्योदकं दत्त्वा दानरूपेण स्थावरविक्रयं कुर्य्यादित्येवमर्थम्† ।

"स्थावरे विक्रयो नास्ति कुर्य्यादाधिमनुज्ञया‡"—इति

स्थावरविक्रयस्य निषिद्धत्वात् ।

"भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।

तावुभौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ"—इति

दानप्रतिग्रहयोः प्रशंसनाच्च । विभागापलापे निर्णयकारणमाह याज्ञवल्क्यः,—

"विभागनिह्नवे§ ज्ञातिबन्धुसाक्षिविलेखनैः|| ।

विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः"—इति ।

---

* इत्थमेव सर्व्वत्र पाठः । दायादानुमतिरपि,—इति पाठो मम प्रतिभाति ।

† हिरण्योदकं दत्त्वा दानरूपेण स्थावरविक्रयं कुर्य्यादित्येवमर्थः,—इति का० ।

‡ स्थावरे विक्रयं कुर्य्यान्न दानमननुज्ञया,—इति श्रा० ।

§ निर्णये,—इति श्रा० ।

|| राज्ञविलेखितैः,—इति का० ।

ज्ञातयः पितृबन्धवः बन्धवस्तु मातुलादयः* । लेख्यं विभागपत्रम् । एभिः विभागनिर्णयो ज्ञातव्यः । यौतकैः पृथक्कृतैः† गृहक्षेत्रैश्च‡ । अन्यदपि विभागलिङ्गमाह नारदः,—

"विभागधर्मसन्देहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात् ॥
भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥
साक्षित्वं प्रातिभाव्यञ्च दानग्रहणमेव च ।
विभक्ता भ्रातरः कुर्य्युः नाविभक्ताः परस्परम् ॥
दानग्रहणपशवन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथक् ज्ञेया दानधर्मव्ययागमाः ॥
येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थिषु ।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्" ॥

बृहस्पतिरपि,—

"पृथगायव्ययधनाः कुसीदञ्च परस्परम् ।
वणिक्पथञ्च ये कुर्य्युर्विभक्तास्ते न संशयः"—इति ।

कुसीदवाणिज्यादिभिर्लिङ्गैर्विभागनिर्णयः साक्ष्याद्यभावे वेदितव्यः । तथा च सएव,—

---

* ज्ञातयः पितृबान्धवामातृबान्धवाश्च,—इति ग्रा॰ स॰ ।

† पृथक्पचमहायज्ञैः श्राद्धादिभिश्च गृहक्षेत्रैश्च,—इति ग्रा॰ ।

‡ पाक,—इति ग्रन्थान्तरीयः पाठः समीचीनः ।

"साहस्यं स्थावरस्वाम्यं* प्राग्विभागस्य वक्थिनाम्।
अनुमानेन विज्ञेयं न मनुर्यत्र साक्षिणः†"—इति।

साहस्यादिसाधकलिङ्गान्यपि सएवाह,—

"कुलानुबन्धव्याघातहोढं साहससाधनम्।
स्वस्य भोगः स्थावरस्य विभागस्य पृथग्धनम्"—इति।

कुलानुबन्धः पूर्व्वपुरुषैरनुबन्धः। व्याघातः परस्परबोधबला-दपहृतद्रव्यमुच्यते। दर्शनं स्वाम्यात्मनोभोगः‡। परस्परं पृथग्-धनत्वादेर्विभागलिङ्गत्वमविभक्तेषु निषिद्धत्वेनावगन्तव्यम्। तथा च याज्ञवल्क्यः,—

"भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्"—इति।

साक्षिलेख्यभुक्तिभिर्निर्णयस्यासम्भवकाले,

"युक्तिष्वप्यसमर्थासु शपथेरेनमर्थयेत्"—इति

प्राप्तं दिव्यं निषेधति वृद्धयाज्ञवल्क्यः,—

"विभागधर्मसन्देहे बन्धुसाक्ष्यभिलेखितैः।
विभागभावना कार्या न भवेद्दैविकी क्रिया"—इति।

कथं तत्र निर्णय इत्याकाङ्क्षायामाह मनुः,—

---

* स्थावरं न्यासः,—इति ग्रन्थान्तरीयः पाठः।

† इत्थमेव पाठः सर्व्वत्र। परन्त्वसमीचीनः। न स्यातां यत्रसाक्षिणौ इति ग्रन्थान्तरीयपाठस्तु समीचीनः।

‡ इत्थमेव पाठः सर्व्वत्र। मम तु, व्याघातः परस्पररोधः बलादपहृतं द्रव्यं होढ़मुच्यते स्वस्यात्मनोभोगः,—इति पाठः प्रतिभाति।

"विभागे यत्र सन्देहो दायादानां परस्परम् ।
पुनर्विभागः कर्त्तव्यः पृथक् स्थानस्थितैरपि"—इति ।

यत्र सन्देहो युक्तिभिरपि नोपैति, तत्र पुनर्विभागः कर्त्तव्य इत्यर्थः । यत्तु तेनैवोक्तम्,—

"सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृद्दानं ददातीति त्रीण्येतानि सकृत् सकृत्"—इति ।

तद्युक्तादिभिर्निर्णीतं प्रकृते सत्यां वेदितव्यम् । स्वयं कृतत्वात् असन्दिग्धस्य पुनः प्रवर्त्तको राज्ञा दण्डनीय इत्याह बृहस्पतिः,—

"स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स राज्ञाऽंशे स्वके स्थाप्यः शासनीयोऽनुबन्धतः"—इति ।

अनुबन्धो निर्बन्धनम् ॥

॥०॥ इति दायविभागः ॥०॥

---

## अथ द्यूतसमाह्वयाख्ये विवादपदे निरूप्येते ।

तयोः स्वरूपमाह मनुः,—

"अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः"—इति ।

अप्राणिभिः अक्षवन्धशलाकादिभिः । प्राणिभिः कुक्कुटादिभिः । तथा च नारदः,—

"अक्षवन्धशलाकाद्यैर्देवनं जिह्मकारितम्* ।
पणक्रीड़ा वयोभिश्च पदं द्यूतसमाह्वयम्"—इति ।

---

* जयकारकं,—इति शा० ।

अचा पाशकाः। वन्धश्चर्म्मयष्टिका। शलाका दन्तादिमयो दीर्घ-चतुरस्रः। आद्यशब्देन कपर्दिकादयो गृह्यन्ते। तैः पणपूर्व्वकं यद्देवनं क्रीड़नं क्रियते तद्द्यूतं, वयोभिः पक्षिभिः कुक्कुटादिभिः वकलाव* उन्मत्तमेषादिभिश्च प्राणिभिर्या पणपूर्व्विका क्रीड़ा क्रियते सा समाह्वय इत्यर्थः। बृहस्पतिरपि,—

"परिगृहीतास्त्वन्योन्यं पक्षिमेषवृषादयः।

प्रहरन्तो† कृतपणास्तं वदन्ति समाह्वयम्"—इति।

द्यूतस्थानं सभिकेनाधिष्ठितं कार्य्यमित्याह सएव,—

"सभिकाधिष्ठिता कार्य्या तस्करज्ञानहेतवे"—इति।

अत्र पक्षान्तरमाह नारदः,—

"अथवा कितवो राज्ञे दत्वा भागं यथोदितम्।

प्रकाशदेवनं कुर्य्युरत्र‡ दोषो न विद्यते"—इति।

द्यूतसभाऽधिकारिणो वृत्तिमाह याज्ञवल्क्यः,—

"ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्।

गृह्णीयात् धूतकितवादितराद्दशकं शतम्"—इति।

परस्परप्रीत्या कितवपरिकल्पितपणो ग्लहः। तत्र तदाश्रया एकशतपरिमिता तदधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिक-वृद्धिः, तस्मात् कितवात् पञ्चकं शतं सभिकः आत्मवृत्त्यर्थं गृह्णी-

---

* वकालावान्,—इति का०। मम तु, वकलाव,—इति पाठः प्रति भाति।

† प्रहरन्ति,—इति ग्रा०।

‡ रेवं,—इति का०।

यात् । पञ्चपणाश्रयो* यस्मिन् शते तत् शतं पञ्चकम् । जित-ग्रहस्य[1] विंशतितमं भागं गृह्णीयादिति यावत् । कितवनिवासार्थं शाला सभा, तत्राधिष्ठितः सभिकः । सभापतिस्तु कल्पिताचादि-निखिलक्रीड़ोपकरणः तदुपचितद्रव्योपजीवी । इतरस्मादपूर्णशतवृद्धेः कितवाद्दशकं जितस्यास्य दशमं भागं गृह्णीयादित्यर्थः । एवं स्थापितस्य सभिकस्य कृत्यमाह स एव,—

"स सम्यक् पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
जितमुद्ग्राहयेत् जेत्रे दद्यात् सत्यं वचः क्षमी"—इति ।

यः कृप्तवृत्तिर्द्यूताधिकारी राज्ञा धूर्त्तकितवेभ्यो रक्षितः स राज्ञे यथाप्रतिपन्नमंशं दद्यात् । जितं द्रव्यं पराजितसकाशादा-सेधादिना उद्धृत्य जेत्रे दद्यात् । तथा क्षमी भूत्वा द्यूतकारिणां विश्वासार्थं सत्यं वचो दद्यात् । बृहस्पतिरपि,—

"सभिको ग्राहकस्तत्र दद्याज्जेत्रे नृपाय च"—इति ।

पराजितकितवानां बन्धनादिना पणग्राहकोभवेत् । पणग्रहणादर्वागेव स्वकीयं पणं जेत्रे यथाभागं दद्यादित्यर्थः । तथा च कात्यायनः,—

"जेतुर्दद्यात्स्वकं द्रव्यं जितं ग्राह्यं चिपत्त्वकम् ।
सद्यो वा सभिकेनैव कितवात्तु न संशयः"—इति ।

यदा सभिको जेत्रे जितं द्रव्यं दापयितुं न शक्तः, तदा राजा दापयेदित्याह याज्ञवल्क्यः,—

---

* इत्यमेव सर्व्वत्र पाठः ।

---

(१) रश्रुतेर्लश्रुतिरित्यनुशासनात् ग्रहपदेनात्र ग्लह उक्त इति मन्तव्यम् ।

"प्राप्ते नृपतितो भागे प्रसिद्धे द्यूतमण्डले ।
जितं ससभिके स्थाने दापयेदन्यथा न तु"—इति ।

अन्यथा प्रच्छन्ने सभिकरहिते अतीतराजभागे[१] द्यूते जितं पणं चेत् न दापयेदित्यर्थः । अत्र जयपराजयविप्रतिपत्तौ निर्णयकारणमाह सएव,—

"द्रष्टारो व्यवहाराणां साक्षिणश्च तएव हि ।
द्यूताख्यव्यवहाराणां द्रष्टारस्तु तएव हि"—इति ।

कितव एव राज्ञा नियोक्तव्यः, न तु श्रुताध्ययनसम्पन्न इत्युक्तलक्षणः । साक्षिणश्च तएव द्यूतकारा एव । विष्णुरपि,—

"कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति* ।
यएव तत्र द्रष्टारस्तएवैवान्तु साक्षिणः"—इति ।

साक्षिणां परस्परविरोधे राजा विचारयेदित्याह वृहस्पतिः,—

"उभयोरपि सन्दिग्धौ कितवाः स्युः परीक्षकाः ।
यदा विद्वेषिणस्ते तु तदा राजा विचारयेत्"—इति ।

कूटद्यूतकारिणो दण्डमाह याज्ञवल्क्यः,—

"राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपाधिदेविनः"—इति ।

कूटैरक्षादिभिरुपाधिभिर्मणिमन्त्रादीनामिति वचनेनां ये दिव्यन्ति तान् श्वपदेनाङ्कयित्वा स्वराष्ट्रान्निर्वासयेदित्यर्थः । निर्वासने विशेषमाह नारदः,—

* कितवा एव तिष्ठेरन् कितवानां श्रमं प्रति,— इति श्रा० ।

† इत्थमेव पाठः सर्व्वत्र ।

(१) अतीतो राजभागो यस्मात्, तस्मिन्नित्यर्थः ।

"कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् ।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः"—इति ।

दण्डने विशेषमाह विष्णुः । "द्यूते कूटाक्षदेविनो करच्छेदः, उपाधिदेविनां सन्दंशच्छेदः* "—इति ।

अनियुक्तद्यूतकारिणो दण्डमाह नारदः,—
"अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः ।
स मतं प्राप्नुयात्कामं विनयञ्चैव सोऽर्हति"—इति ।

द्यूते विहितं कर्मजातं समाह्वये अतिदिशति याज्ञवल्क्यः,—
"एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये"—इति ।

सभिकवृत्तिकल्पनादिलक्षणो धर्मः समाह्वयेऽपि विज्ञेय इत्यर्थः । प्राणिद्यूते प्राणिनां जयपराजयौ तत्स्वामिनोरित्याह बृहस्पतिः,—
"द्वन्द्वयुद्धेन यः कश्चिद्वधादमवाप्नुयात् ।
तत्स्वामिना पणोदेयो यस्तत्र परिकल्पितः"—इति ।

पणपरिकल्पनमपि कृताकृतमित्याह नारदः,—
"परिज्ञातकृतं वत्र यथाप्यविदितं नृपो ।
तथापि नाप्नुयात् काम्यमथवाऽनुमतं तयोः"—इति ।

काम्यः कामः पणः । यत्तु मनुनोक्तम्,—
"द्यूतं समाह्वयञ्चैव यः कुर्यात्कारयेत वा ।
तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

---

* द्यूते कूटाक्षदेवीनां करच्छेदः प्रशस्यते ।
उपाधिदेविनां दण्डः करच्छेद इति स्मृतः,—इति ग्रा० ।

† कर्त्तव्यं विदितं तथा,—इति ग्रा० ।

प्रकाशमेतत् तास्कर्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥
द्यूतं समाह्वयञ्चैव राजा राष्ट्रे निवारयेत् ।
राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम्* ॥
कितवान् कुशीलवान् क्रूरान् पाषण्डानपि मानवान् ।
विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात्"—इत्यादि,

तत्सर्वं कूटाक्षदेवनविषयतया राजाभ्यनुज्ञसभिकरहितविषयतया वा योज्यम् । अतएव बृहस्पतिः,—

"द्यूतं निषिद्धं मनुना सत्यशौचधनापहम्† ।
अभ्यनुज्ञातमन्यैस्तु राजभागसमन्वितम् ॥
सभिकाधिष्ठितं कार्यं तस्करज्ञानहेतुना"—इति ।

इति द्यूतसमाह्वयाख्ये विवादपदे निरूपिते ।

## प्रसक्तोद्देशक्रमानुरोधेन ऋणादानादिसमाह्वयान्तान्यष्टादशव्यवहारपदानि निरूपितानि ।

---

## अथ बृहस्पतिना निरूपितं प्रकीर्णकाख्यं विवादपदमभिधीयते ।

तत्र तत्स्वभेदौ नारदेन निरूपितौ,—

"प्रकीर्णकेषु विज्ञेया व्यवहारा नृपाश्रयाः ॥
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ।

---

* पृथिवीपतौ,—इति ग्रा॰ ।

† धनापहं,—इति का॰ ।

पुनः प्रमाणसम्भेदः प्रकृतीनां तथैवच ॥

पाषण्डनैगमश्रेणीगणधर्मविपर्य्ययाः ।

पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ॥

प्रतिग्रहविलोपश्च लोप आश्रमिणामपि ।

वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ॥

न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात् प्रकीर्णकम्" इति ।

प्रकीर्णके विवादे ये विवादा राजाज्ञोल्लङ्घन-तदाज्ञाकरण-तत्कर्मरचणादिविषयास्ते नृपसमवायिनएव । तत्र सत्याचारव्यपेते मार्गे वर्त्तमानानां प्रतिकूलतामाज्ञाय व्यवहारनिर्णयं नृपएव कुर्य्यात्* । एवं वदता यो नृपाश्रयो व्यवहारस्तत्प्रकीर्णमित्युक्तं भवति । तत्र राजाज्ञाप्रतिघाते† विशेषदण्डमाह याज्ञवल्क्यः,—

"न्यूनं वाऽभ्यधिकं वाऽपि लिखेद्यो राजशासनम् ।

पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः" इति ।

राजदत्तभूमेर्निबन्धनस्य वा परिमाणन्यूनत्वमाधिक्यं वा प्रकाशयद्राजशासनं यो विलिखति, यश्च पारदारिकचौरौ वा गृहीत्वा राज्ञेऽनिवेद्य मुञ्चति, तावुभावुत्तमसाहसं दण्डनीयौ । व्यासोऽपि,—

"न्यायस्थाने गृहीत्वाऽर्थं अधर्मेण विनिर्णयम् ।

करोत्युत्तरकार्य्याणि राजद्रव्यविनाशकः ॥

उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत्" इति ।

तत्कर्मकरणे दण्डमाह याज्ञवल्क्यः,—

* विषयास्तान्नृपसमो नृपो वा कुर्य्यात्,—इति शा० ।

† प्रमापणे,—इति शा० ।

"राजयानासनारोहे दण्डो मध्यमसाहसः" इति।

कात्यायनोऽपि,—

"राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः।

अप्रियश्चास्य यो वक्ता बलं तेषां प्रकल्पयेत्" इति।

राज्ञः कोशापहरणादौ दण्डमाह मनुः,—

"राज्ञः कोशापहर्त्तॄंश्च प्रतिकूलेषु च स्थितान्।

घातयेद्विविधैर्दण्डैर्हरेत्सर्वस्वमेव च" इति।

सर्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं तत्तस्य नापहर्त्तव्यमित्याह नारदः,—

"आयुधान्यायुधीयानां बीजानि कृषिजीविनाम्।

वेश्यास्त्रीणामलङ्कारान् वाद्यावाद्यानि तद्विदाम्॥

यच्च यस्योपकरणं येन जीवन्ति कारुकाः।

सर्वस्वहरणेऽप्येतन्न राजा हर्त्तुमर्हति" इति।

ब्राह्मणस्य बधस्थाने मौण्ड्यमाह मनुः,—

"ब्राह्मणस्य बधे मौण्ड्यं पुरान्निर्वासनाङ्कने।

ललाटे चाभिशस्ताङ्कं प्रयाणं गर्दभेन तु" इति।

कोपात्परस्परभेदनादौ दण्डमाह याज्ञवल्क्यः,—

"छिनेत्त्रभेदिनो राज* द्विष्टादेशकृतस्तथा।

विप्रचिह्नेन शूद्रस्य जीवतोऽष्टशतो दमः" इति।

यत्तु स्मृत्यन्तरेऽभिहितम्,—

"द्विजातिलिङ्गिनः शूद्रान् चित्रदण्डेन घातयेत्" इति।

---

* राजा,—इति पा०।

तद्वृत्त्यर्थं ब्राह्मणलिङ्गधारणे वेदितव्यम्। ब्राह्मणपीडाकारिणो-दण्डमाह मनुः,—

"ब्राह्मणान् बाध्यमानन्तु कामादवरवर्णजम् ।

हन्याच्चित्रैर्वधोपायैरुद्वेजकरैर्नृपः" इति ।

शूद्राणां प्रव्रज्यादौ दण्डमाह कात्यायनः,—

"प्रव्रज्यावासिनं शूद्रं जपहोमपरं तथा ।

वधेन शमयेत् पापं दण्ड्यो वा द्विगुणं दमम्" इति ।

एवं शास्त्रोक्तमार्ग[१]माह यमः,—

"एवं धर्मप्रवृत्तस्य राज्ञोदण्डधरस्य च।

यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽव्ययः" इति।

मनुरपि,—

"एवं सर्वानिमान्राजा व्यवहारान् समापयन् ।

व्यपोह्य किल्बिषं सर्वं प्राप्नोति परमाङ्गतिम्" इति ।

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां व्यवहारमाधवः समाप्तः ॥

समाप्तं चेदं व्यवहारकाण्डम् ॥

समाप्ता चेयं पराशरस्मृतिव्याख्या ॥

शुभमस्तु । श्रीरस्तु ॥

---

(१) शास्त्रोक्तोमार्गो यस्य राज्ञस्तं प्रतीत्यर्थः ।

# पराशरमाधवस्य शुद्धिपत्रम्।

## (आचारकाण्डस्य)



| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| २ | १ | प्रज्ञा ... ... | प्रज्ञा |
| ३ | १३ | पूर्व्वैं ... ... | पूर्व्वैं |
| ४ | २ | सूचितं ... ... | सूचितं |
| ५ | २५ | स्मृतिष ... ... | स्मृतिषु |
| ६ | १० | प्रत्येक ... ... | प्रत्येव |
| ६ | ११ | व्युत्पतसु ... ... | व्युत्पित्सु |
| ६ | २४ | दस्य ... ... | यस्य |
| ७ | ३ | धाय्या संज्ञकौ ... | धाय्यासंज्ञकौ |
| ८ | १६ | वत्वे ... ... | वत्त्वे |
| १२ | १७ | न्याय कुसुमा ... | न्यायकुसुमा |
| १३ | ३ | क्रमि ... ... | क्रमि |
| १४ | १५ | निर्णयाख्या ... | निर्णयाख्य |
| १६ | १७ | त्येष्ठे ... ... | ज्येष्ठे |
| १६ | १८ | अनिर्व्विष्टे कनीयान् निर्व्विशम् | अनिर्विष्टे कनीयान् निर्विशन् |
| १६ | २१ | महावह ... ... | मलावह |
| १६ | २३ | मद्दिव ... ... | मद्दिष |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | | शुद्धम्। |
|---|---|---|---|---|
| २० | २१ | मुक्य | ... ... | मुख्य |
| २१ | ६ | नेक | ... .. | नैक |
| २१ | १० | क्षम | ... ... | क्षष्व |
| २१ | ११ | आत्वा | ... ... | ज्ञात्वा |
| २१ | १३ | मथ | ... ... | यथ |
| २४ | १३ | मुत् | ... ... | मुत् |
| २४ | १८ | मणीभिवः | ... | मणीभिवः |
| २६ | ५ | प्रतं | ... ... | व्रतं |
| २८ | ८ | यत् | ... ... | यत् |
| २८ | १२ | म्मन्य | ... ... | म्मन्य |
| २९ | ४ | समुचया | ... ... | समुच्चेया |
| ३१ | २६ | व्रष्टव्यः | ... ... | द्रष्टव्यः |
| ३३ | २ | आत | ... ... | आर |
| ३४ | २४ | हेतो, | ... ... | हेतोः |
| ३६ | ११ | च्युरे | ... ... | च्युरि |
| ३७ | २४ | चित्तम्य | ... ... | चित्तस्य |
| ३८ | ६ | मार | ... ... | मार |
| ३८ | २४ | पारस्पर्य्यं | ... ... | पारम्पर्य्यं |
| ३९ | ६ | सर्व्वंनी | ... ... | सर्व्वंनी |
| ३९ | १७ | मक्षिता | ... ... | मक्षिता |
| ३९ | १९ | (१, सू) | ... ... | (२ पा० ३ सू०) |
| ३९ | २२ | ममं | ... ... | मसं |
| ४० | १४ | मून्य | ... ... | सून्य |
| ४५ | १६ | देवानाच | ... ... | देवानाञ्च |
| ४५ | १९ | म- | ... ... | स- |



| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ४६ | ६,१० | (अ०, १ पा०, २ सू०) | (६ अ०, ८ पा०, २२ सू०) |
| ४८ | २२ | प्र. १, का. १, … | प्र०, १ का०, १ |
| ५८ | १३ | धम्म … … | धर्म्मं |
| ६२ | ८ | सव … … | सर्वं |
| ६६ | ५ | याज … … | याज्ञ |
| ९० | १० | मूलत्वेन … … | मूलत्वेन |
| ९२ | १ | 'अश्रुतः' … | 'अश्रुते' |
| ९४ | ७ | प्यस्त्वेव … … | प्यस्त्येव |
| ९६ | ११ | दहस्य … … | देहस्य |
| १०२ | ८ | चतुर्भुखाय … | चतुर्मुखाय |
| ११४ | ६ | निष्कलम् … | निष्फलम् |
| ११६ | १४ | योऽम … … | योऽय |
| ११७ | ३ | ये नैताः… … | येनैताः |
| ११९ | १४,१५ | जाति-स्त्री, संस्थितः | स्त्रीजाति, संस्थिते |
| १२५ | ९ | बद्भक्ता … … | षड्भक्ता |
| १३५ | ५ | विध तिनां … | विधायिनां |
| १४१ | ९ | पाठमात्रेण … | पाठमात्रे न |
| १४३ | ७ | मन्वादिके … | मन्वादिकं |
| १४५ | १ | ते च … … | ते च |
| १५४ | ६ | राजसनेयि … | वाजसनेयि |
| १९० | १५ | अविद्धान् … | अविद्वान् |
| २०३ | १६ | वशिष्ठ… … | वशिष्ठ |
| २०५ | २४ | पञ्चमा… … | पञ्चमा |
| २८५ | ६ | अष्टौत्तर … | अष्टोत्तर |
| २८६ | ८ | वायुभूतस्व … | वायुभूतः स्व |

| पृष्ठ। | पङ्क्तौ। | अशुद्धम्। | | शुद्धम्। |
|---|---|---|---|---|
| २८८ | ४ | तीर्थैं .. | ... | तीर्थैं |
| २९० | १९ | श्रन् ... | ... | श्रिप् |
| २९२ | १० | कृतादारो | ... | कृतदारो |
| ३०० | १ | गुणोपेतो | ... | गुणोपेता |
| ३०८ | १९ | तेनेवौकम् | ... | तेनैवोक्तम् |
| ३०९ | ७ | वृद्धार्थं... | ... | वृद्ध्यर्थं |
| ३१२ | १५ | भेद ... | ... | भेद |
| ३२७ | १५ | त्रिरम्नाह्वाय | ... | त्रिरन्वाह्वाय |
| ३३३ | १८ | ब्राह्मणे... | ... | ब्रह्मणे (एवं ३३४ पृष्ठे) |
| ३७२ | ८ | उशनाः... | ... | उशना (एवमन्यत्र) |
| ३७३ | २५ | श्रूद्रे ... | ... | शूद्रे |
| ३८२ | १५ | रात्रो ... | ... | रात्रौ |
| ३८९ | २० | त्विति ... | ... | त्वितिं |
| ३९० | २ | इवरामे... | ... | इवारामे |
| ३९० | ४ | दुष्ठ ... | ... | दुष्ट |
| ३९० | ७ | मांसाञ्जनोच्छिष्ट ... | | मांसाञ्जनोच्छिष्ट |
| ३९० | २१ | स्वधर्म्माचकितान ... | | स्वधर्म्माचकितान् |
| ४१८ | १४ | शृश्रुषा ... | ... | शुश्रूषा |
| ४१८ | १७ | शुश्रुषेव ... | ... | शुश्रूषेव |
| ४१९ | १२ | परम् ... | ... | परम |
| ४२१ | ७ | वैश्यं .. | ... | वैश्यं |
| ४३१ | ६ | अन्येन ... | ... | अन्नेन |
| ४३२ | १३ | आयो ... | ... | अयो |
| ४३७ | ३ | चातुर्मास्या | ... | चातुर्मास्य |
| ४६४ | २ | पतिघ्नी "* | ... | पतिघ्नी " |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | | शुद्धम्। |
|---|---|---|---|---|
| ४६४ | ३ | इत्यर्थः ... | ... | इत्यर्थः * |
| ४६९ | १६ | निवृत्तेरभात् | ... | निवृत्तेरभावात् |
| ४७१ | २ | शर्हितम् | ... | गर्हितम् |
| ४९३ | १ | समां ... | ... | मासां |
| ४९४ | १६ | शूद्राणा | ... | शूद्रा |
| ५०० | ७ | न स्नातां | ... | नास्नातां |
| ५०० | १५ | जनितेः.. | ... | जनितोः (एवं परत्र) |
| ५०६ | ११ | सदाऽभ्यर्स्थ्यं | ... | सदाऽभ्यर्च्या |
| ५१४ | ५ | क्षत्रियाच | ... | क्षत्रियायाच |
| ५२३ | ५ | ध्यानं... | ... | श्वानं |
| ५२८ | ४ | तर्तये ... | ... | तर्पये |
| ५३० | १० | कुट्टनवहनन | ... | कुट्टनमवहनन |
| ५३३ | ९ | लोम्य ... | ... | लोम्यं |
| ५४० | ६ | कोशा... | ... | केशा |
| ५४३ | २० | कुठीचरः | ... | कुटीचरः |
| ५४५ | ३ | श्मागारं | ... | सभागारं |
| ५४८ | ४ | तत्व ... | ... | तत्त्व |
| ५५१ | २ | सखास ... | ... | सखामा |
| ५५१ | २० | दण्डन ... | ... | दण्डेन |
| ५५४ | १४ | विदिदिषु | ... | विविदिषु |
| ५५५ | १३ | नान्यदा | ... | नान्यथा |
| ५५८ | २१ | चनौद्धत्य | ... | चनौद्धत्य |
| ५६० | १२ | शरीर ... | ... | शरीरे |
| ५६४ | २२ | भिक्षाटनसमुद्योगात् प्राक् केनापि | | भिक्षाटनमनुद्योगात् प्राक् केनाप्य |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ५७२ | १७ | प्रकृतः ... ... | प्रकृतः |
| ५७३ | १३ | रचन्त ... ... | चरन्त |
| ५८६ | १८ | यथष्टो ... ... | यथेष्टा |
| ५८७ | १४ | उत्पादका ... | उत्पादको |
| ६२१ | ११ | ग्रहः ... ... | ग्रहे |
| ६२४ | १८ | दशरात्रसन्निपाते यदाद्यं | दशरात्राः सन्निपतेयुराद्यं |
| ६२४ | १९ | न पूर्व्वांशौच ... | पूर्व्वांशौच |
| ६४० | २ | सिरस ... ... | शिरस |
| ६४१ | १२ | आज्ञाति ... | अज्ञाति |
| ६४३ | १७ | दर्शो ... ... | दर्शं ( एवं परत्र ) |
| ६४४ | १५ | करिष्यति ... | गमिष्यति |
| ६४४ | २१ | द्वार ... ... | द्वारि |
| ६४६ | ४ | तिथियुग्मेषु ... | तिथ्ययुग्मेषु |
| ६५२ | २१ | देवखातञ्च ... | देवखातञ्च |
| ६५३ | १५ | ब्रह्माण्डपुराणोऽपि | ब्रह्माण्डपुराणेऽपि |
| ६६० | ६ | धनमार्यन्त्ते ... | धनमार्यन्ने |
| ६७१ | १० | चन्द्रिका ... | चन्द्रिका |
| ६७६ | ३ | विषयत्वागमात् ... | विषयत्वावगमात् |
| ६७९ | ९ | श्रोतिया | श्रो त्रया |
| ६९२ | ३ | निर्विष्ट ... ... | निविष्ट ( एवं परत्र ) |
| ६९९ | ६ | समृद्धाऽपि ... | समृद्धोऽपि |
| ६९९ | १३ | द्वा ... ... | द्वौ |
| ७०३ | १४ | पृष्गा ... ... | पृष्ठा |
| ७१२ | १६ | या ... ... | यः |
| ७१७ | १६ | मासं ... ... | मांसं |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम् |
|---|---|---|---|
| ७२२ | १ | वैजा ... ... | वैज (एवं परत्र) |
| ७४२ | ५ | द्विधाभवत् ... | विधारयेत् |
| ७४४ | ६ | उपनीयं ... | उपनीय |
| ७४४ | १४ | सर्व्वपात्रेषु ... | सर्व्वं पात्रेषु |
| ७४४ | २१ | स्वस्वत्तादि ... | स्वस्वत्वं वि |
| ७४५ | २ | स्वसत्तां ... ... | स्वस्वत्वं |
| ७४५ | २१ | पाणिनि ... | वार्त्तिक |
| ७४६ | १७ | रक्षोघ्नः ... ... | रक्षोघ्नः |
| ७५० | ७ | उच्छिष्ट ... ... | उच्छिष्टं |
| ७५० | २२ | षण्मासाम्भ ... | षण्मासान् भ |
| ७५६ | १६ | उच्छिष्टा ... | उत्सृष्टा |
| ७७३ | १ | पराह्न ... ... | पराह्णे |
| ७७३ | १८ | वाऽप्याग्निमान् ... | वाऽप्यग्निमान् |
| ७७४ | २० | द्वादशाह ... | एकादशाह |
| ७८० | ६ | गोलाक्षि ... | लौगाक्षि (एवं परत्र) |
| ७८२ | ६ | कर्कन्धु ... ... | कर्कन्धू |
| ७९० | १५ | मातामहानामिति | मातामहानिति |
| ७९० | २१ | पूरणीयम् ... | संबन्धनीयम् |
| ७९० | २२ | मातामहये ... | मातामहयो |

बवयोः पर्यावर्तनं कार्यम्।

# पराशरमाधवस्याकारादिक्रमेण विषयसूची ।

( आचारकाण्डस्य )

## अ ।

---

## आ।

## ई ।



## उ ।



## ऊ ।



## ऋ ।

## ग ।

## घ।



## च।



## ज।



2

---

## त।



---

# द।

---

## प।

## य।

---

## श।

---

## ष।



---

# स।

---

## ह ।



---

# पराशरमाधवोल्लिखितप्रवक्तृनामकारादि-क्रमेण प्रज्ञापनपत्रम् ।

## (आचारकाण्डस्य)

---

### अ ।

अथर्वा ९१ । ९ ॥

---

### छ ।

छन्दोग वा सामग ७१ । २ ॥ ९१ । ४ ॥ ११७ । ५ ॥ १६३ । ४ ॥ ५०२ । ११ ॥ ५२५ । २, २० ॥

---

### ज ।

जाबाल ५२५ । १५ ॥ ५५५ । १ ॥

---

### त ।

तैत्तिरीय ९१ । २ ॥

---

### य ।

यजुर्वेदी ५२५ । २ ॥

---

### व ।

वाजसनेय ९१ । १० ॥

---

# पराशरमाधवोल्लिखितस्मर्त्तृणामकारादि-क्रमेण प्रज्ञापनपत्रम्।

(आचारकाण्डस्य)



## अ।

अङ्गिराः १७८। १२॥ १८५। २॥ २०८। १२, १७॥ २०९। ९॥
२१८। ६॥ २३३। ८॥ २५७। १२॥ २९१। १२॥ २९७। ७॥
३३८। ११॥ ४५३। ४॥ ५३४। ७॥ ५८४। ६॥ ५९३। १५॥
६०४। २०॥ ६१२। १८॥ ६१७। १२। ६२२। ९॥ ६३१। १६॥
६६८। १७॥ ७१६। १२॥ ७२२। १०॥ ७६८। १४॥

अत्रि २३२। ११॥ २३८। १६॥ २६८। ९॥ २७६। ४॥ २७९। ८॥
२४१। ११॥ ३७४। २॥ ३७५। ४॥ ३७९। १२॥ ३८५। १४॥
५४७। १३॥ ५५२। ६॥ ५५८। १७॥ ५६६। ४॥ ५६९। २॥
६२०। ८॥ ६७३। ६॥ ६८३। १६॥ ७००। ९॥ ७०३। ५॥
७२१। १८॥ ७४४। १९॥ ७४६। ३॥ ७५१। १६॥ ७७२। २॥

## आ।

आपस्तम्ब १२७। १०॥ १४७। ९॥ २११। ७॥ २१२। १२॥ २१९।
११॥ २२८। ८॥ २२९। ८॥ २८४। ८॥ २८८। ४, १०॥ २९७।
३, ८॥ २९९। १॥ ३०१। ११, १५, १७॥ ३०६। ७, १०॥ ३१४।
१५॥ ३३९। १४॥ ३४०। ११॥ ३४२। १॥ ३७०। ३॥ ४३१।
६॥ ४३८। १६॥ ४४६। १३॥ ४४७। ४॥ ४५७। ५॥ ४६५।
३॥ ४७७। ६॥ ५२७। २२॥ ५८१। २१॥ ५८८। ६॥ ५९१।

१२ ॥ ६०७ । १७ ॥ ६४७ । ७ ॥ ६६२ । १४ ॥ ६७२ । १ ॥ ६८० । ६ ॥ ६८३ । ९ ॥ ६८४ । १ ॥ ७१२ । १४ ॥ ७१६ । ८ ॥ ७२१ । ६ ॥ ७५९ । १५ ॥ ७८७ । ४ ॥

आश्वलायन २८९ । १ ॥ ३२२ । ६ ॥ ३३९ । १० ॥ ७३५ । ४ ॥ ७५२ । २१ ॥ ७५३ । ९, १५ ॥ ७५५ । १२ ॥ ७६९ । ११ ॥

---

## उ ।

उशना २३४ । १ ॥ ३१० । १५ ॥ ३७२ । ८ ॥ ३८८ । १८ ॥ ४०१ । ८ ॥ ४०५ । १२ ॥ ४११ । १२ ॥ ५६४ । १५ ॥ ६२२ । १९ ॥ ६७५ । १४ ॥ ६९२ । १७ ॥ ७०८ । ९ ॥ ७८१ । १२ ॥

---

## ऋ ।

ऋष्यशृङ्ग ४४८ । १९ ॥ ६४३ । ४ ॥ ६७३ । ३ ॥ ६७४ । १६ ॥ ७७६ । ९ ॥ ७९१ । ५, १२, १९ ॥

---

## क ।

कण्व ५५९ । १९ ॥

कपिल ५४२ । १६ ॥

काश्यप ६३५ । १० ॥

कात्यायन १५७ । ४ ॥ २०८ । ७ ॥ २३३ । १७ ॥ २३६ । ९ ॥ २३८ । ९ ॥ २४१ । १, ४ ॥ २७३ । ६ ॥ २८७ । १३, १७ ॥ २८८ । १ ॥ २८९ । १९ ॥ ३२३ । ७ ॥ ३२५ । १० ॥ ३३९ । ७, १७ ॥ ३४१ । ८ ॥ ३४३ । २० ॥ ३४६ । १९ ॥ ३७६ । ७ ॥ ३८३ । ५ ॥ ३९८ । १९ ॥ ४४९ । २ ॥ ४५० । ५ ॥ ४५२ । २ ॥ ४८१ । १ ॥ ४९० । १६ ॥ ४९१ । ६ ॥ ४९२ । २० ॥ ४९३ । ८, १२ ॥ ५१० । ४, १५ ॥ ५११ । ५ ॥

---

## ग ।

---

## छ ।



---

## ज ।



---

# द ।

दत्त १४३ । १३ ॥ २१३ । ११ ॥ २१७ । ३ ॥ २१८ । ६, १२ ॥ २१९ । ६ ॥ २२२ । १०, १७ ॥ २३० । १४ ॥ २३९ । १२ ॥ २४० । ४ ॥ २५१ । २ ॥ २६७ । १६ ॥ २६९ । १६ ॥ २७५ । १३ ॥ २७८ । १२ ॥ २८६ । १७ ॥ २९४ । १७ ॥ ३०६ । १५ ॥ ३०८ । २, ७ ॥ ३११ । २ ॥ ३३७ । २ ॥ ३८४ । १४ ॥ ३८५ । १० ॥ ३८९ । १ ॥ ५३३ । ८ ॥ ५५१ । १९ ॥ ५५३ । ९ ॥ ५५५ । ११ ॥ ५५८ । १ ॥ ५७० । ८ ॥ ५७१ । १७ ॥ ५७६ । २ ॥ ५७८ । १ ॥ ५७९ । १० ॥ ५८५ । ५ ॥ ५८६ । १९ ॥ ५९९ । ६, २० ॥

दत्तात्रेय ५५२ । २ ॥

देवल १५३ । १५ ॥ १६४ । २ ॥ १६६ । १९ ॥ १८१ । १४ ॥ २०२ । ८ ॥ २१० । ५, १५ ॥ २१३ । ८ ॥ २१४ । १७ ॥ २१५ । १ ॥ २१७ । १२ ॥ २२६ । ७ ॥ २२९ । ५ ॥ २४५ । ३ ॥ ३१९ । १, ४ ॥ ३७७ । १९ ॥ ३७८ । ८ ॥ ४१९ । १३ ॥ ४३९ । २ ॥ ४४८ । १६, २० ॥ ४४९ । ८ ॥ ४५० । १०, १५ ॥ ४५१ । ३ ॥ ४७३ । ४ ॥ ४८९ । ८, १३ ॥ ४९८ । ३ ॥ ५०४ । ५, १० ॥ ५११ । २० ॥ ५१३ । ७, १४ ॥ ५१४ । ३, १६ ॥ ५७६ । ५ ॥ ५७७ । ११ ॥ ५८८ । ३ ॥ ५९८ । २, १७ ॥ ५९९ । २२ ॥ ६१४ । ३ ॥ ६२३ । १७ ॥ ६२५ । १ ॥ ६३१ । ७ ॥ ६३३ । २, ९, १२ ॥ ६३९ । १४ ॥ ६४६ । १५ ॥ ६५३ । २ ॥ ६५७ । १० ॥ ६६४ । ८ ॥ ९७३ । १३ ॥ ६८६ । ९ ॥ ६८९ । १८ ॥ ६९३ । ३, ७, १३, २० ॥ ६९४ । ४ ॥ ६९६ । १७ ॥ ७०२ । ११ ॥ ७१० । १९ ॥ ७१२ । १८ ॥ ७१३ । ५ ॥ ७१४ । ५ ॥ ७१८ । ४, १६ ॥ ७२० । १३ ॥ ७५८ । २ ॥ ७५९ । २० ॥ ७६३ । ६ ॥ ७९२ । ४, १३ ॥ ७९३ । ८ ॥

---

## धु ।



---

## न ।



---

## प ।

४६४ । १६ ॥ ४६६ । १८ ॥ ५८० । १७ ॥ ५८२ । ५ ॥ ५६० । ७ ॥
५६६ । ३ ॥ ६१७ । ६ ॥ ६२८ । १३ ॥ ६४० । १८ ॥ ६४३ । १० ॥
६४८ । ११ ॥ ६८१ । १७ ॥ ६६८ । ८ ॥ ७१० । १७ ॥ ७३६ । १५ ॥
७६१ । ४ ॥ ७६२ । ३ ॥ ७६७ । १३ ॥ ७७५ । ७ ॥ ७८० । १२ ॥

प्रचेताः २२१ । १६ ॥ २५६ । २ ॥ २६३ । ८ ॥ ३४४ । १२ ॥ ३५१ । १५ ॥
३६६ । ४ ॥ ६१० । १० ॥ ६१५ । २२ ॥ ६४० । २२ ॥ ६५० । १८ ॥
६७० । १३ ॥ ६६७ । १४ ॥ ७०० । १४ ॥ ७०२ । ८, १८ ॥ ७२० ।
१६ ॥ ७३२ । १२ ॥ ७३५ । ६ ॥ ७४४ । १५ ॥ ७४५ । ११ ॥ ७४८ ।
११ ॥ ७४६ । १७ ॥ ७५० । ८, १८ ॥ ७६० । १५ ॥ ७६७ । ४ ॥
७८३ । ७, १२ ॥ ७८६ । १७ ॥ ७६३ । १६ ॥

प्रजापति १४७ । १५ । १५१ । १३ ॥ १५६ । १२ ॥ २४४ । १६ ॥ २७३ ।
१० ॥ २८५ । ५ ॥ ५४४ । ३ ॥ ६११ । २१ ॥ ६७१ । १५ ॥

---

## ब ।

बृहत्प्रचेताः ५६७ । ३ ॥

बृहन्मनु २७० । २ ॥ ५६६ । २२ ॥ ६१२ । १२, २१ ॥ ६६५ । ८ ॥

बृहस्पति ७५ । ५ ॥ ७६ । १० ॥ ७७ । ३ ॥ १११ । १ ॥ ११३ । ११ ॥
११५ । ६ ॥ १४३ । ५ ॥ १७२ । ७ ॥ १७६ । १६ ॥ २२४ । ३ ॥
२७० । १० ॥ २६३ । १० ॥ ३११ । १० ॥ ३१५ । १० ॥ ३७२ । ५ ॥
३७६ । १३, १८ ॥ ३६८ । १३ ॥ ३६६ । ६ ॥ ४२७ । ५ ॥ ४७४ । ५ ॥
४६६ । १ ॥ ५०१ । ७ ॥ ५७० । ११ ॥ ५७६ । १७ ॥ ५७६ । १७ ॥
५८१ । ६ ॥ ५८८ । १५ ॥ ५६५ । ११ ॥ ५६६ । १६ ॥ ६०६ । २१ ॥
६१४ । ६ ॥ ६१६ । ३ ॥ ६२० । ४ ॥ ६५४ । २ ॥ ६७८ । २० ॥
६६८ । ५ ॥ ७१४ । ११ ॥ ७३० । १४ ॥ ७५५ । ८ ॥ ७५६ । १२ ॥
७६३ । १६ ॥ ७८५ । १० ॥ ७८६ । ११ ॥

---

## भ ।

भृगु २२८ । १० ॥ २४४ । १३ ॥ २४५ । १३ ॥ ३८३ । १० ॥ ४५० । १२, १७ ॥ ७९४ । १२ ॥

## म ।

मदालसा १५४ । ४ ॥ ७५१ । १ ॥

मनु १२ । ३ ॥ ५२ । ३ ॥ ८० । ७ ॥ १०६ । १० ॥ ११९ । १६ ॥ १३४ । ४ ॥ १३५ । १५ ॥ १३६ । १९ ॥ १३७ । ८ ॥ १४० । २, ५ ॥ १४४ । ८ ॥ १४८ । १० ॥ १४९ । ४ ॥ १५७ । १५ ॥ १५८ । ४ ॥ १६५ । ५ ॥ १७४ । ६ ॥ १७६ । १० ॥ १७७ । ८ ॥ १७९ । १६ ॥ १८२ । १५ ॥ १८३ । ३, १५ ॥ १८५ । ८, १७ ॥ १९० । ८, १३ ॥ २०३ । २, १६ ॥ २०६ । ६ ॥ २१० । ८, १८ ॥ २११ । ८, ११ ॥ २१४ । ६ ॥ २१५ । ११ ॥ २१७ । ६ ॥ २२१ । १३ ॥ २२३ । ७, १८ ॥ २२६ । १२ ॥ २२८ । २ ॥ २५७ । ६ ॥ २६५ । १५ ॥ २७० । १३ ॥ २८० । ५ ॥ २८१ । १७ ॥ २८६ । ६ ॥ २८८ । ११ ॥ २९५ । १३ ॥ २९६ । ११, १४ ॥ २९७ । ११, १९ ॥ २९८ । १३ ॥ २९९ । २ ॥ ३०० । १०, १६ ॥ ३०१ । १, ६ ॥ ३०२ । १४ ॥ ३०३ । ३, २० ॥ ३०४ । १८ ॥ ३०५ । २, ५, २० ॥ ३०६ । २, ४ ॥ ३०७ । ४, १४ ॥ ३०८ । १०, १४, १६ ॥ ३०९ । ३, १७ ॥ ३१० । ८ ॥ ३१२ । २ ॥ ३१४ । ५ ॥ ३३६ । १५ ॥ ३४६ । ४ ॥ ३४७ । ६ ॥ ७४९ । १९ ॥ ३५० । ६ ॥ ३५१ । ६, ९ ॥ ३५३ । २, १७ ॥ ३५४ । ९, २० ॥ ३५६ । १, १३ ॥ ३५८ । २ ॥ ३६४ । १ ॥ ३७० । १९ ॥ ३७७ । ६ ॥ ३८१ । १५ ॥ ३९१ । १, १०, १७ ॥ ३९६ । १ ॥ ३९७ । ३, १४ ॥ ३९८ । ७ ॥ ३९९ । २ ॥ ४०० । १७ ॥ ४०१ । १० ॥ ४०४ । १० ॥ ४०५ । १६ ॥ ४०६ । १२ ॥ ४०७ । ५ ॥ ४०८ । ७ ॥ ४०९ । १२, १७ ॥ ४१० । ११ ॥ ४१२ । २० ॥ ४१३ ।

१० ॥ ४१४ । १४ ॥ ४१६ । ११ ॥ ४१७ । ५ ॥ ४१८ । ३, १५ ॥
४२० । ९, २० ॥ ४२१ । ४ ॥ ४२२ । ८, १६ ॥ ४२६ । ११ ॥
४२९ । ६ ॥ ४३१ । ३, १०, १७, १९ ॥ ४३६ । ९ ॥ ४३७ । १९ ॥
४४० । १९ ॥ ४४१ । ११ ॥ ४४२ । ९ ॥ ४४६ । २, १७ ॥ ४४७ ।
६, १४, १७ ॥ ४४८ । ३, ७, ११ ॥ ४५१ । ७, १०, १५ ॥ ४५३ ।
८, १२ ॥ ४५४ । ९, २१ ॥ ४५५ । १४ ॥ ४५६ । ११ ॥ ४५७ । ६,
१५, २१ ॥ ४५८ । ६ ॥ ४५९ । ११ ॥ ४६० । १४ ॥ ४६२ । १०,
१८ ॥ ४६७ । ५ ॥ ४६८ । १७ ॥ ४७० । ५ ॥ ३७४ । २, १२ ॥
४७५ । ५ ॥ ४७७ । ६ ॥ ४७८ । ६, १६ ॥ ४८२ । ४ ॥ ४८४ । २ ॥
४८५ । १५ ॥ ४८७ । १ ॥ ४८८ । १२ ॥ ४९० । ६ ॥ ४९१ । १० ॥
४९२ । ३, १० ॥ ४९३ । ५, १९ ॥ ४९४ । ७ ॥ ४९५ । ३ ॥ ४९६ ।
१२ ॥ ४९७ । ३ ॥ ४९८ । १४ ॥ ४९९ । ६ ॥ ५०१ । २० ॥ ५०४ ।
१९ ॥ ५०६ । २ ॥ ५०८ । २, ९ ॥ ५०९ । ७, ११ ॥ ५११ । १६ ॥
५१२ । ३, १५ ॥ ५१३ । १४ ॥ ५१८ । २० ॥ ५२१ । ५, १६, २२ ॥
५२३ । ७ ॥ ५२४ । ८ ॥ ५२७ । ३, १२ ॥ ५२८ । ५, १२ ॥ ५२९ ।
८ ॥ ५३१ । १३ ॥ ५३२ । १४ ॥ ५३४ । १८ ॥ ५३६ । ११, १७ ॥
५३८ । १९ ॥ ५४७ । ११ ॥ ५५३ । ४ ॥ ५५७ । १४ ॥ ५६२ । १७ ॥
५६६ । ११ ॥ ५६७ । ८ ॥ ५६९ । ७ ॥ ५७५ । १३ ॥ ५७६ । १२,
१५ ॥ ५७९ । ६ ॥ ५८० । २० ॥ ५८२ । २२ ॥ ५८६ । १ ॥ ५८७ ।
१७ ॥ ५९० । २ ॥ ५९१ । ४ ॥ ५९५ । ४ ॥ ५९८ । १३ ॥ ६०० । २ ॥
६०५ । १८, २० ॥ ६०६ । १८ ॥ ६०८ । १२ ॥ ६१० । ४, ९, २२ ॥
६१३ । ५ ॥ ६१६ । १५ ॥ ६२१ । २० ॥ ६२५ । २१ ॥ ६३१ । २० ॥
६३३ । १२ ॥ ६३४ । ९, १८ ॥ ६५२ । ४ ॥ ६६१ । ५ ॥ ६६६ ।
२१ ॥ ६७८ । ३ ॥ ६७९ । १२ ॥ ६८३ । ४ ॥ ६८४ । २, १४ ॥ ६८५ ।
१२ ॥ ६८७ । ४ ॥ ६९० । ११ ॥ ६९७ । ३ ॥ ६९८ । ११ ॥ ६९९ ।
४ ॥ ७०१ । २ ॥ ७०२ । २ ॥ ७०५ । १८ ॥ ७११ । ११ ॥ ७१२ । ६ ॥

---

## य ।

३५६ । १६ ॥ ३५७ । ४ ॥ ३५८ । १६ ॥ ३७७ । १ ॥ ३९९ । १५ ॥
४३१ । १९ ॥ ४४२ । ११, २० ॥ ४४३ । १६ ॥ ४४७ । ९ ॥ ४४८ ।
१ ॥ ४५४ । ६, ९ ॥ ४५५ । ८, ११ ॥ ४५६ । १९ ॥ ४५७ ।
१८ ॥ ४५९ । २ ॥ ४७७ । १५ ॥ ४७९ । १४ ॥ ४८१ । १३ ॥
४८२ । १६ ॥ ४८५ । ८ ॥ ४९० । २१ ॥ ४९२ । १३ ॥ ५२७ । ६ ॥
५३६ । २ ॥ ५६३ । ५ ॥ ५६५ । ६ ॥ ५६७ । १३ ॥ ६०५ । ११ ॥
६२३ । २२ ॥ ६३४ । १४ ॥ ६४६ । ३ ॥ ६५२ । ७ ॥ ६५७ । ७ ॥
६६७ । ३ ॥ ६७३ । १७ ॥ ६७७ । १५ ॥ ६७९ । ८ ॥ ६८० । २१ ॥
६९१ । १ ॥ ६९४ । ७ ॥ ७०० । १६ ॥ ७०१ । ५ ॥ ७०२ । ५ ॥
७१३ । २२ ॥ ७१४ । २० ॥ ७१६ । ३ ॥ ७२४ । १५ ॥ ७२७ । २ ॥
७२८ । ६, ९ ॥ ७३० । ८ ॥ ७४० । ८, १८ ॥ ७४७ । १६ ॥ ७६४ ।
३ ॥ ७६६ । ५ ॥ ७७८ । ३ ॥ ७७९. । १ ॥

यमदग्नि वा जमदग्नि ७४६ । ११ ॥ ७५० । २ ॥ ७५७ । १७ ॥ ७६५ । १७ ॥

याज्ञवल्क्य ६६ । ५ ॥ ११९ । १३ ॥ १४१ । १३ ॥ १४५ । ५ ॥ १४८ ।
१ ॥ १५७ । १८ ॥ १५८ । २ ॥ १६४ । १७ ॥ १७१ । १६ ॥ १७६ ।
१६ ॥ १७९ । १९ ॥ १८३ । ७ ॥ १८५ । १४ ॥ १८६ । १३ ॥ १८८ ।
१२ ॥ १९० । ३, १६ ॥ २०६ । ६ ॥ २०९ । ३ ॥ २१३ । ५ ॥ २२० ।
७, १४ ॥ २२१ । ९ ॥ २२५ । ९ ॥ २२७ । १२ ॥ २५८ । १५ ॥ २६२ ।
१४ ॥ २६६ । ३ ॥ २७० । ८, १६ ॥ २७९ । ५ ॥ २८३ । ८ ॥ २९१ ।
१८ ॥ ३०२ । १७ ॥ ३०७ । ११ ॥ ३०८ ! २१ ॥ ३१० । ३, १८ ॥
३१४ । १ ॥ ३१५ । २ ॥ ३२५ । ४ ॥ ३४९ । १७ ॥ ३५१ । १३ ॥
३५८ । १० ॥ ३७३ । २ ॥ ३८६ । ३ ॥ ३९० । ५, १७ ॥ ३९१ ।
४, ७ ॥ ३९५ । १५ ॥ ४०५ ॥ २, १२ ॥ ४०६ । ८ ॥ ४०७ ।
१९ ॥ ४१० । ६ ॥ ४१६ । ९ ॥ ४१९ । १८ ॥ ४२१ । १६ ॥
४२२ । १२ ॥ ४३१ । १ ॥ ४३७ । ८, ११ ॥ ४५२ । १५ ॥ [illegible]४ ।
१५ ॥ ४५६ । ८ ॥ ४५७ । ११ ॥ ४५८ । ३ ॥ ४५९ । ८ ॥ ४६० ।

---

## ल ।

७६१ । १३ ॥ ७६५ । १० ॥ ७७० । ६ ॥ ७८० । ९, १५ ॥ ७८४ । १३ ॥ ७९२ । ७ ॥ ७९३ । ३ ॥ ७९४ । ४ ॥

---

## व ।

वशिष्ठ वा वसिष्ठ १३६ । ११ ॥ १४२ । १४, १७ ॥ १४३ । ३ ॥ १५३ । ५ ॥ १६३ । १० ॥ १७२ । ४ ॥ १८० । १० ॥ २१५ । १९ ॥ २२४ । ११ ॥ २५२ । १२ ॥ २५४ । १० ॥ २५५ । ११ ॥ २५६ । ८ ॥ २७४ । १६ ॥ ३१५ । ७ ॥ ३८१ । ६ ॥ ४३१ । ८, १५ ॥ ४४४ । १८ ॥ ४४६ । २१ ॥ ४५८ । १७ ॥ ४५९ । २२ ॥ ४७५ । ९ ॥ ४८१ । २० ॥ ४८९ । १९ ॥ ४९२ । १७ ॥ ४९४ । १५ ॥ ५०९ । २१ ॥ ५१६ । १७, १५ ॥ ५१८ । १९ ॥ ५२६ । १६ ॥ ५२७ । २० ॥ ५७६ । ८ ॥ ५८२ । १० ॥ ५९८ । १७ ॥ ६०३ । १४ ॥ ६०७ । ५ ॥ ६१८ । १८ ॥ ६३३ । १५ ॥ ६७९ । १७ ॥ ६८४ । ७ ॥ ६९२ । १ ॥ ६९९ । १२, २० ॥ ७१२ । १० ॥ ७६० । १२ ॥ ७६८ । १७ ॥ ७८३ । १६ ॥

विश्वामित्र ८० । २ ॥ २१३ । १३ ॥ २८१ । ४, ७ ॥ ४५६ । ५ ॥ ५५० । १९ ॥ ६४९ । १६ ॥

विष्णु ७६ । १३ ॥ १३६ । १० ॥ १८० । ५ ॥ २०३ । ५ ॥ २०७ । ११ ॥ २२९ । १६ ॥ २३२ । १९ ॥ २३४ । ७ ॥ २५१ । ११ ॥ २५६ । २ ॥ २५९ । ९ ॥ २६० । १४ ॥ २६१ । १५ ॥ २७४ । ४ ॥ २९१ । ७ ॥ २९७ । ५ ॥ ३०० । ४ ॥ ३०५ । १५ ॥ ३१७ । ८, २० ॥ ३४१ । १ ॥ ३५५ । १० ॥ ३८८ । १२ ॥ ३९८ । १० ॥ ४३९ । ४, १२ ॥ ४५९ । १८ ॥ ४८४ । ८ ॥ ४९४ । १८ ॥ ५१० । ९ ॥ ५१२ । १९ ॥ ५२९ । ६ ॥ ५३० । १२ ॥ ५४६ । १ ॥ ५५६ । १३ ॥ ५७९ । २० ॥ ५८८ । १३ ॥ ५९८ । ५ ॥ ५९९ । २ ॥ ६०२ । १० ॥ ६०५ । ६ ॥ ६०७ । ४ ॥ ६०९ । ४ ॥ ६१० । ३, १६ ॥ ६११ । ५ ॥ ६१२ । १७ ॥ ६१५ । २० ॥ ६२० ।

२८० । ११ ॥ २८२ । २, ६ ॥ २८५ । १७ ॥ २८८ । १५ ॥ २६३ । ४ ॥ ३०३ । १५ ॥ ३०४ । १२ ॥ ३०७ । ८ ॥ ३१६ । १ ॥ ३२४ । १२ ॥ ३३७ । १७ ॥ ३३६ । २० ॥ ३४४ । १४ ॥ ३५१ । २ ॥ ३६१ । २२ ॥ ३६३ । १४ ॥ ३६५ । ५ ॥ ३६६ । ३, ११ ॥ ३७८ । १४ ॥ ३८२ । ५ ॥ ४४० । ५ ॥ ४५२ । १६ ॥ ४५५ । २० ॥ ४७० । २ ॥ ५०४ । १६ ॥ ५०५ । १५ ॥ ५१६ । १५ ॥ ५५० । १० ॥ ५५२ । २० ॥ ५५६ । १५ ॥ ५८३ । १५ ॥ ५८६ । १० ॥ ५६३ । ७ ॥ ६२७ । २० ॥ ६५३ । ७ ॥ ६७३ । २२ ॥ ७०६ । १७ ॥ ७४५ । १८ ॥ ७५० । १२ ॥ ७५२ । ३ ॥ ७६० । १० ॥ ७६४ । १४ ॥ ७६६ । ६ ॥ ७६० । १२ ॥

---

## घ्रा ।

घ्राण २२१ । ६ ॥ २२६ । १५ ॥ २३६ । १२ ॥ २३७ । १३ ॥ २४८ । १०, १६ ॥ २५५ । ३ ॥ २६४ । २ ॥ २६५ । १८ ॥ २७५ । ६ ॥ २८० । ८ ॥ २८३ । ११ ॥ ३०१ । १३ ॥ ३६४ । १७ ॥ ३७४ । ११ ॥ ४३८ । १६ ॥ ४४० । १५ ॥ ४४१ । ४ ॥ ४४३ । ३, १६ ॥ ४४६ । २० ॥ ४६७ । १८ ॥ ५१३ । १ ॥ ५६६ । १ ॥ ५६७ । ६ ॥ ५६८ । २१ ॥ ६०० । ७ ॥ ६०६ । १३ ॥ ६०६ । १ ॥ ६११ । ११ ॥ ६२३ । ६ ॥ ६२५ । ७ ॥ ६४५ । २ ॥ ६४८ । ५ ॥ ६५२ । १३ ॥ ६५३ । १० ॥ ६६६ । १५ ॥ ६८१ । २१ ॥ ६६६ । १८ ॥ ७०४ । ६ ॥ ७१० । ३ ॥ ७१३ । १६ ॥ ७१४ । १६ ॥ ७२२ । १८ ॥ ७३१ । २ ॥ ७४८ । १८ ॥ ७४६ । १३ ॥ ७६६ । १३ ॥ ७७७ । १० ॥ ७८६ । २ ॥

घ्राणलिखित १८१ । ६ ॥ २२१ । ३ ॥ ३१६ । १२ ॥ ४४२ । ६ ॥ ४५६ । १ ॥ ४६६ । १७ ॥ ४६७ । १८ ॥ ५२७ । १५ ॥ ५८३ । ३ ॥ ६२४ । १,४ ॥ ७४७ । १० ॥

घ्राणमु ७२५ । ४ ॥ ७२६ । ३ ॥

---

## स ।

४८२ । २, १६ ॥ ४८७ । १३ ॥ ५८२ । १३ ॥ ६१८ । २१ ॥ ६४५ । १८ ॥

सांख्यायन २०६ । १३ ॥

---

## ह ।

हारीत १३४ । १ ॥ १४४ । १ ॥ १४५ । २ ॥ १५१ । ३ ॥ १५३ । ७ ॥ २१२ । ६ ॥ २२४ । १० ॥ २२० । १७ ॥ २३५ । ६ ॥ २३७ । ३, १० ॥ २७२ । २ ॥ २७४ । ३ ॥ २८४ । १२ ॥ २६४ । १० ॥ ३०३ । ६, १३ ॥ ३१० । २१ ॥ ३१७ । ११ ॥ ३२२ । १८ ॥ ३२५ । ७ ॥ ३४१ । ७ ॥ ३६३ । ८ ॥ ३८७ । १ ॥ ४२७ । १४ ॥ ४२८ । १० ॥ ४३३ । ११ ॥ ४३६ । १५ ॥ ४३८ । २२ ॥ ४३६ । १६ ॥ ४५२ । १२ ॥ ४५४ । १८ ॥ ४५६ । १ ॥ ४६१ । ७, १३ ॥ ३७८ । ६ ॥ ४८५ । ४ ॥ ५०४ । १४ ॥ ५४३ । ६ ॥ ५४७ । २ ॥ ५५२ । २, १२ ॥ ५७६ । ७ ॥ ५६६ । १५ ॥ ६११ । ८ ॥ ६१७ । ३ ॥ ६२३ । ६ ॥ ६३१ । ६ ॥ ६३४ । २१ ॥ ६३८ । १६ ॥ ६७५ । ६ ॥ ६८२ । ७ ॥ ६६६ । १३ ॥ ७११ । १० ॥ ७६६ । १३ ॥ ७७२ । ७ ॥

---

# पराशरमाधवोल्लिखितानां दार्शनिकाना-मकारादिक्रमेण प्रज्ञापनपत्रम् ।

(आचारकाण्डस्य)



## आ ।



## ज ।



## त ।



## प ।



## भ ।



## म ।



## व ।

# पराशरमाधवोल्लिखितनिबन्धकर्तृणामकारादिक्रमेण प्रज्ञापनपत्रम् ।

( आचारकाण्डस्य )



## द ।

देवस्वामी ६७१ । ११ ॥ ६७३ । १९ ॥ ६८७ । ८ ॥ ७६९ । ५ ॥

---

## स ।

संग्रहकार २८५ । ७ ॥ ४४९ । ४ ॥ ४८२ । १० ॥ ५८५ । ६ ॥ ६०६ । १० ॥ ६८९ । ७ ॥ ७३० । ११ ॥

# पराशरमाधवोल्लिखितानां प्रवचनानामकारादिक्रमेण प्रज्ञापनपत्रम् ।

(आचारकाण्डस्य)



## आ ।



---

## उ ।



---

## क ।



---

## छ ।

---

## ज ।



---

## त ।



---

## प ।



---

## ब ।



---

## म ।

---

## य ।



---

## व ।



---

## श ।



---

# पराशरमाधवोल्लिखितानामनिर्दिष्टप्रवचनानां श्रुतीनां प्रज्ञापनपत्रम् ।

( आचारकाण्डस्य )



## म ।

मन्त्र वा मन्त्रवर्ण १९६ । ९, १२ ॥ ४७१ । ६ ॥ ५०१ । १६ ॥ ५२५ । ९ ॥

---

## श्र ।

श्रुति ६ । १ ॥ १० । ५, १० ॥ ११ । ४ ॥ ३४ । ५ ॥ ३५ । ८ ॥ ४२ । १३ ॥ ४३ । ४, ९ ॥ ४४ । ५ ॥ ४५ । ३ ॥ ४७ । १२ ॥ ४८ । ६ ॥ ५२ । १३, १७ ॥ ५९ । १३ ॥ ६१ । १३ ॥ ६२ । ५ ॥ ६८ । ८ ॥ ८२ । ६ ॥ ८८ । १३ ॥ ९२ । ९, ११ ॥ ९३ । ६, १२ ॥ ९५ । ३, ७, १५ ॥ ९६ । ७, १२ ॥ ९७ । ३ ॥ १०५ । ६ ॥ १०८ । ७ ॥ १०९ । ७ ॥ ११९ । ५ ॥ १३० । १०, ११ ॥ १३७ । ४ ॥ १३८ । १ ॥ १४१ । २ ॥ १५१ । १० ॥ १५२ । ६ ॥ १५४ । १४, १६ ॥ १६२ । ९, १२ ॥ १६४ । ७, ८ ॥ १८२ । १२ ॥ १९१ । १ ॥ १९२ । ११ ॥ १९५ । ६ ॥ १९७ । १४ ॥ १९८ । ४ ॥ १९९ । ४, ७, १० ॥ २०१ । ६ ॥ २०५ । ७, ११ ॥ २७४ । १० ॥ २७६ । १६ ॥ २८७ । ८ ॥ ३११ । १७ ॥ ३१२ । ५ ॥ ३१३ । ४ ॥ ३१४ । १२, १८, १९ ॥ ३३६ । ४ ॥ ३३७ । १३ ॥ ३४२ । १३ ॥ ३४३ । १९ ॥ ३४७ । १ ॥ ३४८ । ७ ॥ ३५३ । १६ ॥ ४६६ । १८ ॥ ४७२ । २ ॥ ४७३ । १० ॥ ४९८ । १२ ॥ ५०० । १२ ॥ ५०१ । १३ ॥ ५०२ । ३ ॥ ५२२ । ८ ॥ ५२५ । ६, ७ ॥ ५२८ । १० ॥ ५३३ । ५ ॥ ५३५ । ५, २२ ॥ ५३८ । २२ ॥ ५४८ । १, १० ॥ ५५१ । ११, १२ ॥ ५५५ । २ ॥ ५५८ । ९ ॥ ५७० । १९ ॥ ५७५ । ५ ॥ ५९२ । १६ ॥ ६६० । १ ॥ ७१५ । २१ ॥ ७७३ । १ ॥

---

